# षट्चक्रनिरुपणम्।

## सटीकम्।

श्रीपूर्णानन्दयतिविरचितम्।

रैक्क ( रायकवाल ) लल्लुरामतनुजनुषा

जीवरामशास्त्रिणा

संशोधितम्।



इदं च

पण्डित ज्येष्ठाराम मुकुन्दजी शर्मणा

प्रकाशितम्।

स्था. कालिकादेवी रोड नं. ३९३ झवेरबाग, मुंबई

संवत् १९५६ सन् १८९९.

मौल्य रु. ०-८-०

# षट्चक्रनिरूपणम्।



अथ तन्त्रानुसारेण षट्चक्रादिक्रमोद्गतः।
उच्यते परमानन्दनिर्वाहप्रथमाङ्कुरः॥

महायोगज्ञानात् परिचितषडम्भोजविभवः स एवान्तस्तत्त्वप्रकटनसमर्थो न हि परः। बुधश्रेष्ठो ज्येष्ठोऽप्यमिलितकृपानाथकरुणः षडब्जान्तस्तत्त्वं परमविभवं प्रस्फुटयतु। अथ दुःखपङ्कमग्नं जगदुद्दिधीर्षुः परमकारुणिकः पूर्णानन्दस्वामी मुक्तिसम्पादकतत्त्वज्ञानसिद्ध्ये षट्चक्रे कुण्डलिनीयोगं वक्तुमिच्छन् साधकावधानाय प्रतिजानीते अथेति। अथानन्तरं स्वकृतश्रीतत्त्वचिन्तामण्यां षट्चक्रनिरूपणात् पूर्वप्रदर्शिततत्तत्कर्म्मकथनान्तरमित्यर्थः। अस्यार्थः परमानन्दनिर्व्वाहप्रथमाङ्कुरः उच्यते इत्यन्वयः। परमानन्दो ब्रह्म "नित्यं परमानन्दं ब्रह्म" इति श्रुतेः। तस्य निर्व्वाहस्तत्साक्षात्काररूपनिष्पत्तिः तस्मै प्रथमाङ्कुरस्तत्कारणभूतप्रथमप्रकाशमानकर्म्मस्वरूपः मया पूर्णानन्देनोच्यते इत्यर्थः। सोऽङ्कुरः किम्भूतः? तन्त्रानुसारेण षट्चक्रादिक्रमोद्गत इति। तन्त्रानुसारेण तन्त्रमतेन षट्चक्रादीनां मूलाधारस्वाधिष्ठानमणिपूरकानाहतविशुद्धाज्ञाख्यानाम् आदिना तत्सम्बन्धिनाडीलिङ्गव्योमपञ्चकशिवशक्त्यादीनां च यः क्रमः तच्चिन्तनकुण्डलिन्युत्थापनब्रह्मपद्मगमना-

**मेरोर्बाह्यप्रदेशे शशिमिहिरशिरे सव्यदक्षे निषण्णे मध्ये नाडी सुषुम्णा त्रितयगुणमयी चन्द्रसूर्य्याग्निरूपा । धुस्तूरस्मेरपुष्पग्रथिततमवपुःस्कन्धमध्याच्छिरःस्था वज्राख्या मेढ्रदेशाच्छिरसि परिगता मध्यमे स्याज्ज्वलन्ती ॥ १ ॥**

गमनाशिवशक्तिमेलनादिविधानानुपूर्विकरूपः क्रमः तेनोद्गतः प्राप्तः योगसाधनाद्यभिन्न इत्यर्थः । ततश्च तन्त्रविहितषट्चक्रघटितयोगसाधना—भिन्नब्रह्मसाक्षात्कारादिकारणीभूत—कर्म्मस्वरूपोऽङ्कुरो मया उच्यते इति समुदायानुगततात्पर्य्यार्थः ॥

अथ तादृशवक्ष्यमाणयोगः षट्चक्रनाड्योर्ज्ञानं विना न सम्भवतीत्यतः प्रथमं तदुपयुक्तनाड्यो निरूप्यन्ते मेरोरित्यादि त्रिभिः श्लोकैः । मेरोर्मेरुदण्डस्य स च दण्डो मूलावधिग्रीवापर्यन्तव्यापकपृष्ठास्थि इति स्फुटीकरिष्यामः । तद्बाह्यप्रदेशे शशिमिहिरशिरे इति । शशी चन्द्रः मिहिरः सूर्य्यः शिरा नाडी ततश्च चन्द्रसूर्य्यस्वरूपिण्यौ द्वे नाड्यौ इडापिङ्गलाख्यौ सव्यदक्षे वामदक्षिणे निषण्णे स्थिते इत्यर्थः । तदाह भूतशुद्धितन्त्रे । मेरोर्वामे इडा दक्षे पिङ्गला च स्थिते उभे इति । अनयोश्चन्द्रसूर्य्यस्वरूपत्वमाह सम्मोहनतन्त्रे । वामगा या इड़ा नाड़ी शुक्ला चन्द्रस्वरूपिणी । शक्तिरूपा हि सा देवी साक्षादमृतविग्रहा । दक्षे तु पिङ्गला नाम पुरुषा सूर्य्यविग्रहा । रौद्रात्मिका महादेवी दाडिमी केशरप्रभा ॥ इति । इमे नाड्यौ मूलादृजुरूपेणाज्ञाचक्रान्तं प्राप्य नासारन्ध्रगते । तदुक्तं यामले, इड़ा च पिङ्गला चैव तस्य वामे च दक्षिणे । ऋज्वीभूते शिरे ते च वामदक्षिणभेदतः । सर्वपद्मानि संवेष्ट्य नासारन्ध्रगते शुभे । अत्र शिरे ते च इत्यत्र चकारो वार्थः

तेन सर्वपद्मानि संवेष्ट्य वामदक्षिणभेदतः । वामदक्षिणभेदेन वेणीबन्धक्रमेण सर्वपद्मानि संवेष्ट्य वा नासारन्ध्रगते इत्यर्थः । एतेनानयोः स्थित्यां द्विविधः कल्पो दर्शितः । अन्यत्रानयोर्धनुराकारेण स्थितिरुक्ता तद्यथा । विद्धि ते धनुराकारे नाडीडापिङ्गले परे इति । धनुराकारप्रकारमाह । या वाममुष्कसम्बन्धा सा श्लिष्यन्ती सुषुम्णया । दक्षिणं जत्रुमाश्रित्य धनुर्वक्रा हृदि स्थिता । वामांशजत्र्वन्तरगा दक्षिणं नासिकामियात् । जत्रु स्कन्धभुजयोः सन्धिः । तथा दक्षिणमुष्कोत्था नासाया वामरन्ध्रगेति । वामदक्षिणमुष्कोत्थिते ते भ्रूमध्यपर्य्यन्तं प्राप्य तत्र इडा पिङ्गला सुषुम्णा नाडीत्रयाणां त्रिवेणीरूपेण ग्रन्थिभावमापन्ना नासारन्ध्रमिलितेत्यर्थः । तदुक्तम् । इडायां यमुना देवी पिङ्गलायां सरस्वती । सुषुम्णायां वसेद् गङ्गा तासां योगस्त्रिधा भवेत् । सङ्गता ध्वजमूले च विमुक्ता भ्रूवियोगतः । त्रिवेणीयोगः सा प्रोक्ता तत्र स्नानं महाफलमिति । मध्ये इति मेरुदण्डमध्यरन्ध्रे इत्यर्थः । तदुक्तम् । मेरुमध्ये स्थिता या तु मूलादाब्रह्मरन्ध्रगेत्यादि । तथा त्रिपुरासारसमुच्चये । या मुण्डाधारदण्डान्तरविवरगतेत्यादि । अत्र यद्यपि मेरोर्वामे स्थिता नाडी इडा चन्द्रामृता शिवे । दक्षिणे सूर्य्यसंयुक्ता पिङ्गला नाम नामतः । तद्बाह्ये तु तयोर्मध्ये सुषुम्णा वह्निसंयुतेति तन्त्रचूडामणिवचने सुषुम्णाया मेरोर्बाह्यस्थितिः प्रतीयते तथापि तद्वचनं मतभेदेन, ग्रन्थकारमते तु मेरुमध्यान्तरस्थान् सकलसरसिजानित्युत्तरश्लोके षट्पद्मानां मेरुमध्यरन्ध्रस्थत्वकथनेन तदाधारभूतायाः सुषुम्णाया मेरुमध्यरन्ध्रस्थत्वम् । त्रितयगुणमयीति । त्रितयं गुणं सुषुम्णा वज्रा चित्रिणीति रूपभेदेन त्रिसूत्ररूपं तदात्मिकेत्यर्थः । अथवा त्रितयगुणं सुषुम्णादिनाडीत्रयमपेक्ष्य इयमेकैयमेकैयमेकेति त्रितयावर्त्तनं यत्र

सा त्रितयगुणा तन्मयीत्यर्थः, यद्वा त्रितयगुणाः सत्त्वरजस्तमोगुणा यस्यां तन्मयीत्यर्थः। ततश्च चित्रिणी सत्वगुणमयी वज्रा रजोगुणमयी सुषुम्णा तमोगुणमयीति। चन्द्रसूर्य्याग्निरूपेति चित्रिणी चन्द्ररूपा तेन शुक्लवर्णा वज्रिणी सूर्य्यरूपा तेन दाडिमीकेशरप्रभा सुषुम्णा वन्हिरूपिणी तेन रक्तवर्णा इति। एतत् त्रिविधाख्यानप्रमाणमाह सुषुम्णालक्षणमभिधाय भूतशुद्धौ। तदन्तर्द्व्यङ्गुलोर्द्ध्वे तु वज्राख्या चित्रिणी तथा। अतः सुषुम्णा त्रिगुणा ललन्ती ललना यथा। सत्त्वादित्रिगुणाधारा चन्द्रसूर्य्याग्निरूपिणीति। कन्दमध्याच्छिरःस्था इति। कन्दः सर्वनाडीनां मूलं तल्लक्षणमाह। गुदात्तु द्व्यङ्गुलादूर्द्ध्वं मेढ्रात्तु द्व्यङ्गुलादधः। चतुरङ्गुलविस्तारं कन्दमूलं खगाण्डवत्। नाड्यस्तस्मात् समुत्पन्नाः सहस्राणां द्विसप्ततिरिति। तद्रूपकन्दमारभ्य शिरःस्था शिरःस्थिताधोमुखसहस्रदलकमलकर्णिकावर्त्तिद्वादशदलपङ्कजाधःपर्य्यन्तस्थितेत्यर्थः। कुण्डलीविवरकाण्डमण्डितं द्वादशार्णं सरसीरुहं भजे इति गुरुपादुकास्तोत्रस्वरसात् कुण्डलीविवरकाण्डरूपायाश्चित्रिणी नाड्याः तदवधिकत्वे तदधिकरणसुषुम्णाया अपि तदवधिकत्वम्। अन्यथा सहस्रदलोर्ध्वपर्य्यन्तस्थायित्वे सहस्रदलपद्मस्थं चत्वारिंशत्श्लोके शून्यदेशे विकाशमित्यनेन शून्यदेशे स्थायित्वानुपपत्तेः। सुषुम्णावृतत्वे शून्यदेशत्वाभावात्। अत्र केचित् मेरोर्मध्यपृष्ठगतास्तिस्रो नाड्यः प्रकीर्त्तिता इति निगमतत्त्वसारवचनं प्रमाणं दर्शयित्वा इडा पिङ्गला सुषुम्णेति तिसृणां नाडीनां मेरुमध्यस्थितिं वदन्ति। तत्र इडापिङ्गलयोर्मेरुबहिःस्थिते सर्वतन्त्रवचनसिद्धत्वात् ग्रन्थकारेणापि मेरोर्बाह्यप्रदेशे इत्यनेन तयोर्बहिःस्थिते स्पष्टमुखेनाभिधानाच्च।

किञ्च इड़ापिङ्गलयोर्मेरुमध्यस्थत्वे धनुराकाराभङ्ग्या हृदयात् जत्रुसंलग्नत्वं न सम्भवति । निगमसारतत्त्ववचने तिस्रो नाड्य इति सुषुम्णा वज्रा चित्रिणीति तिस्रः न त्विडापिङ्गलयो-स्तदन्तर्भावः । अत्र सुषुम्णाया मूलादिमस्तकपर्य्यन्तस्थिति-प्रकारमाह । सुषुम्णा कव्यवल्लीव मेरुश्लिष्टा पुरोगता । ग्रीवा-न्तं प्राप्य गलिता तिर्य्यग्भूता वरानने । शङ्खिनी नालमाल-म्ब्य गता सा ब्रह्मसादनमिति । तथान्यत्र चापाकारि स्थिते चान्ये सुषुम्णा प्रणवाकृतिः । पृष्ठास्थ्नो घुण्टितो भिन्ना तिर्य्यग्भूता ललाटगा भ्रूमध्ये कुण्डलिलग्ना मुखेन ब्रह्मरन्ध्रगा इति । गलिता मेरुदण्डान्निःसृता । तथा घुण्टितो भिन्ना इत्यस्याप्ययमर्थः । एतेन मेरुदण्डस्य ग्रीवापर्य्यन्त-स्थितिः प्रतीयते । शङ्खिनी नालमालम्ब्येति । शङ्खिनी लक्षणमाह । ईश्वर उवाच । सरस्वती कुहुश्चैव सुषुम्णा पार्श्वयोः स्थिते । गान्धारी हस्तिजिह्वा च इड़ायाः पूर्व-पार्श्वयोः । गान्धारायाः सरस्वत्या मध्ये प्रोक्ता च शङ्खिनी । तथा । शङ्खिनी नाम सा नाडी सव्यकर्णान्तमिष्यते । तथा-न्यत्र शङ्खिनी कण्ठविवरात् तिर्य्यग्भूता ललाटगा । चित्रिणी सङ्गता श्लिष्टा यावच्छिरसमम्बिके इति । ततश्च सरस्वती-गान्धार्य्योर्मध्ये कन्दमूलमारभ्य कण्ठपर्य्यन्तं गता वक्रगत्या एकाग्रेण वामकर्णरन्ध्रमिलिता अपराग्रेण मस्तकान्तं प्रा-प्नोति । अत्र केचित् । पादादिब्रह्मरन्ध्रान्तं यदस्थिकीलको-पमम् । चतुर्दशानां लोकानां मेरुदण्डः प्रचक्षते । इति निगमतत्त्वसारवचनं प्रमाणं दर्शयित्वा पदादिब्रह्मरन्ध्रपर्य्यन्तं मेरुदण्डस्य स्थितिमाहुस्तच्चिन्त्यम् । यः पृष्ठदण्डः स एव

तन्मध्ये चित्रिणी सा प्रणवविलसिता योगिनां योगगम्या लूतातन्तूपमेया सकलसरसिजान् मेरु-

मेरुदण्डस्तस्य मूलकन्दादूर्ध्वावधि ग्रीवापर्य्यन्तं स्थितेः प्रत्यक्ष-सिद्धत्वेन प्रत्यक्षसिद्धवस्तुनो वचनमन्यथा कर्त्तुं न शक्यते । किञ्चाखण्डैकास्थ्नो मेरुदण्डस्य पादादिस्थितत्वे पादयोराकु-ञ्चनप्रसारणादिक्रिया न स्यात् तस्मान्मूलोर्ध्वावधिरेव मेरु-दण्डः । निगमतत्त्वसारवचनस्य त्वयमर्थः । पादादिब्रह्मरन्ध्रपर्य्यन्तं शरीरमधिकृत्य यदस्थिकीलकोपमं कीलकवद्धारकमिति मेढ्रदेशा-न्मूलकन्दाद् द्व्यङ्गुलोर्ध्वावधि । तदुक्तं भूतशुद्धौ । तन्मध्ये द्व्य-ङ्गुलोर्ध्वे तु वज्राख्या चित्रिणी तथेति ॥ १ ॥

तन्मध्ये इति । वज्रामध्ये इत्यर्थः । प्रणवविलसिता आज्ञा-चक्रावच्छेदे तन्मध्ये प्रणवप्रकाशेन प्रकृष्टोद्दीप्यमाना अत एव ग्रन्थकारेण षट्त्रिंशत्श्लोके तदनु च नवीनार्कबकुल-प्रकाशं ज्योतिर्वा गगनधरणीमध्यमिलितामित्युक्तम् । लूतातन्तूप-मेया मर्कटसूत्रतुल्यसूक्ष्मा तद्ग्रथनरचनया भित्त्वा देदीप्यते इति । षट्पद्मानि कर्णिकावच्छेदे भित्त्वा मणिग्रथनवत् ग्रथनरचनया देदीप्यते इत्यर्थः । यत्तु चित्रिणीशून्यविवरे संजाताम्भोरुहाणि षट् । तत्पत्रेषु महादेवी भुजङ्गी विहरन्ति च इति कल्पसूत्रचतु-र्थकाण्डीयवचनं तत् एकवचनान्तभुजङ्गीकर्त्र्या बहुवचनान्तविह-रन्तिक्रियान्वययोगादमूलम् । समूलत्वेऽपि तस्यायमर्थः विहरन्ती-ति शिवोक्तत्वात् एकवचनार्थे बहुवचनम् । चित्रिणीरन्ध्रविवरे इति करणार्थविषयाधारे सप्तमी । ततश्च भुजङ्गी कुण्डलिनी महादेवी

**मध्यान्तरस्थान् । भित्वा देदीप्यते तद् ग्रथनरचनया शुद्ध-बोधस्वरूपा तन्मध्ये ब्रह्मनाड़ी हरमुखकुहरादादिदेवा न्तसंस्था ॥ २ ॥**

चित्रिणी शून्ये चित्रिणीनाड्या मध्यरन्ध्रे यत् विवरम् इतस्ततो वहिर्गमनपथः तेन पथा चक्रभेदक्रमेण षडम्भोरुहाणि संजाता सम्प्राप्ता सती तत्पत्रेषु विरहति दीप्यते इत्यर्थः । यद्वा यानि षड्म्भोरुहाणि सुषुम्णान्तराले विहरन्ति प्रकाशन्ते भुजङ्गी चित्रिणी रन्ध्रविवरेण तत्पत्रेषु सती अनन्तरं सहस्रदले विहरतीति । न तु तद्वचनात् षट्पद्मानां चित्रिणीविवरे स्थितिः प्रतीयते । तन्मध्ये चित्रिणीमध्ये । ब्रह्मनाडीति । अत्र नड़गताविति धातोर्नड्यते गम्यतेऽनया पदव्या इति नाडी पदवी ब्रह्मणो नाड़ीति व्युत्पत्या ब्रह्मनाडी ब्रह्मपदवी शुद्धब्रह्मरूपायाः कुण्डलिन्याः परमशिवसन्निधिगमनपथरूपचित्रिणीनाड्यन्तर्गतशून्यभाग इति यावत् । न तु चित्रिणीमध्ये नाड्यन्तरमस्तीति निष्कर्षः हरमुखकुहरात् स्वयम्भुलिङ्गच्छिद्रात् आदिदेवः सहस्रदलकमलकर्णिकामध्यस्थपरं विन्दुरन्यत् सुगमम् ॥ २ ॥

श्लोकान्तरेण तां विशेषयति विद्युन्मालेति । लसतत्तन्तुरूपेति । लसन्ती दीप्यमाना तन्तुरूपिणी अब्जतन्तुसदृशी कुण्डलिनी यत्र सेत्यर्थः सकलसुखमयी सर्वानन्दमयीत्यर्थः । शुद्धबोधस्वभावेति शुद्धबोधाय तत्त्वज्ञानाय स्वस्य आत्मनो भावो भावना यत्रेत्यर्थः । तदास्ये ब्रह्मनाड्याः आस्ये हरमुखकुहरे ब्रह्मद्वारं कुण्डलिन्याः शिवसन्निधिगमनाय प्रवेशनिर्गमपथरूपामित्यर्थः । सुधाधारगम्यप्रदेशमिति । सुधाधारः परमशिवशक्तिः सामरस्य निःसृतामृतधारो गम्यते मूलाधारस्थशिवशक्तिभ्यां लभ्यते येन

विद्युन्माला विलासा मुनिमनसि लसत्तन्तुरूपा सुसू-
क्ष्मा शुद्धज्ञानप्रबोधा सकलसुखमयी शुद्धबोधस्वभावा।
ब्रह्मद्वारं तदास्ये प्रविलसति सुधाधारगम्यप्रदेशं ग्रन्थि-
स्थानं तदेतद्वदनमिति सुषुम्णाख्यनाड्या लपन्ति॥ ३ ॥

द्वारेण तद्रूपप्रदेशमित्यर्थः। तदेतदिति तस्य द्वारस्य एतत् समी-
पवर्त्तिप्रदेशं सुषुम्णाया ग्रन्थिस्थानं कन्दसुषुम्णयोः सन्धिस्थानं
सुषुम्णाया वदनञ्च इति लपन्ति आगमज्ञा वदन्ति इति समुदा
यार्थः ॥ ३ ॥

नाडीं निरूप्य अङ्गप्रत्याङ्गादिसहितं मूलाधारचक्रं निरूप्यते
अथाधारपद्ममिति नवभिः श्लोकैः। सुषुम्णास्यलग्नं चतुःपार्श्वे कन्दसु-
षुम्णयोः सन्धिस्थानसंलग्नपत्रमित्यर्थः। ध्वजाधो गुदोर्द्ध लिङ्गमूला-
दधोऽवधि सुषुम्णापर्य्यन्तमित्यर्थः। चतुःशोणपत्रं रक्तवर्णचतुर्दलम्।
वकारादिसान्तैः वशषस इति वेदवर्णैर्युतम्। अत्र षट्चक्रेषु पद्मा-
नां दलावच्छेदे दक्षिणावर्त्तेन वर्णयोगश्चिन्तनीयः। तदुक्तं विश्वसार-
तन्त्रे। सर्ववर्णात्मकं पत्रं पद्मानां परिकीर्त्तितम्। दक्षिणावर्त्तयोगेन
लिखनं चिन्तयेद्धियेति ॥ ४ ॥

अमुष्मिन् धरायाश्चतुःकोणचक्रमिति। एतत् पद्मकर्णिकायां
चतुष्कोणरूपं पृथ्वीमण्डलं समास्ते इत्यर्थः। मण्डलं विशेषयति
समुद्भासीत्यादि। तस्य मण्डलस्याष्टदिक्षु प्रकाशमानाष्टशूलैर्युक्त-
म् एतन्मण्डलं पीतवर्णं स्पष्टमाह। मूलाधारे धराचक्रं चतुष्कोणं
प्रियंवदे। पीतवर्णं परिवृतञ्चाष्टशूलैः कुलाचलैरिति। शूलैः कीदृशैः
कुलाचलैरिति कामिन्याः स्तनसदृशाग्रैरित्यर्थः। यद्वा कुलाच-
लैरिति नीलाचलं मन्दरञ्च पर्वतं चन्द्रशेखरम्। हिमालयं सुवेलञ्च-

**अथाधारपद्मं सुषुम्नास्यलग्नं ध्वजाधो गुदोर्द्धं चतुःशोणपत्रम् । अधोवक्त्रमुद्यत्सुवर्णाभवर्णैर्वकारादिसान्तैर्युतं वेदवर्णैः ॥ ४ ॥**

**अमुष्मिन् धरायाश्चतुष्कोणचक्रं समुद्भासि शूलाष्टकैरावृतं तत् । लसत्पीतवर्णं तडित्कोमलाङ्गं तदङ्के समास्ते धरायाः स्वबीजम् ॥ ५ ॥**

मलयश्च सुपर्वतम् । चतुष्कोणे वसेद्देवि एतत् सप्त कुलाचलमिति निर्वाणतन्त्रवचनात् यथा पृथ्वीमध्ये सप्त कुलाचलास्तथाताष्टशूलानि कुलाचलसदृशानि इति भावः । तदन्ते इति तस्य धरामण्डलस्य अन्ते मध्ये धरायाः स्वबीजं णकारं समास्ते । एतद् बीजमपि पीतवर्णं तद् यथा वीजं तन्मध्यतश्चैन्द्रं पीतवर्णं चतुर्भुजम् वज्रहस्तं महाबाहुमैरावतगजास्थितम् इति तेन लसत्पीतवर्णमित्युभयसम्बन्धः ॥ ९ ॥

धराबीजध्यानमाह चतुरित्यादि । यदेव धराबीजं तदेवैन्द्रबीजमित्यविरुद्धम् । तदङ्के इति धराबीजस्याङ्के सृष्टिकारी ब्रह्मा वसेदित्यन्वयः । तदङ्के धराबीजस्य बिन्दुमध्ये इति बोध्यम् । तदुक्तं मूलाधारे धराबीजं तद्बिन्दौ ब्रह्मणः स्थितिः । तदङ्के शिशुरूपस्य गजारूढोऽमराधिप इति । शिशुरूपस्य ब्रह्मणः स्थितिरित्यन्वयः तदङ्के धराबीजक्रोड़े अमराधिप इति तु मतान्तरम् । स्वमते धराबीजैन्द्रबीजयोरभेदात् मन्त्राणां देवता प्रोक्ता देवता मन्त्ररूपिणीति वचनाच्च तयोरभेदवर्णनम् । निर्वाणतन्त्रे । ऐन्द्रबीजं वरारोहे लिङ्गस्य वामदेशके । सुसिध्धं ब्रह्मसदनं नादोपरि सुसुन्दरम् । तत्रैव निवसेद् ब्रह्मा सृष्टिकर्त्ता प्रजापति-

**चतुर्बाहुभूषं गजेन्द्राधिरूढं तदङ्के नवीनार्कतुल्यप्रकाशः। शिशुः सृष्टिकारी लसद्वेदबाहुर्मुखाम्भोजलक्ष्मीश्चतुर्भागभेदः ॥ ६ ॥**

रिति। अत्र धराबीजस्योर्द्धे नादोपरि ब्रह्मस्थितिकथने नादोर्द्धे बिन्दुमध्ये स्थितिरगम्य लिङ्गस्य वामदेशके इति मतान्तरम्। अतएव सारदायाम् आधारांश्च विदुस्तत्र मतभेदादनेकधेत्युक्तम्। स किंभूतः लसद्वेदबाहुरिति। अत्र केचित् ब्रह्मणो द्विभुजदर्शनेन लसद् बाहुवेदाः सामवेदादयो बाहौ यस्येति व्युत्पत्तिं कृत्वा तदेव संस्थापयति तत्र ब्रह्मणो हस्ताभ्यां वेदधारणस्य कुत्राप्यदर्शनात्। किन्त्वत्र ब्रह्मा चतुर्भुजत्वेनैव ध्येयः तथा स्पष्टमाह भूतशुद्धौ। तदङ्के च चतुर्बाहुं रक्तवर्णं शिशुं शिवे। चतुर्वक्त्रं हंसपृष्ठे ब्रह्माणं विद्धि पार्वतीति। मुखाम्भोजलक्ष्मीश्चतुर्भागभेदः इति अस्य ब्रह्मणश्चतुर्भिर्भागैर्यो भेदः अवयवेषु विशेषः सैव मुखाम्भोजलक्ष्मीरित्यर्थात् ब्रह्मणश्चतुर्मुखत्वमायातम्। यद्वा मुखे अम्भोजलक्ष्मीर्यस्य तथा चतुर्भिर्भागैः अर्थात् मुखावच्छेदे भेदो यस्येति विशेषणद्वयम्। चतुर्भागवेद इति पदे अभेदरूपेण पूर्वप्रकारार्थः। अत्र ब्रह्मणो हस्तेऽस्त्रानभिधानेऽपि दण्डकमण्डलुधराम् अक्षसूत्राभयं तथा। ध्यायेत् तां रक्तवर्णाञ्च ब्राह्मीं कृष्णाजिनोज्ज्वलामिति विश्वसारतन्त्रोक्तब्राह्मीध्याने ब्रह्मशक्तिहस्ते दण्डकमण्डल्वक्षसूत्राभयदर्शनादत्रापि तथा कल्प्यते यस्य देवस्य यद्रूपमित्यादिना सप्तसतीस्तोत्रे शिवशक्त्योरेकास्त्रदर्शनात् इति वदन्ति। वस्तुतस्तु अभयवरदहस्तं कुण्डिकामक्षमालां दधतममलभूषं चिन्तयेदादिमूर्तिमिति यामलोक्तकर्मान्तरीयध्यानप्राप्ताभयवरादीनि ध्येयानि स्पष्टमन्यत् ॥ ६ ॥

आधारपद्मे डाकिनीशक्तिस्थितिमाह वसेदिति। अत्र पद्मे डाकिनीनाम्नी देवी वसेदित्यन्वयः। सा किंभूता सदा सर्वस्मिन् काले शुद्धबुद्धस्तत्त्वज्ञानस्य प्रकाशं वहन्ती तत्त्वज्ञानसम्पादयित्री-त्यर्थः। तथाच योगाङ्गत्वेनात्र तां ध्यात्वा तत्त्वज्ञानमाप्नोति इति भावः। इयं देवी चक्राधिष्ठात्री तदुक्तं वक्त्रं वशषसोपेतं डाकिन्या समाधिष्ठितमिति। तथा डाकिनी राकिनी चैव लाकिनी काकिनी तथा। शाकिनी हाकिनी चैव क्रमात् षट् पङ्कजाधिप इति। अस्याध्यानविशेषमाहान्यत्र रक्ताक्षीं रक्तवर्णां पशुजनभयकृत् शूलखट्वाङ्गहस्तां वामे खड्गं दधानां चषकमपि सुधापूरितं चैकव-क्त्रम्। अत्युग्रामुग्रदंष्ट्रामरिकुलमथनीं पायसान्ने प्रसक्ताम्। मूलाधारेऽमृतार्थे परिवृतवपुषा डाकिनीं चिन्तयेत् तामिति। तथा सिन्दूरतिलकोद्दीप्तामञ्जनाञ्चितलोचनाम्। कृष्णाम्बरपरी-धानां नानाभरणभूषितामित्यादिकर्म्मान्तरोक्तडाकिनीध्याने प्राप्ते कृष्णाम्बरं ध्येयमिति। अत्र ब्रह्मादीनां षट्चक्रस्थसकलदेवानां भावभेदेनोर्द्धाधोवक्त्रेण स्थितिचिन्तनमाह शाक्तानन्दतरङ्गिणीधृत-मायातन्त्रे पार्वत्युवाच। अधोवक्त्रस्थितिस्तत्र अधोभागे कथं भवे-दिति प्रश्नम्। महादेव उवाच। तत्र सर्वं पङ्कजं देवि सर्वतोमुख-मेव च। प्रवृत्ति भावचिन्तायामधोवक्त्राणि चिन्तयेत्। निवृत्ति-भावमार्गेषु सदैवोर्द्ध्वमुखानि चेति। अन्यत् सुगमम्॥ ७॥

मूलचक्रकर्णिकायां त्रिकोणं निरूप्यते वज्राख्यावक्त्रदेशे इति। सुषुम्णाया आस्यात् द्व्यंगुलोर्द्ध्वे लिङ्गमूलादधोवज्राख्यावक्त्रम्। तत्तु मूलाधारकमलकर्णिकामध्यस्थगह्वरान्तरवर्त्ति तत्र त्रिकोणं विलसति इत्यन्वयः। त्रिकोणं कीदृशं त्रैपुराख्यमिति त्रिकोण-गर्भस्थकामबीजघटककक्कारमध्ये त्रिपुरसुन्दर्य्यधिष्ठानात् त्रैपुराख्य-

**वसेदत्र देवी च डाकिन्यभिख्या लसद्वेदबाहूज्ज्वला रक्तनेत्रा। समानोदितानेकसूर्य्यप्रकाशा प्रकाशं वहन्ती सदाशुद्धबुद्धेः ॥ ७ ॥**

मिति तात्पर्य्यम्। तदुक्तं शाक्तानन्दतरङ्गिण्यां ककारतत्त्वकथनमुपक्रम्य; तेषां मध्ये स्थिता देवी सुन्दरी परिदेवतेति। कोमलं सुस्निग्धं तथा कामरूपं कामं निरूप्यतेऽनुभूयते येन तादृशं मदनागारात्मकमित्यर्थः। अतएव त्रिकोणं तत्तु, शक्तिपीठं मनोहरमित्युक्तम्। एतत् त्रिकोणं धराबीजस्योर्ध्वे तदुक्तं सम्मोहने धराबीजमधिकृत्य; रामा ज्येष्ठा तथा रौद्री त्रिरेखा च तदूर्ध्वत इति। तत् त्रिकोणमध्ये कन्दर्पवायुस्थितिमाह कन्दर्प इति। समन्तात् त्रिकोणव्यापकरूपेणेत्यर्थः। जीवेश इति अस्य जीवधारकत्वाज्जीवेश इत्युक्तं तथा हि; कण्ठदेशे वसेत् प्राणो ह्यपानो गुदमण्डले इत्यादिवचने गुदमण्डलस्थवायोरपानत्वाविधानात् तादृश्यगुदमण्डलस्थकन्दर्पवायोरप्यपानांशः, ततश्च अपानः कर्षति प्राणं प्राणोऽपानञ्च कर्षति। रज्जुबद्धो यथा श्येनो गतोप्याऽकृष्यते पुनः। तथा चैतौ विषंवादे संवादे संत्यजेदिममिति। विषवादे परस्परवैपरीत्यगमने एतौ प्राणापानवायू तथा कर्षाकर्षिणौ संवादे अविरोधिगमने ईमं देहं संत्यजेदित्यर्थक तद्वचने कन्दर्पावान्तरनामकापानवायोः प्राणकर्षकत्वेन देहधारणत्वाज्जीवधारकं प्रतीयते अतो जीवेश इत्युक्तिरिति भावः। अत एव ग्रन्थकृता दशमश्लोके; श्वासोच्छासविञ्जनेन जगतां जीवो यथा धार्य्यति इत्यनेन श्वासोच्छासरूपयोः प्राणापानयोर्जीवधारकत्वं स्वयमेवोक्तं स्पष्टमन्यत् ॥ ८ ॥

वज्राख्यावक्त्रदेशे विलसति सततं कर्णिकामध्यसंस्थं कोणं तत् त्रैपुराख्यं तडिदिव विलसत् कोमलं कामरूपम्। कन्दर्पो नाम वायुर्निवसति सततं तस्य मध्ये समन्तात् जीवेशो बन्धुजीवप्रकरमभिहसन् कोटिसूर्य्यप्रकाशः॥ ८॥

त्रिकोणमध्ये स्वयम्भुलिङ्गस्थितिमाह तन्मध्य इति। त्रिकोणमध्ये लिङ्गरूपी स्वयम्भुः स्वयम्भुनामकाशिवालिङ्गो विलसतीत्यन्वयः। द्रुतकनककलाकोमलः तप्तकाञ्चनावयव इव स्निग्धभाव इत्यर्थः। पश्चिमास्योऽधोमुखः तदुक्तं कालीकामृते, तत्र स्थितो महालिङ्गः स्वयम्भुः सर्वदा सुखी। अधोमुखः क्रियावांश्च कामबीजेन चालित इति। ज्ञानध्यानप्रकाश इति। ज्ञानध्यानाभ्यां प्रकाशो यस्य तादृश इत्यर्थः। तथा च ज्ञानेन निर्गुणरूपप्रकाशः ध्यानेन सगुणरूपप्रकाशो यस्य स एवायं स्वयम्भुरिति भावः। दृष्टान्तेन विशेषयति प्रथमकिसलयाकाररूप इति। अचिरोत्पन्नपत्रांकुरवत् आकाररूपो यस्य तेन स्थूलमूलात् सूक्ष्माग्रपर्य्यन्तं चम्पककुसुममध्यस्थितशलाकावदुन्नतं श्यामवर्णश्चेत्यर्थः। तदुक्तं शाक्तानन्दतरङ्गिण्याम्; स्वयम्भूलिङ्गं तन्मध्ये सरन्ध्रं पश्चिमाननम्। ध्यायेच्च परमेशानीं शिवं श्यामलसुन्दरामिति। यत्तु मूलाधारे स्मरेद्दिव्यं त्रिकोणमतिसुन्दरम्। तस्यास्त्रिरेखामानीय अध उर्ध्वव्यवस्थिताम्। नीलतोयदमध्यस्थां तड़ित्कोटिसमप्रभामिति यामलवचने कुण्डलिन्या नीलतोयदमध्यस्थविशेषणेन स्वयम्भुलिङ्गस्य नीलवर्णत्वमायातं तन्नीलश्यामयोरेकपर्य्यायत्वान्न विरुद्धम्। विद्युतत्पूर्णेन्दुविम्बप्रकरकरचय-

**तन्मध्ये लिङ्गरूपी द्रुतकनककलाकोमलः पश्चिमास्यो ज्ञानध्यानप्रकाशः प्रथमकिसलयाकाररूपः स्वयम्भुः। विद्युत्पूर्णेन्दुविम्बप्रकरकरचयस्निग्धसन्तानहासी काशीवासी विलासी विलसति सरिदावर्त्तरूपप्रकारः॥ ९॥**

स्निग्धसन्तानहासीति। विद्युत्पूर्णचन्द्रविम्बयोर्यः प्रकृष्टकरः उत्तापरहितकिरणं तत्तुल्यकिरणसमूहेन मृदुप्रवाहीविशिष्टप्रकाशोऽस्यास्तीत्यर्थः। काशीवासी विलासीति। अत्र काशीवासतुल्यवासविशिष्टः सन् विलासीत्यर्थः तेन यथा काशीवासे सुखं भुनक्ति तद्वदत्रापीति भावः। अथवा निवास उल्लासः कामप्रफुल्लभाव इति यावत् तद्विशिष्ट इत्यर्थः। कामबीजेन चालित इति वचनात् अयं स्वयम्भुः काशीवासी एतेनास्य विश्वेश्वरत्वं सूचितमिति। सरिदावर्त्तरूपप्रकार इति। सरिदावर्त्ते यद्रूपस्तत्प्रकारः ततश्च यथा भ्राम्यमाणनदीजले मध्यनिम्नस्तन्मध्ये किञ्चिदुन्नतं शङ्खमध्योन्नतवदिति भावः। अयं स्वयम्भुः कामबीजोपरिस्थितः तदाह कालीकुलामृते। किञ्जल्कोपरिश्रृङ्गाटः सरन्ध्रः सुमनोहरः। तत्र स्थितो महालिङ्गः स्वयम्भुः सर्वदा सुखी। अधोमुखः क्रियावांश्च कामबीजेन चालित इति। तथान्यत्र। पूर्वोक्तां डाकिनीं तत्र कर्णिकायां त्रिकोणकम्। यन्मध्ये विवरं सूक्ष्मं रक्ताभं कामबीजकम्। तत्र स्वयम्भुलिङ्गञ्चाधोमुखालक्तकप्रभमिति मतान्तरम्॥ ९॥

स्वयम्भुलिङ्गे कुण्डलिनीशक्तिस्थितिमाह तस्योर्ध्वे इति। द्वाभ्यामनयोरर्थः। यद्वा कुण्डलिन्या श्वासोच्छ्वासविभञ्जनेन प्रवर्त्तनेन जगतां जीवो जीवात्मा धार्य्यते देहावच्छेदे स्थाप्यते सा देवी मत्तालिमालास्फुटं यथा स्यात्तथाकृतिः एवं वक्ष्यमाणक्रमैर्वाचम्

**तस्योर्ध्वे बिसतन्तुसोदरलसत्सूक्ष्मा जगन्मोहिनी ब्र-ह्मद्वारमुखं मुखेन मधुरं सञ्छादयन्ती स्वयम्। शङ्खावर्त्त-निभा नवीनचपलामालाविलासास्पदा सुप्ता सर्पसमा शि-वोपरि लसत्सार्द्धत्रिवृत्ताकृतिः ॥ १० ॥**

अर्थात् जनयन्ती सती अम्बुजगह्वरे मुलाधारककमलकर्णिकामध्ये त्रिकोणगह्वरे तस्य स्वयम्भुलिङ्गस्योर्ध्वेभागे विलसतीति श्लोकद्वयस्य विशिष्टान्वितार्थः। बिसतन्तु सोदरलसत्सूक्ष्मा मृणालसूत्रतुल्यसूक्ष्मा इत्यर्थः। जगन्मोहिनी जगतां मायारूपिणीत्यर्थः। ब्रह्मद्वारमुखं स्वयम्भुलिङ्गच्छिद्रं मधुरं मृदु यथा स्यात्तथा स्वमुखेन सञ्छादयति इत्यर्थः। नवीनचपलामालाविलासास्पदेति। सर्वेषां नवीनत्वे प्रकाशाधिक्यदर्शनादत्र नवीनोत्कीर्त्तनमधिकप्रकाशप्राप्त्यर्थं ततश्चातिप्रकाशितविद्युन्मालानां विलासस्य स्थिरतरकौतूहलत्वामस्यास्पद इत्यर्थात् स्थिरतरातिप्रकाशितविद्युत्समूहप्रकाशतुल्यप्रकाशितवतीति पर्य्यवसितम्। वाक्यजननक्रममाह कोमलकाव्यबंधरचनाभेदातिभेदक्रमैरिति। कोमलकाव्यं मृदुशब्दघटितरूपगुणरसादिवर्णनात्मकवाक्यम्। बन्धः पद्मबन्धाश्वबन्धादिचित्रकाव्यम्। रचना तदतिरिक्तगद्यापद्यात्मकवाक्यम्। भेदस्तेषां विशेषः। अतिभेदस्तादितरसंस्कृतप्राकृतवाक्यसमुदायः। तयोर्यः क्रमः शास्त्रव्यवहारनिरूपणरीतिः। तादृशीभीरीतिभिर्वाचं जनयन्तीति परिष्कृतार्थः। कुण्डलिन्याः संस्कृतप्राकृतविशेषाविशेष यावद्वाक्यजनयित्रीत्वात्। तदाह सारदायाम्, भिद्यमानात् पराद्बिन्दोरव्यक्तात्मा रवोऽभवत्। तत् प्राप्य कुण्डलीरूपं प्राणिनां देहमध्यगम्। वर्णात्मनाविर्भवति गद्यपद्यादिभेदत इति। गद्यपद्यादीत्यादिपदात् यावद्वाक्यंगृह्यते व्यक्तमाह कादिमते, स्वा-

कूजन्ती कुलकुण्डली च मधुरं मत्तालिमाला स्फुटं वाचः कोमलकाव्यबन्धरचनाभेदातिभेदक्रमैः। श्वासोच्छ्वासविभञ्जनेन जगतां जीवो यया धार्य्यते सा मूलाम्बुजगह्वरे विलसति प्रोद्दामदीप्तावलिः॥ ११॥

त्मेच्छाशक्तिघातेन प्राणवायुस्वरूपतः। मूलाधारे समुत्पन्नः पराख्योनाद उत्तमः। स एव चोर्ध्वतां नीतः स्वाधिष्ठानविजृम्भितः। पश्यन्त्याख्यामवाप्नोति तथैवोर्ध्वं शनैः शनैः। अनाहते बुद्धितत्त्वसमेतो मध्यमाभिधः। तथा तयोरूर्ध्वगतो विशुद्धौ कण्ठदेशतः। वैखर्य्याभिधः कण्ठशीर्षताल्वोष्ठदन्तगः। जिह्वामूलाग्रपृष्ठस्थस्तथा नासाग्रतः क्रमात्। कण्ठताल्वोष्ठकण्ठस्थः कण्ठोष्ठद्वयतस्तथा। समुत्पन्नान्यक्षराणि क्रमादादिक्षकावधि इति अलं विस्तरेण। कुण्डलिनीध्यानान्तरमाह अन्यत्र। ध्यायेत् कुण्डलिनीं देवीं स्वयम्भुलिङ्गवेष्टिनीम्। श्यामां सूक्ष्मां सृष्टिरूपां सृष्टिस्थितिलयात्मिकाम्। विश्वातीतां ज्ञानरूपां चिन्तयेदूर्ध्व वाहिनीम्। तथा ध्यायेत् कुण्डलिनीं देवीमिष्टदेवस्वरूपिणीम्। सदा षोड़शवर्षीयां पीनोन्नतपयोधराम्। नवयौवनसम्पन्नां सर्वाभरणभूषिताम्। पूर्णचन्द्रप्रभां रक्तां सदा चञ्चललोचनाम् इति। रक्तामिति सुन्दरीविषये ज्ञेयमिति शाक्तानन्दतरङ्गिणीकारः। वस्तुतस्तु सर्वदेवताविषये एव कुण्डलिनी रक्तवर्णत्वेन ध्येया न तु श्यामवर्णत्वेन प्रायः सर्वतन्त्रे सर्वसंग्रहे च कुण्डलिन्यास्तड़िदाकारत्वकथनात्। श्यामामित्यनेन शीतकाले भवेदुष्णा उष्णकाले च शीतला। प्रतप्तकाञ्चनाभासा श्यामा स्त्री परिकीर्त्तितत्येतद्वचनाक्रान्तत्वं ज्ञापितम्। न तु श्यामवर्णत्वमतः सर्वशास्त्रसामञ्जस्यामिति। चक्र-

**तन्मध्ये परमा कलातिकुशला सूक्ष्मातिसूक्ष्मा परा नित्यानन्दपरम्परातिविगलत्पीयूषधाराधरा। ब्रह्माण्डादिकटाहमेव सकलं यद्‌भासया भासते सेयं श्रीपरमेश्वरी विजयते नित्यप्रबोधोदया ॥ १२ ॥**

भेदनात् पूर्वं ब्रह्मद्वारमध्ये कुण्डलिनीध्यानमाह कङ्कालमालिन्याम्। कोटिचन्द्रप्रतीकाशां परब्रह्मस्वरूपिणीम्। चतुर्भुजां त्रिनेत्रां च वराभयकरां तथा। तथा पुस्तकवीणे च धारिणीं सिंहवाहिनीम्। गच्छन्तीं स्वासनं भीमां नानारूपधरात्मिकामिति ॥ १० ॥ ११ ॥

स्वयम्भुलिङ्गवेष्टितकुण्डलिन्यूर्ध्वे समसूत्रपातन्यायेन दण्डाकारेण लिङ्गाग्रपर्य्यन्तास्थितां परशक्तिमाह तन्मध्ये इति। अस्यार्थः यद्भासया यस्याः शक्त्या दीप्त्या ब्रह्माण्डादितत्कटाहंच भासते प्रकाशते सेयं श्रीपरमेश्वरी तन्मध्ये स्वयम्भुलिङ्गे कुण्डलिनीवेष्टनोर्ध्वे विजयते सर्वान् वशवर्त्तिनः कृत्वा तिष्ठतीत्यर्थः। सा किम्भूता परमा अघटनघटनपटीयसी माया। कला नादशक्तिरूपा कुण्डलिन्यभेदशरीरिणी। तदुक्तं शाक्तानन्दतरङ्गिण्याम्। कला कुण्डलिनी सैव नादशक्तिः शिवोदिता। तथान्यत्र, तस्योपरि मनो ध्यायेत् चित्कलामीशमाश्रिताम्। प्रदीपकलिकाकारां कुण्डल्यभेदरूपिणीम् इति। तथा कालिकाश्रुतौ। तस्याः शिखायामध्ये तु अध ऊर्ध्वं व्यवस्थिताम्। स ब्रह्मा सः शिवः सूर्यः स एव परमेश्वरः। स एव विष्णुः स प्राणः स कलाग्निः स चन्द्रमाः।इति कुण्डलिनीं ध्यात्वा सर्वपापैः प्रमुच्यते इति।तस्याः शिखाया मध्ये त्रिवलयस्योर्ध्वे व्यवस्थितां परमां कलां नादरूपामित्यर्थः। इति ललितारहस्यकारः। अतिकुशला सृष्टिसम्पादनयोग्यतारूपकौशलवती-

ध्यात्वैतन्मूल चक्रान्तरविवरलसत्कोटिसूर्य्यप्रकाशं
वाचामीशो नरेन्द्रः स भवति सहसा सर्वविद्याविनोदी ।
आरोग्यं तस्य नित्यं निरवधि च महानन्दचित्तान्तरात्मा
वाक्यैः काव्यप्रबन्धैः सकलसुरगुरून् सेवते शुद्धशीलः
॥ १३ ॥

त्यर्थः । नित्यानन्दपरम्परेति । नित्यानन्दात् परम्परा परपरक्रम-सम्बन्धो यस्या इत्यर्थः । ततश्च नित्यानन्दो निर्गुणं ब्रह्म तस्मात् सगुणाविर्भावः सगुणात् शक्तिः शक्तेर्नादः नादाद्विन्दुःविन्दोः कुण्डलिनी कुण्डलिन्यवान्तररूपेयं चित्कलेत्येवंप्रकारेण नित्यानन्दपरम्परेति भावः । यद्वा नित्यानन्दपरम्परातिविगलत्पीयूषधाराधरेत्येकविशेषणम् । नित्यानन्दात् परम्परया नित्यानन्दात् परं विन्दुः तत्परमाज्ञाचक्रं तत्परं विशुद्धचक्रमेवं क्रमेण मूलाधारपर्य्यन्तमतिविगलन्ती या पीयूषधारा सा ध्रियते गृह्यते यया सेत्यर्थः स्पष्टमन्यत् ॥ १२ ॥

मूलाधारे कुण्डलिनीचिन्तनफलमाह ध्यात्वैतादिति । मूलचक्रेति मूलाधारषट्कानां मूलाधारं ततो विदुरिति वचनात् मूलाधारचक्रं तस्यान्तरे मध्ये यद् विवरं गह्वरं तस्मिन् लसत्कोटिसूर्य्यप्रकाशमित्यर्थः । सकलसुरगुरूनिति । सिंहाशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचका इत्यमरोक्त्या सुरगुरुवर्त्तिनः गुरुशब्देन सुरश्रेष्ठा ब्रह्मविष्णुशिवादयः प्रतीयन्ते। ततश्च तदादिदेवान् सेवेत स्तवादिवाक्यैस्तोषयतीत्यर्थः स्पष्टमन्यत्। तदयं महावाक्यार्थनिर्णयः । मूलाधारचक्रं चतुर्दलं रक्तवर्णं वशषस इति स्वर्णाभचतुर्वर्णयुक्तदलकर्णिकायां धरामण्डलं चतुष्कोणमष्टशूलावृतं पीतवर्णम् । तन्मध्याधो धराबीजं चतुर्भुज-

**सिन्दूरपूररुचिरारुणपद्ममन्यत् सौषुम्णमध्यघटितं ध्वजमूलदेशे । अङ्गच्छदैः परिवृतं तडिदाभवर्णैर्वाद्यैः सबिन्दुलसितैश्च पुरन्दरान्तैः ॥ १४ ॥**

मैरावतारूढं पीतवर्णं वज्रहस्तं चतुर्भुजम् । धराबीजजबिन्दुमध्ये शिशुरूपब्रह्मा चक्रवर्णः चतुर्भुजः दण्डकमण्डल्वक्षसूत्राभयहस्तः चतुर्मुखः । तत्कर्णिकायां रक्तपद्मोपरि चक्राधिष्ठात्री डाकिनी शक्तिः रक्तवर्णा चतुर्भुजा शूलखट्वाङ्गचषकहस्ता । कर्णिकामध्ये विद्युदाकारत्रिकोणं तन्मध्ये कामवायुः कामबीजञ्च रक्तवर्णम् । तदुपरि स्वयम्भुलिङ्गः श्यामवर्णः । तस्योर्ध्वे कुण्डलिनीशक्तिः सार्द्धत्रिवलयाकारा तदूर्ध्वे लिङ्गाग्रे चित्कला दण्डाकारेण स्थितेति ॥ १३ ॥

मूलाधारचक्रं निरूप्य स्वाधिष्ठानचक्रं निरूपयति । सिन्दूरपूरेत्यादि पञ्चभिः । प्रथमस्यायमर्थः । ध्वजमूलदेशे लिङ्गमूलस्थाने अन्यत् आधारचक्राभिन्नं सिन्दूरपूररुचिरारुणपद्मं सिन्दूरस्य पूरणेन यथा मनोहररक्तवर्णं पद्मम् आस्ते इति क्रियासमाहारेणान्वयः । पद्मं विशेषयति सौषुम्णमध्यघटितमिति । सुषुम्णानाडीमध्ये निर्मितं तथाङ्गच्छदैः परिवृतं षट्पत्रयुक्तम् । पुरन्दरान्तैरिति । पुरन्दरो लकारः तदन्तैर्वाद्यैस्तेन बभमयरलेति षड्भिस्तडिदाभवर्णैर्दलवत्परिवृतः तेन दलावच्छेदे वर्णयोगः प्रतीतः । वर्णान् विशेषयति सबिन्दुलसितैरिति । बिन्दुना सह वर्त्तमानाः सबिन्दवः लसिताः प्रकाशिताः । सबिन्दवश्च ते लसिताश्चेति तैरित्यर्थः । ततश्चात्र विशेष्यविशेषणभावकल्पने विशेषणीभूतबिन्दौ लसितत्वकारणत्वं प्रतीयते । सुरापः पततीत्यत्र कर्तृविशेषणसुरापाने पतनकर्तृत्ववदिति । यद्वा बिन्दूनां लसितं बिन्दुलसितं बिन्दुप्रकाशः तेन सह वर्त्तमानैर्वाद्यैरित्यर्थः ॥ १४ ॥

**तस्यान्तरे प्रविलसद्विशदप्रकाशमम्भोजमण्डलमथो वरुणस्य तस्य । अर्द्धेन्दुरूपलसितं शरदिन्दुशुभ्रं वङ्कार-वीजममलं मकराधिरूढम् ॥ १८ ॥**

एतत् पद्मकर्णिकायामम्भोजमण्डलस्थितिमाह तस्यान्तरे इति । तस्य पद्मस्य अन्तरे मध्ये अम्भोजमण्डलमम्भोजाकार-मण्डलं प्रविलसत् प्रकाशमानम् । तत् किम्भूतं विशदप्र-काशं शुक्लवर्णं पुनः किम्भूतमर्द्धेन्दुरूपलसितमर्द्धचन्द्रयुक्त मित्यर्थः इदं जलमण्डलं तदाह सारदायाम् । अम्भो-जमभसो भूमेश्चतुरस्रं सवज्रकमित्यादि । एतन्मण्डललक्षणमाह राघवभट्टः । अर्द्धचन्द्रं कृत्वा तदुभयभागे सरोजद्वयं कुर्य्यात् तदुक्तमाचार्यैः । अब्जोपेतार्द्धेन्दुमत् विम्बमिति । मण्डलमध्ये वरुण-वीनस्थितिमाह अथ इति । ताम्यति जलाधिष्ठातृत्वेन प्रसिद्ध-स्येत्यर्थः मकराधिरूढमिति । पाशहस्तश्च तदाह । तदन्तर्वारुणं वीजं श्वेतं मकरवाहनम् । पाशहस्तं तदर्द्धञ्च हरिं श्यामं चतु-र्भुजमिति । अयं वरुणवीजस्वरूपो विकारो यवर्गीयः कुलाकुल-चक्रे भूतलिपिमन्त्रे च तद्वकारस्यैव यलवर्णत्वेनाभिधानात् स्पष्ट-मन्यत् ॥ १९ ॥

वरुणवीजस्याङ्के विष्णुस्थितिमाह तस्याङ्क इति । अङ्के वीजमस्तकस्य विन्दुमध्ये धरावीजवीन्दौ ब्रह्मणः स्थितिदर्शना-दत्रापि तथा दृष्टपरिकल्पनान्यायात् एवं वक्ष्यमाणसर्वत्र बोध्यं कलितः स्थित इत्यर्थः । नीलप्रकाशरुचिरश्रियमादधन इति । नीलज्योतिषां या मनोज्ञा शोभा तां दधानः इत्यर्थः तेन नीलतेजः पुञ्जशरीरीति यावत् । श्रीवत्सकौस्तुभधर इति तद्ध्यानमाह गौतमीये । कौस्तुभं हृदये रत्नं सूर्यायुतसमप्रभम् । तदधो वन-

**तस्याङ्कदेशकलितो हरिरेव पायात् नीलप्रकाशरुचिरश्रियमादधानः। पीताम्बरः प्रथमयौवनगर्वधारी श्रीवत्सकौस्तुभधरोधृतवेदवाहुः॥ १८॥**

माला च चन्द्रायुतसमप्रभा। कौस्तुभोर्ध्वे च श्रीवत्सं चन्द्रायुतसमप्रभमिति। हरिहस्ते अस्त्रमाह तन्त्रान्तरे। पाशहस्तं तदङ्के च हरिं श्यामं चतुर्भुजम्। शङ्खचक्रगदापद्मधारिणं पीतवाससमिति। पाशहस्तं वरुणमिति पूर्वेणान्वयः। अन्यत्र पीताम्बरं शान्तमूर्त्ति वनमालाविभूषितमिति। मूलाधारे हंसपृष्ठे ब्रह्मणस्थितिदर्शनादत्र गरुड़ोपरि विष्णुश्चिन्तनीयः॥ १९॥

एतत्पद्मे राकिणीशक्तिस्थितिमाह। अत्रैवेति स्पष्टम्। राकिणीध्यानविशेषमाह श्यामां शूलाब्जहस्तां डमरुकरयुतां तीक्ष्णटङ्कं वहन्तीमुग्रां रक्तत्रिनेत्रां कुटिलसविलसद्दन्तदंष्ट्रप्रभाभिः। दीप्तां तां देवदेवीं द्वितयकमलगां रक्तधारैकनासां शुक्लान्त्रे सक्तचित्तामभिमतफलदां राकिणीं चिन्तयेत्ताम्। अत्र पद्मान्तरे राकिण्याः स्थितिदर्शनात् सर्वत्र रक्तपद्मान्तरोपरि षट्शक्तीनां स्थितिरिति बोध्यम्॥ १७॥

स्वाधिष्ठानपद्मादिचिन्तनफलमाह स्वाधिष्ठानाख्यमिति। स्वशब्देन परं लिङ्गं स्वाधिष्ठानं ततो विदुरिति। अहङ्कारदोषादीत्यादिना कामक्रोधादयो गृह्यन्ते तेन कामादिषड्रिपवः क्षीयन्ते इत्यर्थः। मोहान्धतिमिरचये इति दुर्निवार्य्यमोहान्धकारसमूहे इत्यर्थः। ततश्च मायामोहरूपान्धकारनाशाय ज्ञानरूपसूर्य्यमाप्नोतीति भावः स्पष्टमन्यत् तदयं महावाक्यार्थनिर्णयः। स्वाधिष्ठानचक्रं सिन्दूरवर्णषड्दलं तडिदाभासबिन्दुबभमयरल इति षड् दलं युक्तदलं तत्कर्णिकायां मध्यस्थलार्द्धचन्द्रयुक्ताष्टपद्माकारम-

अत्रैव भाति सततं खलु राकिणी सा नीलाम्बुजो-दरसहोदरकान्तिशोभा । नानायुधोद्यतकरैर्लसिताङ्गलक्ष्मीः दिव्याम्बराभरणभूषितमत्तचित्ता ॥ १७ ॥

स्वाधिष्ठानाख्यमेतत् सरसिजममलं चिन्तयेद् यो मनुष्यस्तस्याहङ्कारदोषादिकसकलरिपुः क्षीयते तत्क्षणेन । योगीशः सोऽपि मोहाद्भुततिमिरचये भानुतुल्यप्रकाशो गद्यैः पद्यैः प्रबन्धैर्विरचयति सुधावाक्यसन्दोहलक्ष्मीः॥१८॥

म्भोजमण्डलं शुक्लवर्णं तन्मध्ये वमिति वरुणबीजं मकराधिरूढं-पाशहस्तं तत्क्रोड़े विष्णुर्गरुड़ोपरि स्थितश्चतुर्भुजः शङ्खचक्र-गदापद्मधारी पीताम्बरः वनमालाश्रीवत्सकौस्तुभधारी युवरूपः पद्मकर्णिकायां रक्तपद्मोपरि राकिणी शक्तिः श्यामवर्णा चतुर्भुजा शूलाब्जडमरुटङ्कधरा त्रिनेत्रा कुटिलदंष्ट्रा भयङ्करी शुक्लान्नरक्त-धाराभिलासिनीति ॥ १८ ॥

मणिपूरचक्रं निरूपयति तस्योर्ध्वे इत्यादि त्रिभिः । तस्य स्वाधिष्ठानस्येत्यर्थः । दशदललसिते इति । दशदलैर्लसिते प्रका-शिते पद्मे इति शेषः । पद्मे किंभूते पूर्णमेघप्रकाशे कृष्णवर्णे । डादिफान्तैः डढण तथदधन पफेति दशवर्णैरुपहितं युक्तं जठरं मध्यं यस्य तद्रूपे इत्यर्थः । स चन्द्रैरिति । चन्द्रोऽर्द्धचन्द्रः युगला-ध्ववाहित्वाद्बिन्दुश्च ताभ्यां सह वर्त्तमानैर्वर्णैरित्यर्थः । वैश्वानरस्य वन्हेः । अरुणमिहिरसमं बालार्कसदृशमित्यर्थः । स्वस्तिकाख्यैरिति । स्वस्तिकं नाम मध्यमूर्द्ध विदिग्गतचतुर्वक्त्रम् । रेखाद्वयमिति रा-घवभट्टोक्तं तत्प्रकारैस्त्रिभिः स्वस्तिकैः त्रिकोणावच्छेदे अभिल-षितमित्यर्थः । अत्र वन्हिमण्डले वन्हिबीजं रम् ॥ १९ ॥

तस्योर्ध्वे नाभिमूले दशदललसिते पूर्णमेघप्रकाशे नीलाम्भोजप्रकाशैरुपहितजठरे डादिफान्तैः सचन्द्रैः। ध्यायेद्वैश्वानरस्यारुणमिहिरसमं मण्डलं तत् त्रिकोणं तद्बाह्ये स्वस्तिकाख्यैस्त्रिभिरभिलसितं तत्र वन्हेः स्वबीजम् ॥ १९॥

ध्यायेन्मेषाधिरूढं नवतपननिभं वेदबाहूज्ज्वलाङ्गं तत्क्रोडे रुद्रमूर्त्तिर्निवसति सततं शुद्धसिन्दूररागः। भस्मालिप्ताङ्गभूषाभरणसितवपुर्वृद्धरूपी त्रिनेत्रो लोकानामिष्टदाता भयलसितकरः सृष्टिसंहारकारी ॥ २० ॥

भस्मालिप्ताङ्गभूषाभरणसितवपुरिति। भस्मलेपनाङ्गभूषाभरणाभ्यां शुक्लीकृतदेह इत्यर्थः। ध्यायेन्मेषेति। ध्याने विशेषमाहान्यत्र। मेषस्थं साक्षसूत्रञ्च शक्तिहस्तं स्मरेत्तत इति। त्रिशेषानभिधानादन्यहस्तद्वये वराभयौ चिन्तनीयौ ध्यानान्तरे तथादर्शनात्। लोकानामिष्टदाता वरदातेत्यर्थः। अभयलसितकरस्तेन वराभयधारीति भावः अत्र वृषोपरि रुद्रो ध्येयः स्पष्टमन्यत् ॥२०॥

अत्रास्त इति। विविधरचनेति। विविधेन मणिमुक्तादियोगेन चित्तविचित्रघटनेन विरचना यत्त तादृशमलंकृतं यस्य इत्यर्थः। यद्वा विविधविरचनया अलङ्कारो धार्य्यते यत्रेत्यर्थः। अत्र लाकिनीध्यानविशेषमाह। नीलां देवीं त्रिवक्त्रां त्रिनयनलसितां दंष्ट्रिणीमुग्ररूपां वज्रं शक्तिं दधानामभयवरकरां दक्षवामे क्रमेण। ध्यात्वा नाभिस्थपद्मे दशदलविलसत्कर्णिके लाकिनीं तां मांसाशीं गौररक्तामृकहृदयवर्तीं चिन्तयेत् साधकेन्द्रः। नाभिपद्मचिन्तनमाह ध्यात्वैतदित्यादि। नाभिपद्मं मणिपूराख्यम्। तत्पद्मं मणिवद्भिन्नं मणिपूरं तथोच्यते इति गौतमीयात्। अन्यत्

**अत्रास्ते लाकिनी सा सकलशुभकरी वेदबाहूज्ज्वलाङ्गी श्यामा पीताम्बराद्यैर्विविधविरचनालङ्कृता मत्तचित्ता। ध्यात्वैतन्नाभिपद्मं प्रभवति नितरां संहृतौ पालने वा वाणी तस्याननाब्जे निवसति सततं ज्ञानसन्दोहलक्ष्मीः ॥ २१ ॥**

**तस्योर्ध्वे हृदि पङ्कजं सुललितं वन्धूककान्त्युज्ज्वलं काद्यैर्द्वादशवर्णकैरुपहितं सिन्दूररागान्वितैः। नाम्ना-**

स्पष्टम्। तदयं महावाक्यार्थनिर्णयः। नाभिपद्मं मेघवर्णदशदलं तद्दलेषु निभासबिन्दु डढण तथदधनपफ इति दशवर्णयुक्तं तत्कर्णिकायां त्रिकोणाकारं त्रिकोणवहिः स्वस्तिकायुक्तं रक्तवर्णं वन्हिमण्डलम्। तन्मध्ये रमिति वन्हिबीजं रक्तवर्णं मेषाधिरूढं चतुर्भुजं वज्रशक्तिवराभयधरम्। तत् क्रोडे रुद्रः वृषारूढो रक्तवर्णो द्विभुजो वराभयधारी भस्मलेपनशुक्लाभरणाभ्यां शुक्लीकृतदेहः वृद्धरूपः। पद्मकर्णिकायां रक्तपद्मोपरि लाकिनीशक्तिः नीलवर्णा त्रिवक्त्रा त्रिनेत्रा चतुर्भुजा वज्रशक्त्यभयवरकरा घोरदंष्ट्रा रक्तयुक्तखेचरान्नमांसाभिलासिनीति ॥ २१ ॥

हृदि पङ्कजं निरूपयति। तस्योर्ध्वे इत्यादि षड्भिः। हृदि पङ्कजमिति। एवम्भूतं पङ्कजं हृदि ध्यायेदिति क्रियाध्याहारेणान्वयः। सुललितं सुस्निग्धमित्यर्थः। काद्यैरिति। कखगघङ चछजझञ टठ इति द्वादशवर्णकैरिति बोध्यम्। तैरुपहितं युक्तमित्यर्थः। नाम्नानाहतसंज्ञकमिति। शब्दब्रह्ममयः शब्दोऽनाहतस्तत्र दृश्यते। अनाहताख्यं पद्मं तत् मुनिभिः परिकीर्त्तितम्। इति वचनादनाहतनाम पद्ममिति तात्पर्य्यम्। यतः सुरतरुं कल्पतरु-

नाहतसंज्ञकं सुरतरुं वाञ्छातिरिक्तप्रदं वायोर्मण्डलमत्र धूमसदृशं षट्कोणशोभान्वितम् ॥ २२॥

तन्मध्ये पवनाक्षरञ्च मधुरं धूमावलीधूसरं ध्यायेत् पाणिचतुष्टयेन लसितं कृष्णाधिरूढं परम्। तन्मध्ये करुणानिधानममलं हंसाभमीशाभिधं पाणिभ्यामभयं वरञ्च विदधल्लोकत्रयाणामपि ॥ २३ ॥

स्वरूपमतो वाञ्छातिरिक्तफलप्रदमिति हेतुगर्भविशेषणमिति भावः। तत्पद्मकर्णिकायां वायुमण्डलस्थितिमाह वायोरिति ॥ २२ ॥

वायुमण्डलमध्ये वायुबीजमाह तन्मध्य इति। पवनाक्षरं यमिति बीजं मधुरं मनोहरम्। धूमावलीधूसरमिति। धूमश्रेण्यावृतदेहत्वात् धूमधूम्रवर्णमिति भावः। कृष्णाधिरूढमिति। कृष्णसाराधिरूढमित्यर्थः। वरुणहस्ते पाशदर्शनादत्र वायुहस्तेऽङ्कुशो ध्येयः। वायुबीजमध्ये ईशस्थितिमाह तन्मध्य इति स्पष्टम्। सर्वत्र शिवस्य त्रिनेत्रत्वं शिवस्य त्रिनेत्रत्वादयं त्रिनेत्रः एवं ग्रैवेयाङ्गदहारनूपुरयुतं क्षौमाम्बरं चिन्तयेदित्यादिकर्मान्तरोक्तध्यानप्राप्त—क्षौमाम्बरत्वमीशस्य। एवं कान्तं कान्तशशाङ्ककोटिकिरणं प्रद्योत् कपर्दोज्ज्वलमिति ॥ २३ ॥

अत्र कर्णिकायां काकिनीशक्तिस्थितिमाह अत्रास्ते इति। मत्ता स्वभावस्खलितभावा। पूर्णसुधारसार्द्रहृदयाति। पूर्णः सम्पूर्णः तृप्तिजनको यः सुधारसस्तेनार्द्रं परोपकाराभिमतकोमलं हृदयं चित्तं यस्या इत्यर्थः। यद्वा पूर्णः पूर्णानन्दजनको यः सहस्रदलकमलान्तर्विगलितपरमा-

अत्रास्ते खलु काकिनी नवतडित्पीता त्रिनेत्रा शुभा सर्वालङ्करणान्विता हितकरी सम्यक् जनानां मुदा। हस्तैः पाशकपालशोभनवरान् संबिभ्रती चाभयं मत्ता पूर्णसुधारसार्द्रहृदया कङ्कालमालाधरा॥ २४॥

एतन्नीरजकर्णिकान्तरलसच्छक्तिस्त्रिकोणाभिधा विद्युत्कोटिसमानकोमलवपुः सास्ते तदन्तर्गतः। बाणाख्यः शिवलिङ्गकोऽपि कनकाकाराङ्गरागोज्ज्वलो मौलौ सूक्ष्मविभेदयुङ्मणिरिवप्रोल्लासलक्ष्म्यालयः॥ २५॥

मृतरसस्तेनार्द्रं परमानन्दोत्फुल्लशिथिलं हृदयं यस्या इत्यर्थः। अन्यत् स्पष्टम्। कृष्णाम्बरपरीधानां नानाभरणभूषिताम्। ध्यायेत् शशिमुखीं नित्यां काकिनीं मन्त्रसिद्धये। इति ध्यानप्रामकृष्णाम्बरत्वमस्या बोध्यम्॥ २४॥

एतत् पद्मकर्णिकामध्ये त्रिकोणं निरूपयति एतदिति। त्रिकोणाभिधा त्रिकोणाकारा शक्तिरित्यनेन त्रिकोणस्याधोमुखत्वं ज्ञापितम्। सा आस्ते इत्यन्वयः। एतत्रिकोणं वायुबीजस्याधोदेशे। तदाहान्यत्र। तत्क्रोडे ईशं तदधस्त्रिकोणे बाणालिङ्गकमिति। बाणाख्यलिङ्गं विशेषयति मौलौ सूक्ष्मविभेदः। शिवलिङ्गमस्तकेऽर्द्धचन्द्रबिन्दुयोगात् तद्बिन्दुमध्ये शून्यरूपो विभेदश्छिद्रं तेन युक्त इत्यर्थः। तदाह। यद्वा त्रिकोणान्तर्बाणलिङ्गं कनकाभरणैर्युतम्। चन्द्रार्द्धमस्तकं देवं मध्ये रक्ताम्बुजं परमिति। मध्ये रक्ताम्बुजमिति हृत्पद्मस्य कर्णिकाधोदेशे ऊर्ध्वमुखरक्तवर्णाष्टदलपद्ममित्यर्थः। एतत्पद्मोपरि मानसपूजा कार्य्या। तदुक्तं यथा तन्मध्येऽष्टदलं रक्तं तत्र कल्पतरुं तथा। इष्टदेवासनं चारुचन्द्रातप-

ध्यायेद् यो हृदिपङ्कजं सुरतरुं सर्वस्य पीठालयं देवस्यानिलहीनदीपकलिकाहंसेन संशोभितम्। भानोर्मण्डलमण्डितान्तरलसत्किञ्जल्कशोभाधरं वाचामीश्वर ईश्वरोऽपि जगतां रक्षाविनाशे क्षमः ॥ २६ ॥

विराजितम्। तथा नानापुष्पफलैर्युक्तं मञ्जुवाक्पक्षिशोभितमित्याद्यभिधाय तत्र ध्यायेदिष्टदेवं तत्तत्कल्पोक्तमार्गतः इति। अलं विस्तरेण प्रकृतमनुसरामः। बाणलिङ्गमस्तके बिन्दुप्रकाशदृष्टान्तमाह मणिरिवेति। यथा सरन्ध्रमणिप्रकाशस्तथा शिवलिङ्गोपरि बिन्दुप्रकाश इति भावः। प्रोल्लासलक्ष्म्यालय इति। प्रोल्लासः कामोद्गमः तच्छोभायुक्त इत्यर्थः॥ २५ ॥

हृत्पद्मचिन्तनफलमाह ध्यायेदित्यादि द्वाभ्याम्। अस्यार्थः यो जनो हृदि पङ्कजं ध्यायेत् स जनो वाचामीश्वरो बृहस्पतिसमो भवति एवं सर्वत्र ईश्वर इत्यादि प्रथमान्तेन भवति क्रियान्वयो बोध्यः। अत्र पद्मकर्णिकायां हंसरूपजीवात्मास्थितिमाह अनिलहीनदीपकलिकाहंसेन संशोभितमिति। वायुरहिता या दीपकलिका तत्सदृशहंसेन संशोभितमित्यर्थः। ततश्च पद्मकर्णिकायां वाताहतिरहितस्थिरतरदीपशिखाकारहंसरूपः जीवात्मा वर्त्तते इति भावः। एतत्कर्णिकायां सूर्य्यमण्डलस्थितिं ज्ञापयति। भानोर्मण्डलमण्डितान्तरलसत्किञ्जल्कशोभाधरमिति। भानोर्मण्डलेन मण्डिता भूषिता ये अन्तर्लसन्तः कर्णिकामध्ये प्रकाशमानाः किञ्जल्काः केशराः अथवा याः किञ्जल्कशोभास्तां धारयतीत्यर्थः। अत्र भानुमण्डलमण्डितत्वं किञ्जल्कविशेषणं न त्वन्तरविशेषणं तथात्वे सर्वस्मिन् पद्मे किञ्जल्कशोभाधरत्वादत्र विशेषोपादानं व्यर्थं

**योगीशो भवति प्रियात् प्रियतमः कान्ताकुलस्यानिशं ज्ञानीशोऽपि कृती जितेन्द्रिययगणो ध्यानावधानक्षमः। गद्यैःपद्यपदादिभिश्च सततं काव्याम्बुधारावहो लक्ष्मीरङ्गणदैवतं परपुरे शक्तः प्रवेष्टुं क्षणात् ॥ २७ ॥**

स्यात् । भानोर्मण्डलमण्डितत्वविशेषणविशिष्टत्वे तादृशाविशिष्टकिञ्जल्कानामन्यत्रासत्वात् तदुपादानं सार्थकमिति । एवञ्च भानोर्मण्डलस्य कर्णिकारूपकत्वे तत्तेजसा सर्वेषां किञ्जल्कानां शोभाधिक्यरूपमण्डितत्वं सम्भवति न त्वेकदेशास्थितत्वे । ततश्च तत्कर्णिकायामादौ कर्णिकाव्यापकं वायुबीजत्रिकोणादिकं ध्येयम् । युक्तञ्चैतत् । मानसार्चने वन्हिमण्डलाय दशकलात्मने नमः इत्यादिना पूजायाम् उपर्य्युपरि क्रमेण वन्ह्यर्कचन्द्रमण्डलास्थितिदर्शनात् दृष्टपरिकल्पना न्यायावतारात् । अलमति विस्तरेण । ईश्वर इति सृष्टिकर्त्ता इत्यर्थः । रक्षाविनाशे क्षमः स्थितिप्रलयकर्त्ता इत्यर्थः । तेन स जनः सृष्टिस्थितिप्रलयकर्त्तेति तात्पर्य्यार्थः ॥ २६ ॥

योगीश इति । प्रियात् प्रियतमः कान्ताकुलस्येति योषित् वर्गस्य कर्म्मकुशलः। जितेन्द्रियगण इति । जितेन्द्रियाणां मध्ये गण्यते तुल्यत्वेन गृह्यते असावित्यर्थः । ध्यानावधानक्षमः ध्याने ब्रह्मचिन्तने अवधानाय स्थिरमनोऽभिनिवेशं कर्त्तुं क्षमः समर्थ इत्यर्थः । काव्याम्बुधारावह इति । काव्यरूपाम्बूनां धारा अविच्छेदनिःसरणम् उह्यते धार्य्यते येन तादृशी भवतीति । लक्ष्मीरङ्गणदैवतः । विष्णुसदृश इत्यर्थः । यद्वा लक्ष्मीः सम्पत्तिः रङ्गणम् आनन्दानुभवः दैवम् अदृष्टं तत्समूहो दैवता जनतावत् ततश्च लक्ष्मीभीरङ्गणाय दैवता यस्येति बहुव्री-

**विशुद्धाख्यं कण्ठे सरसिजममलं धूमधूम्रावभासं स्वरैः सर्वैः शोणैर्दलपरिलसितैर्दीपितं दीप्तबुद्धेः। समास्ते पूर्णेन्दुप्रथिततमनभोमण्डलं वृत्तरूपं हिमच्छायानागोपरिलसिततनोः शुक्लवर्णाम्बरस्य ॥ २८ ॥**

ह्यर्थे णप्रत्ययेन तत्पदं सिद्धम् अत एवोक्तम्॥ इह भुक्त्वा वरान् भोगानन्ते मुक्तिपदं व्रजेदिति। परपुरे शक्तः प्रवेष्टुं क्षणादिति। दुर्गद्वारपालादिना दुर्गमीकृतायामपि परपुर्य्यां प्रवेष्टुं शक्तः प्रवेशकारणभूतादर्शनाकाशगमनादियोग्यतापन्नो भवतीत्यर्थः। अत्र केचित् दैवतमिति विद्वन्तं पठित्वा यद्यपि जनविशेषणतया दैवतमित्यस्य पुंस्त्वं भवितुं पार्य्यते तथाप्यजहल्लिङ्गत्वान्नपुंसकत्वमिति वदन्ति। तत्र वृन्दारका दैवतानि पुंसि वा देवताः स्त्रियामित्यमरकोषे दैवतशब्दस्य पुंन्नपुंसकत्वकथनात् दैवत इति विसर्गान्तपाठोऽपि साधुः। प्रदर्शितार्थे तु सुतरां तथेति स्पष्टमन्यत्। तदयं महावाक्यार्थनिर्णयः। इत्पद्मं बन्धुकाभं सिन्दूराभासबिन्दु कखगघङचछजझञटठ इति द्वादशवर्णयुक्तद्वादशदलम्। तत्कर्णिकायां षट्कोणाकारवायुमण्डलं धूमाभं तदुपरि सूर्य्यमण्डलं तन्मध्ये विद्युत्कोटिनिभं त्रिकोणं तदूर्ध्वे वायुबीजं कृष्णसाराधिरूढं धूमधूम्राभं चतुर्भुजम् अङ्कुशहस्तं। तत्क्रोडे हंसाभ ईशः द्विभुजः वराभयकरः त्रिनेत्रः। अत्र कर्णिकायां रक्तपद्मोपरि काकिनीशक्तिः पीतवर्णा चतुर्भुजा पाशकपालवराभयकरा पीतवस्त्रा सर्वालङ्करणान्विता सुधार्द्रहृदया कङ्कालमालाधरा। मध्यत्रिकोणे बाणलिङ्गशिवः अर्द्धचन्द्रबिन्दुरूपमस्तकः स्वर्णवर्णः कामोद्गमोल्लसितः। तदधः स्थिरतरदीपकलिकाकारहंसरूपी जीवात्मा। एतत्कर्णिकाधो रक्तवर्णोर्ध्वमुखाष्ट-

**भुजै पाशाभीत्यङ्कुशवरलसितैः शोभिताङ्गस्य तस्य मनोरङ्के नित्यं निवसति गिरिजाभिन्नदेहो हिमाभः। त्रिनेत्रः पञ्चास्यो लसितदशभुजो व्याघ्रचर्म्माम्बराढ्यः सदापूर्वो देवः शिव इति च समाख्यानासिद्धः प्रसिद्धः ॥ ॥ २९ ॥**

दलपद्मं। तत्रकल्पवृक्षरत्नवेदीचन्द्रातपपताकाद्यलङ्कृतं मानसपूजास्थानम् ॥ २७ ॥

इदानीं कण्ठदेशे विशुद्धचक्रं निरूपयति विशुद्धाख्यमित्यादि चतुर्भिर्विशुद्धाख्यमिति। विशुद्धिं तनुते यस्माज्जीवस्य हंसलोकनात् विशुद्धं पद्ममाख्यातं आकाशाख्यं महत् परमिति। अस्यार्थः कण्ठे विशुद्धाख्यं विशुद्धनामकं सरसिजं समास्ते इत्यन्वयः। पद्मं विशेषयति अमलमिति तेजोमयत्वात् मलरहितमित्यर्थः। स्वरैः सर्वैः अकारादिविसर्गान्तैः षोडशस्वरैर्दीप्तबुद्धेः निरन्तरयोगाभ्यासेन विषयानुरागरूपमलरहितत्वेन प्रकाशितबुद्धेः साधकस्य सम्बन्धे दीपितं प्रकाशितमित्यर्थः। स्वरैः कीदृशैः दलपरिलसितैरिति। एतेन स्वराणां षोडशत्वादेतत् पद्मं षोडशदलमिति सूचितम् व्यक्तमाहान्यत्र। तदूर्ध्वे षोडशदलं पङ्कजं धूम्रवर्णकम्। युक्तं शोणैः षोडशभिः स्वरैर्बिन्दुविभूषितैः आरक्तकिञ्जल्कयुतं व्योममण्डलमण्डितमिति। तथा पूर्णेन्दुप्रथिततमनभोमण्डलं पूर्णचन्द्रमण्डलवत् सम्पूर्णं शुक्लवर्णञ्च अतएव तत्तद्भूतसमाभानि मण्डलानि विदुर्बुधा इति नारदोक्तवचनेन मण्डलानां तत्तद्दैवतभूतसमानवर्णविधानात् नभसः शुक्लवर्णत्वात् तन्मण्डलस्यापि शुक्लवर्णत्वं प्रतीयते। नभोमण्डलं वृत्तरूपं समास्ते एतत्पद्मकर्णिकायामिति शेषः। शुक्लवर्णाम्बरस्येति। नभोमण्डलस्य मध्ये शुक्लवर्णस्याम्बरस्याकाशस्याङ्के सदापूर्वशिव इति स-

**सुधासिन्धोः शुद्धा निवसति कमले साकिनी पीतव-स्त्रा शरं चापं पाशं सृणिमपि दधती हस्तपद्मैश्चतुर्भिः।**

माख्यानासिद्धेः सदाशिवनाम्ना ख्यातो देवः सततं निवसतीति द्वितीयश्लोकेनान्वयः। अम्बरस्य कीदृशस्य हिमच्छायानागोपरि-लसिततनोः हिमच्छायया नागः हिमच्छायानागः इति तृतीया-न्ततत्पुरुषेण हिमोपमाविशिष्टनाग इत्यर्थः। यद्वा हिमच्छाया-तुल्यो नाग इति शाकपार्थिवादित्वात् मध्यपदलोपे तत्पदासिद्ध्या शुक्लवर्णनाग इत्यर्थः। अत्र नागो हस्ती व्यक्तमाह भूतशुद्धौ। तदन्तर्व्योमबीजञ्च शुक्लं हैममजस्थितामिति। हैमेति हिमस्याय-मितीदमर्थतद्धितप्रत्ययेन हैमगजः शुक्लहस्ती इत्यर्थः। ततश्च शुक्लहस्त्युपरि परिलसिता प्रकाशमाना तनुर्यस्य तादृशस्ये-त्यर्थः॥ २८॥

पुनः कीदृशस्य भुजैः पाशाभीत्यङ्कुशवरलसितैः शोभि-ताङ्गस्येति। पाशाङ्कुशवराभयहस्तस्येति फलितार्थः। पुनः कीदृ-शस्य मनोरिति। हमित्याकाशबीजं तदात्मकस्येत्यर्थः। तेनात्र क-र्णिकान्तरे नभोबीजं स्थितं तत्तु उक्तरूपेण चिन्तनीयमिति तात्प-र्य्यम्। सदाशिवं विशेषयति गिरिजाभिन्नदेहइति। अर्द्धनारी-श्वर इत्यर्थः। हिमाभः शुक्लवर्णः ततश्चार्द्धनारीश्वरत्वाद्वामार्द्धदेहं सुवर्णाभं दक्षिणार्धं शुक्लमिति। व्यक्तमाह शुक्लाम्बरेण संवीतं तत्र देवं सदाशिवम्। गिरिजाभिन्नदेहार्द्धं रौप्यहैमशरीरकमिति। तत्र नभोबीजक्रोडे इत्यर्थः। तथा सदा सुधास्राविचन्द्रमसः कलाधोमुखान्वितमिति निर्वाणतन्त्रे। विशुद्धचक्राधिकारे। यन्त्रमध्ये च वृषभं महासिंहासनन्ततः। तस्योपरि सदा गौरी

**सुधांशोः सम्पूर्णं शशपरिरहितं मण्डलं कर्णिकायां महा-**
**मोक्षद्वारं श्रियमभिमतशीलस्य शुद्धेन्द्रियस्य ॥ ३० ॥**

दक्षभागे सदाशिवः । त्रिनेत्रः पञ्चवक्त्रश्च प्रतिवक्त्रे त्रिलोचनः । विभूतिभूषिताङ्गश्च रजताचलसोदरः । व्याघ्रचर्मधरोदेवो फणिमालाविभूषित इत्यादि । तस्योपरि सदा गौरीति शिवस्यार्धाङ्गरूपेण स्थितेति व्यक्तमाह तत्रैव । या गौरी लोकमाता च शम्भोरर्द्धाङ्गहारिणीति । लसितदशभुज इति । लावण्येन प्रशंसितदशहस्त-युक्त इत्यर्थः । अत्र देवस्य दशभुजेष्वस्त्रविशेषानभिधानात् । शूलं टङ्ककृपाणवज्रदहनान्नागेन्द्रघण्टाङ्कुशान् पाशाभीतिहरं दधानममिताकल्पोज्ज्वलाङ्गं भजे इति ध्यानान्तरे यान्यस्त्राण्युक्तानि तान्यस्य भुजेषु चिन्तनीयानीति ध्येयम् । प्रसिद्ध इति प्राधान्येन ख्यात इत्यर्थः अन्यत् सुगमम् ॥ २९ ॥

एतत्पद्मकर्णिकायां साकिनीशक्तिस्थितिमाह । सुधासिन्धोरित्यादि । कमले विशुद्धचक्रकर्णिकायां साकिनी नाम्नी शक्तिर्निसवति इत्यन्वयः । तां विशेषयति सुधासिन्धोः शुद्धा इति । सुधासमुद्रसदृशशुक्लवर्णा तथा च यथा सुधासिन्धोरमृतमयसुशीतलशुक्लत्वं तथा ज्योतिःस्वरूपायाः साकिन्या उत्तापरहितशुक्लकिरणमिति भावः । ध्यानान्तरे साकिनीं विशेषयति । देवीं ज्योतिःस्वरूपां त्रिनयनलसितां पञ्चवक्त्राभिरामां हस्तैः पद्मैश्च पाशं सृणिमपि दधतीं पुस्तकं ज्ञानमुद्राम् । ध्यायेत् कण्ठस्थपद्मे निखिलपशुजनोन्मादिनीमस्थिसंस्थां दुग्धान्ने प्रीतियुक्तां मधुमदमुदितां साकिनीं साधकेन्द्र इति । ज्योतिःस्वरूपां ज्योतिषां स्वभावतः शुक्लवर्णत्वेनेयं शुक्लवर्णा । अत्र ध्यानद्वये द्विविधास्त्र-

इह स्थाने चित्तं निरवधि विनिधायात्तसम्पूर्णयोगः
कविर्वाग्मी ज्ञानी स भवति नितरां साधकः शान्तचेताः।

दर्शनादिच्छाविकल्पः। इयं देवी कर्णिकान्तश्चन्द्रमण्डले वर्त्तते। तदाह प्रेमयोगतरङ्गिण्याम्। तत्रास्ते साकिनी शक्तिः सुधांशोर्मण्डले शुभे इति। एतत्कर्णिकायां शुभ्रांशोश्चन्द्रस्य शशपरिरहितं निष्कलङ्कं सम्पूर्णमण्डलमपि विलसतीति पूर्वक्रियायामन्वयः। मण्डलं विशेषणेन प्रशंसति महामोक्षेत्यादि। एतन्मण्डलं शुद्धेन्द्रियस्य जितेन्द्रियस्य महामोक्षद्वारं निर्वाणमुक्तिमाहुः। एतच्चिन्तनादियोगमार्गमवलम्ब्य मुक्तिमाप्नोतीति भावः। श्रियमभिमतशीलस्येति। श्रियं योगलक्ष्मीमभिमन्यते आकाङ्क्षतीति श्रियमभिमतम्। तादृशं शीलं स्वभावो यस्य तद्रूपस्य शुद्धेन्द्रियस्येति विशिष्टार्थः। अत्र कर्णिकायां चन्द्रमण्डलादिस्थितिप्रकारस्तु आदौ कर्णिकान्तर्नभोमण्डलं तन्मध्ये त्रिकोणं तदन्तश्चन्द्रमण्डलं तन्मध्ये नभोबीजादिकमिति। तद्यथा कर्णिकायां त्रिकोणस्थं पूर्णचन्द्रन्तु चिन्तयेत्। हैमाभं गजमारूढमाकाशं तत्र चिन्तयेत्। शुक्लाम्बरेण संवीतं तत्र देवः सदाशिव इति। शुक्लाम्बरेण सम्वीतमाकाशमिति॥ ३०॥

विशुद्धचक्रचिन्तनफलमाह इह स्थाने इति। आत्मसम्पूर्णयोग इति। आत्मनि ब्रह्मणि सम्पूर्णो सर्वव्यापकत्वेन परिपूर्णो योगो ज्ञानं यस्य तादृशः। आत्तसम्पूर्णयोग इति आत्तः प्राप्तः सम्पूर्णयोगो येनेत्यर्थः। अतएवोक्तं श्रीमदाचार्यैः। पूर्णबोधात्मना तिष्ठेत् पूर्णाचलसमुद्रवदिति। ततश्च यः साधक इह स्थाने निरवधि चित्तं विनिधायात्तसंपूर्णयोगो भवति स ज्ञानी उपदेशं विना सर्वशास्त्रार्थवेत्ता शान्तचित्तः शान्तिगुणाव-

**त्रिकालानां दर्शी सकलहितकरो रोगशोकप्रमुक्तश्चिरञ्जीवी जीवी निरवधि विपदां ध्वंसहंसप्रकाशः ॥ ३१ ॥**

लम्बिचित्तः । दया भूतेष्वलोलुपत्वं मार्दवं ह्रीरचापलम् । तेजः क्षमा धृतिः शौचमद्रोहो नाभिमानितेत्यादिगुणोपहितचित्त इति यावत् । त्रिकालानां दर्शीति । अत्र केचित् ज्ञानलक्षणात्मकाः लौकिकसन्निकर्षरूपयोगधर्मेण सर्वं पश्यन्तीति । अन्ये तु तादृशजनस्यात्मप्रत्यक्षे तत्र भासमानसर्वप्रमेयवस्तूनां प्रत्यक्षो भवतीति वदन्ति । रोगशोकप्रमुक्तः सिद्धमन्त्रत्वाद्रोगमुक्तश्चिरजीवी छिन्नमायापाशत्वात् शोकरहित इत्यर्थः । स जीवी जनः नितरामतिशयेन कविर्भवति एवं सर्वत्र भवति क्रियान्वयः । निरवधिविपदां ध्वंस इति । अवधिः सीमा तद्रहितविपत् निरवधिविपत् आदिना पापपुण्यरूपकर्म्मबन्धे नानाविपत्तिरिति यावत् । तेषां ध्वंसाय विपत्तिप्रागभावासमानकालीनाविपत्तिनाशाय फलतो मोक्षाय हंसस्य सहस्रदलकमलकार्णिकान्तर्गतहंसरूपान्तरात्मनः प्रकाशो यस्य तादृशो भवतीति स्पष्टमन्यत् ।

तदयं महावाक्यार्थनिर्णयः कण्ठमूले विशुद्धचक्रं षोडशदलं धूमधूम्ररूपं आरक्तकेशरं रक्तवर्णसबिन्दुकषोडशस्वरयुक्तम् । कर्णिकायां नभोमण्डलम् वृत्तरूपं शुक्लवर्णम् । तन्मध्ये त्रिकोणं तत्र चन्द्रमण्डलम् । तदुपरि हं इति नभोबीजं शुक्लवर्णं शुक्लाम्बरपरीधानं शुक्लगजारूढं चतुर्भुजं पाशाङ्कुशवराभयधरं तत्क्रोडे वृषभोपरिस्थितमहासिंहासने सदाशिवः अर्द्धनारीश्वरत्वादर्द्धाङ्गसुवर्णाभार्द्धाङ्गशुक्लाभः पञ्चवक्त्रः त्रिनेत्रः दशभुजः शूलटङ्कखड्गवज्रदहननागेन्द्रघण्टाङ्कुशपाशाभययुक्तदशहस्तः व्याघ्रचर्म्माम्बरः भस्मलिप्तसर्वाङ्गः नागहारशोभितः सुधास्राव्यधोमुखार्द्धचन्द्रशेखरः

**आज्ञा नामाम्बुजन्तद्धिमकरसदृशं ध्यानधामप्रकाशं हक्षाभ्यां वै कलाभ्यां परिलसितवपुर्नेत्रपत्रंसुशुभ्रम् । तन्म-**

एतत्कर्णिकायां चन्द्रमण्डलमध्ये अस्योपरि स्थिता साकिनी श-क्तिः शुक्लवर्णा चतुर्भुजा पाशाङ्कुशधनुःशरकरा पीताम्बरा पञ्चव-क्त्रा त्रिनेत्रेति ॥ ३१ ॥

इदानीं भ्रूमध्यस्थिताज्ञाचक्रं निरूपयति आज्ञा नामाम्बु-जमित्यादि सप्तभिः । आज्ञासंक्रमणं तत्र भ्रुवोराज्ञेति कीर्तित-म् । आज्ञा नामेति अत्र भ्रुवोराज्ञासंक्रमणादाज्ञा नाम ततश्च तन्ना-मकंतत्प्रसिद्धमम्बुजमास्ते इति क्रियाऽध्याहारेणान्वयः । एतत् पद्मं भ्रूमध्ये स्थितं तद्यथा । तालुकण्ठं प्रविश्योर्ध्वं भ्रूयुगान्ते ।सितं शुभम् । द्विदलं हक्षवर्णाभ्यां मनोऽधिष्ठितमम्बुजमिति पद्मं वि-शेषयति हिमकरसदृशमिति । चन्द्रवच्छुक्लवर्णमित्यर्थः । तथा ध्यानधामप्रकाशं ध्यानस्य धाम्ना तेजसा तेजोरूपशक्त्या प्रकाशो यस्येत्यर्थः । अत्र ध्यानशक्त्या धामवत् प्रकाशितावयवमित्यर्थः । वर्णानां कलाबीजत्वात्तत्र कलापदप्रयोगः नेत्रपत्रं द्विदलं सुशुभ्र-मिति । हक्षाभ्यां सुशुभ्रमित्यर्थः । तथा च स्वभावशुभ्रं हक्षव-र्णयोगेनातिशुभ्रमिति भावः । एतेन हक्षवर्णयोरपि शुक्लत्वं सूचितं शुक्लयोगेनैव शुक्लस्यातिशय्यसम्भवात् । यद्वा आज्ञाचक्रं हिमक-रसदृशं चन्द्रस्यामृतमयशीतकिरणवत् शीतकिरणं तथा सुशुभ्रञ्च । हक्षाभ्यां कर्बूरवर्णाभ्यामिति बोद्धव्यम् । तदाह ईश्वरकार्त्तिकेयसं-वादे । आज्ञाचक्रं तदूर्ध्वे तु शुक्लं द्विदलमण्डितम् । कर्बुरहक्षलसितं मनोधिष्ठितराञ्जितमिति । एतत्कर्णिकायां हाकिनीशक्तिस्थितिमाह तन्मध्य इति । सा हाकिनी नाम्नी प्रसिद्धा । विद्यां पुस्तकमुद्रां वराभयरूपां तेनास्या भुजेषु षड्विधायुधदर्शनात् षड्भुजेयम् ।

**ध्येे हाकिनी सा शशिसमधरावक्त्रषट्कं दधाना विद्यां मुद्रां कपालं डमरुजपवटीं बिभ्रती शुद्धचित्ता ॥ ३२ ॥**

केचित्तु, विद्यामुद्रामित्येकविभक्त्यन्तं पठित्वा विद्यायै मुद्रां विद्यामुद्रां व्याख्यामुद्रामिति व्याख्यायास्याश्चतुर्भुजत्वं वदन्ति । किन्तु नानापुस्तके पृथग्विभक्त्यन्तपाठो दृश्यते इति सुधीभिर्विवेच्यम् । ध्यानान्तरेण हाकिनीं विशेषयति चक्रस्थां शुक्लवर्णां डमरुकरयुतामक्षसूत्रं कपालं विद्यां मुद्रां दधानां त्रिनयनविलसद्रक्तषड्वक्त्रयुक्ताम् । हारिद्रास्त्रे प्रसक्तां मधुमदमुदितां शुक्लमब्जं सुरूढां देवीं देवेन्द्ररत्नाकरमधुमुदितां भावयेत् हाकिनीं तामिति स्पष्टमन्यत् ॥ ३२ ॥

एतत्पद्मे मनःस्थितिमाह एतत्पद्मान्तराल इति । सूक्ष्मरूपमतीन्द्रियमित्यर्थः । ननु मनसोऽतीन्द्रियत्वात् तत्सत्तायां किं प्रमाणमित्याह प्रसिद्धमिति । अनादिपुरुषपरम्पराप्राप्तप्रत्यक्षकरणत्वेन प्रसिद्धम् । तथा सङ्कल्पञ्च विकल्पञ्च कुर्वाणा तु मनो भवेदित्यादिशास्त्रप्रमाणसिद्धञ्च । अत्र मानसस्थानं वक्ष्यमाणवेदादिबीजस्योर्ध्वदेशे वक्ष्यमाणवचनात् । अतएव शिवलिङ्गस्थितिमाह योनौ तत्कर्णिकायामिति । कर्णिकान्तस्त्रिकोणे इतरशिवपदम् इतरनामकशिवरूपं वस्तुनि वसतीति पूर्वक्रियान्वयः । लिङ्गचिह्नप्रकाशं लिङ्गरूपेण भासमानमित्यर्थः इदं लिङ्गं शुक्लवर्णं तदाह भूतशुद्धौ तदन्तस्थेतरं लिङ्गं स्फटिकाभं त्रिलोचनमिति लिङ्गं विशेषयति विद्युन्मालाविलासमिति । अत्र प्रणवस्थितिमाह परमेत्यादि । कर्णिकायां वेदादिबीजं प्रणवोऽपि वसतीत्यन्वयः । बीजं विशेषयति परमकुलपदमिति । कुलं शक्तिस्तदत्र त्रिकोणाकारपदं स्थानं परमं विद्युदाकारादिना उत्कृष्टं कुलं

एतत्पद्मान्तराले निवसति च मनः सूक्ष्मरूपं प्रसिद्धं
योनौ तत्कर्णिकायामितरशिवपदं लिङ्गचिन्हप्रकाशम्।
विद्युन्मालाविलासं परमकुलपदं ब्रह्मसूत्रप्रबोधं वेदानामा-
दिबीजं स्थिरतरहृदयश्चिन्तयेत्तत्क्रमेण ॥ ३३ ॥

पदं यस्य तादृशमित्यर्थः। तथा च तद्बीजं त्रिकोण-मध्यवर्त्तीति पर्य्यवस्यति। व्यक्तमाह कर्णिकायां त्रिकोण-स्थमात्मानं प्रणवाकृतिम्। ज्वलद्दीपनिभश्चोर्ध्वे नाद-रूपं मनोहरम्। बिन्दुर्मकाररूपश्च तदूर्ध्वं मानसालय इति! नन्वत्र परमकुलपदस्य प्रणवाधारत्वेनापृथक्त्वे मूलाधरं स्वाधि-ष्ठानं मणिपूरमनोहरम्। विशुद्धमाज्ञाचक्रश्च बिन्दुभूयः कलापदम्! निबोधिका तथार्द्धेन्दुर्नादो नादान्त एव च। उन्मनी विष्णुचक्रश्च ध्रुवमण्डलिकः शिवः। इत्येतत् षोडशाधारं कथि-तं योगिदुर्लभमिति वचने षोडशाधारगणनायां कलापदस्य पृथग-भिधानं कथं सङ्गच्छते इति चेन्न। तत्कलापदं नाज्ञाचक्रस्थं कि-न्तु वक्ष्यमाणमहानादोर्ध्वे शून्यदेशे स्थितमित्येतन्महानादप्रस्तावे स्फुटीभविष्यामः ब्रह्मसूत्रप्रबोधमिति। ब्रह्मसूत्रं चित्रिणीनाडी त-स्याः प्रबोधः प्रकाशो येनेत्यर्थः। अतएव पूर्वमुक्तं प्रणवविलसितेति। तदिति प्रदर्शितहाकिनीमन इतरलिङ्गवेदादिबीजरूपं तत्सर्वं स्थिरतरहृदयः सन् क्रमेण चिन्तयेदित्यर्थः। क्रमोऽत्र न ग्रन्थ-कारोक्तपाठक्रमः किन्तु पाठक्रमाच्छाब्दक्रमस्य बलवत्त्वात् प्रद-र्शितशाब्दक्रमो गृह्यते। एवञ्च पद्मकर्णिकायां हाकिनीशक्ति-स्तदूर्ध्वे त्रिकोणे इतरलिङ्गं तदूर्ध्वे त्रिकोणे प्रणवस्तदूर्ध्वे मन इ-त्येवं क्रमेण चिन्तयेदिति ॥ ३३ ॥

ध्यानात्मा साधकेन्द्रो भवति परपुरे शीघ्रगामी मुनी-न्द्रः सर्वज्ञः सर्वदर्शी सकलहितकरः सर्वशास्त्रार्थवेत्ता । अद्वैताचारवादी विलसति परमापूर्वसिद्धिप्रसिद्धो दीर्घायुः सोऽपि कर्त्ता त्रिभुवनभवने संहृतौ पालने च ॥ ३४ ॥

तदन्तश्चक्रेऽस्मिन्निवसति सततं शुद्धबुद्ध्यन्तरात्मा प्र-दीपाभज्योतिः प्रणवविरचनारूपवर्णप्रकाशः । तदूर्ध्वे च-

एतद्ध्यानस्य फलमाह ध्यानात्मेति । उक्तरूपेण ध्यान-परायणः साधकेन्द्रः परपुरे शीघ्रगामी भवतीति सर्वत्र क्रियान्वयः । मुनीन्द्रः मुनिर्ध्यानयोगादिसम्पन्नस्तदिन्द्रस्तत्श्रेष्ठः सर्वज्ञः पूर्वोक्त रूपेण सर्वदर्शी शास्त्रव्यवहाररीत्यनुरूपविवेकबुद्ध्या पूर्वापरदर्शी । अद्वैताचारवादीति । पादोऽस्य विश्वा भूतानीति तदिदं सर्वं ब्र-ह्मेत्यादिश्रुतिवाक्येन अहं देवो न चान्योऽस्मि ब्रह्मैवास्मि न शोकभाक् इत्यादिवाक्येन च ब्रह्मैवैकं सद्वस्तु तदन्यदसत् प्रप-ञ्चसमुदायस्तु ब्रह्माभासतया भासते इत्यवधारणमद्वैतम् । तादृ-शज्ञानेन यथाचारः जीवात्मपरमात्मनोरैक्यचिन्तनादिरूपयोगस्त-द्वादी तत्कथनशीलः स जनः अद्वैताचारवादी भवतीति फलितार्थः । परमापूर्वसिद्धिर्महासिद्धिस्तया प्रसिद्धः प्राधान्येन ख्यात इत्यर्थः । सोऽपि कर्त्ता त्रिभुवनभवने संहृतौ पालने चेति प्रशंसापरम् । अथवा तादृशसाधकस्य देहान्ते परमात्मनि लयात् यः सृष्टिस्थिति-प्रलयकर्त्ता स एवायं भवतीति तात्पर्य्यम् ॥ ३४ ॥

तदाज्ञाचक्रे प्रणवयोगं विवक्षुरादौ प्रणवं विशेषयति त-दन्तरिति । अस्यार्थः अस्मिन् चक्रे तदन्तस्तस्य पूर्वोक्तत्रि-कोणस्य अन्तर्मध्ये यः प्रणवविरचनारूपवर्णप्रकाशः प्र-

न्द्रार्द्धस्तदुपरिविलसद्बिन्दुरूपी मकारस्तदूर्द्धे नादोऽसौ
वलधवलसुधाधारसन्तानहासी ॥ ३५ ॥

इह स्थाने लीने सुसुखसदने चेतसि पुरं निरालम्बां
बध्वा परमगुरुसेवासुविदिताम्। तदभ्यासाद्योगी पवनसुहृ-

णवस्य विरचनारूपेण अकारोकारयोः सन्धियोगेन य-
स्त्रयोदशस्वरसदृशवर्णप्रकाशः सततं निवसति स शुद्धबुद्धचन्त-
रात्मा इत्यन्वयः। तं विशेषयति प्रदीपाभज्योतिरिति। ननु तर्हि
किं त्रयोदशस्वरसदृशवर्णमात्रं शुद्धबुद्धचन्तरात्मा इत्याह तदू-
र्ध्वे चन्द्रार्द्धस्तदुपरि लसद्बिन्दुरूपी मकार इति। तेन तादृशवर्णो-
परि अर्द्धचन्द्रबिन्दुयोगेन प्रकृतप्रणवस्वरूपः पर्य्यवस्यति। तदूर्ध्वे
नादोऽसाविति। प्रणवोर्ध्वे अवान्तरनादोऽस्तीति सतु वलधवल-
सुधाधारसन्तानहासी वलदेवस्य धवलं सुधाधारसन्तानञ्च उपह-
सितुं शीलं यस्येत्यर्थात् अतिशयशुक्लवर्णो नादः। केचित्तु, तदाद्ये
नादोऽसाविति पठन्ति तदाद्ये बिन्दुरूपीमकारस्याद्य इति व्याख्या-
यन्ति च। तदसत् तदुपरि विलसद्बिन्दुरूपीमकारइत्यनेन म-
काराद्ये नादप्राप्तौ पुनस्तदुपादानं व्यर्थं स्यात्। परन्त्वसौ नादः
प्रणवघटकीभूत-नादातिरिक्तोऽभिद्यमानपराबिन्दो-रवयव-विशेषः प्र-
णवोर्ध्वे वर्त्तते। यदि तु विशिष्टप्रणवनिरूपणे तदङ्गप्रत्यङ्गमेव
वक्तुमुचितम्। कथं तदतिरिक्तनादोऽप्रस्तुतः प्रस्तूयते इति चेत्त-
र्हि तदाद्ये नादोऽसाविति पाठोऽभिमन्यते। किन्तु तस्यायमर्थः।
तदाद्ये बिन्दुरूपमिकाराद्ये प्रदर्शितोऽसौ नादो। वलधवलसुधाधा-
रसन्तानहासीति पूर्वोक्तनादमनूद्य वलधवलेत्यादिविशेषणं विधी-
यते। न तु विशिष्टस्यविधानमतो न पौनरुक्तिदोषः॥ ३५ ॥

प्रणवं निरूप्य इदानीं तद्योगं निरूपयति इह स्थान इति।

**दां पश्यति कणान् ततस्तन्मध्यान्तः प्रविलसितरूपानपि सदा ॥ ३६ ॥**

अस्यार्थः योगिजनः पुरं बध्वा कुतुकेनान्तःपुरं संरुध्य तत्प्रकारेणान्तःपुरबोधकावनीभूतयोनिमुद्रां बध्वा इह इति यावत् । तेन पुःशब्देन योनिमुद्रा लक्ष्यते । तन्मुद्रां बध्वा इह स्थाने आज्ञाचक्रे तदभ्यासात् तस्य प्रणवस्य पुनः पुनश्चिन्तनात् तत्र चेतसि प्रणवे चतुर्दिक्षु लीने सति ततस्तदनन्तरं तन्मध्यान्तःप्रणवाधारत्रिकोणमध्ये अन्तरन्तरिक्षे पवनसुहृदां वह्नीनां कणान् वह्निकणवज्ज्योतिःस्फुलिङ्गान् पश्यति तेषां मानसप्रत्यक्षो भवति इत्यर्थः। अत्र पुरबन्धनं विना मनसः शुद्धस्थैर्य्यं न सम्भवतीत्यतः पुरं बध्वेत्युक्तं पुरबन्धनकारणयोनिमुद्रालक्षणमाह । ततो गुह्ये वामपादपार्ष्णिन्तु विनिवेशयेत् । तस्योपरि महादेवि दक्षपार्ष्णिंनिवेशयेत् । ऋजुकायशिरोग्रीवं काकचञ्चुपुटेन च । आकारेण बाहिर्वायुं जठरं परिपूरयेत् अङ्गुलीभिर्दृढं बध्वा करणानि समाहितः । अङ्गुष्ठाभ्यामुभे श्रोत्रे तर्जनीभ्यां विलोचने । नासारन्ध्रे च मध्याभ्यामन्याभिर्वदनं दृढम् । बध्वा मे प्राणमनसामेकत्वं तमनुस्मरन् । धारयेन्मारुतं सम्यक् योगोऽयं योगिवल्लभ इति । एवं मुद्रया वानुरोधे मनसः स्थैर्य्यमाह श्रुतिः । एवं हंसवन्मनो विचर्य्यते इतस्ततो विषयेषु भ्रमति तत्संयमेन मनःसंयमो जायते इत्यर्थः अथवा पुरं खेचरीमुद्रां बध्वा इत्यर्थः । तथापि न मनःस्थैर्य्यं भवति । तदाह चित्तञ्चरति खे यस्मात् जिह्वा चरति खे यतः । तेनेयं खेचरीमुद्रा सर्वसिद्धिनमस्कृतेति । अत्र चित्तस्य खेचरत्वान्मनःसंयोगाभावेन विषयज्ञानरहितत्वादुन्मनाभवति अत-

ज्वलद्दीपाकारं तदनु च नवीनार्कवहुलप्रकाशं ज्योतिर्वा गगनधरणीमध्यमिलितम्। इह स्थाने साक्षाद्भवति भगवान् पूर्णविभवोऽव्ययः साक्षी वन्हेः शशिमिहिरयोर्मण्डल इव ॥ ३७ ॥

एवोक्तम् उन्मन्या सहितो योगी न योगी उन्मनीं विनेति। प्रणवस्य ज्योतिःस्फुलिङ्गवेष्टितत्वं स्पष्टमाहान्यत्र। तदूर्ध्वं प्रणवाकारमात्मानं दीपसन्निभम्। स्फुलिङ्गज्योतिरिङ्गाभिर्वेष्टितं परितः शुभमिति। स्थाने कीदृशे सुसुखसदने निरवच्छिन्नसुखस्य सदनं यत्र तादृशे, पुरं किम्भूतां निरालम्वां निर्गतोऽवलम्वो मनसो विषयसम्वन्धो यया तादृशीमित्यर्थः। तथा परमगुरुसेवासुविदितामिति। परमः गुरुपरम्पराप्राप्तयोगाभ्यासनिपुणस्तादृशगुरुः तस्य सेवाभिर्जातकृपयोपदेशेन सुविदितामिति फलितार्थः। अतएवोक्तं गुरूपदेशात्तद्गम्यं नान्यथा शास्त्रकोटिभिरिति। कणान् किम्भूतान् प्रविलसितरूपान् प्रकृष्टरूपेण भासमानान् इति ॥ ३६ ॥

तादृशयोगिनां वह्निकणावान्तरप्रकारदर्शनमपि भवतीत्याह। ज्वलद्दीपाकारमिति। तदनु वह्निकणादर्शनमनु दर्शनान्तरं ज्योतिः पश्यतेत्यर्थः ज्योतिर्विशेषयति ज्वलद्दीपेत्यादि गगनधरणीमध्यमिलितमिति। गगनं तदूर्ध्वे शङ्खिन्या निवसति शिखरे शून्यदेशे विकाशमित्यनेन प्रदर्शितशङ्खिनीनाड्यूर्ध्वशून्यरूपगगनं धरणीमूलाधारस्थधरामण्डलं तदुभयोर्मध्यमिलितं मूलाधारादिसहस्रारपर्य्यन्तव्याप्तं ज्योतिरिति विशिष्टार्थः। वेति वाशब्दः समुच्चयार्थः। आज्ञाचक्रे सहस्रारवत् परमशिवस्थितिमाह इह स्थाने इति। भगवान् परमशिवः इह स्थाने साक्षाद्भवति स्वयं वर्त्तते इत्यर्थः।

भगवन्तं विशेषयति पूर्णविभव इत्यादि। पूर्णः स्वात्मनि परिपूर्णः सृष्टिकर्त्तृत्वाद्यशेषयोग्यतारूपविभवो यस्येत्यर्थः। अथ वा विभवोऽनन्तसृष्टिप्रपञ्चसमुदायः पूर्णः सर्वव्यापकत्वेन स्थितः तादृशविभवो यस्मादित्यर्थः। यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति इति श्रुतेः। यद्वा विभवो विभुत्वं पूर्णः सर्वव्यापकत्वेन स्थितस्तादृशः विभवो यस्येत्यर्थः। यद्वा पूर्णत्वं फलानुगहितविषयितानास्पदेच्छाकत्वं तादृशो विभवो यस्येति निगूढ़म्। आत्मातिरिक्तवस्तूनामनित्यत्वादाकाशादीनां विभुत्वं न सर्वकालव्यापकमिति विशेषः। अत्र परमशिवस्थितिं विशेषेण व्यनक्ति निर्वाणतन्त्रे। एतत्पद्मस्योर्ध्वदेशे ज्ञानपद्मं सुदुर्लभम्। पत्रद्वयसमायुक्तं पूर्णचन्द्रस्य मण्डलम्। तथा शम्भुर्वीजं हि तन्मध्ये साकारं हंसरूपकम्। तथा एवं हंसो मणिद्वीपे तस्य क्रोड़े परः शिवः। वामभागे सिद्धकाली सदानन्दस्वरूपिणीति। तस्य क्रोड़े हंसः इत्यस्य बिन्दुद्वयरूपविसर्गमध्ये तदाह सहस्रारमुपक्रम्य। बिन्दुद्वयन्तु तन्मध्ये विसर्गरूपमव्ययम्। तन्मध्ये शून्यदेशे तु शिवः परमसंज्ञक इति एवं सहस्रारदर्शनादत्राप्याकाङ्क्षायां तथा इति। अत्रानयोः शिवशक्त्योर्मायाबन्धनाच्छादनेन च नकारात्मरूपपरं बिन्दुरूपेण स्थितिर्बोध्या। तदुक्तमाज्ञाचक्रमुपक्रम्य उत्कलादिमतेऽत्रैव चनकाकाररूपिणी। सृष्टिं करोति भूतानि अत्र स्थित्वा सनातनीति। अत्र चनकाकाररूपः परमशिवः सदा वर्त्तते। उत्कलादिमते तु अत्र स्थित्वा सृष्टिं करोतीत्यर्थः। दृष्टान्तमाह वन्हेरित्यादि। यथार्केन्द्वग्निमण्डले भगवान् वर्त्तते तथात्रापीत्यर्थः। अर्कादिमण्डले भगवतोऽवस्थानं प्रसिद्धम्। यद्वा वह्निशशिमिहिरमण्डले सहस्रकमलस्थार्केन्द्वग्निमण्डले यथा चनकाकारेण भगवान् वर्त्तते तद्वदत्रापीति। सहस्र-

इह स्थाने विष्णोरतुलपरमामोदमधुरे समारोप्य प्राणं प्रमुदितमनाः प्राणनिधने! परं नित्यं देवं पुरुषमजमाद्यं त्रिजगतां पुराणं योगीन्द्रः प्रविलसति वेदान्तविदितम् ॥ ३८ ॥

दलेऽर्केन्द्वग्निमण्डले प्रदर्शयिष्यते । अतएव पीठपूजार्केन्द्वग्निमण्डलोपरि परमात्मज्ञानात्मनोः पूजा विधीयते । परमात्मा परमशिवः ज्ञानात्मा ज्ञानशक्तिस्तदुभयाभिन्नशिवशक्त्यात्मकश्चनकाकारबिन्दुरिति ध्येयम् ॥ ३७ ॥

आज्ञाचक्रे योगेन प्राणत्यागफलमाह इह स्थान इति । अस्यार्थः योगीन्द्रो जनः प्राणनिधने प्राणवियोगकाले प्रमुदितमनाः आत्मानन्देन हृष्टचित्तः सन् इह आज्ञाचक्रे विष्णोर्भगवतः स्थाने उपदर्शितबिन्दुरूपे प्राणं समारोप्य अथवा तद्वाह्यबिन्दौ प्राणं समारोप्य प्राणनिधने सति परं पुरुषं प्रविशतीत्यन्वितार्थः । पुरुषं विशेषयति नित्यमविनाशि देवं सृष्टिस्थितिप्रलयैः क्रीडन्तमजं जन्मरहितं त्रिजगतामाद्यम् अनेन पूर्ववर्त्तित्वात् सर्वेषां सर्वकारणत्वं सूचितम् । पुराणं पुराणपुरुष इति कृत्वा यो निगद्येत स एवायमिति भावः । वेदान्तो ब्रह्मनिरूपकश्रुतिवाक्यादि तज्ज्ञानज्ञाप्यमित्यर्थः । तदयं विष्णोःप्रास्थाने प्राणारोपणप्रकारः । प्रणवियोगकालं ज्ञात्वा ब्रह्मणि लीनो भवतीत्यानन्दितमनाः योगासनमासीनः सन् कुम्भकेन वायुं संरुध्य हृदिस्थं जीवात्मानं मूलाधारमानीय गुदमाकुञ्चय यथोक्तविधानेन कुण्डलिनीमुत्थाप्य मूलादिब्रह्मरन्ध्रान्तं तडिदाकारमानन्दं कुण्डलीनीमयं सूत्ररूपं नादं ध्यात्वा प्राणरूपश्वासपरमात्मकं हंसं तन्नादे विलाप्य जीवेन सह चक्रभेदक्रमेणाज्ञाचक्रमानीय तत्र स्थितायां कुण्डलिन्यां

**लयस्थानं वायोस्तदुपरि च महानादरूपं शिवार्द्धं सिराकारं शान्तं वरदमयं शुद्धबुद्धिप्रकाशम्। यदा योगी पश्येद् गुरुचरणयुगाम्भोजसेवासुशीलस्तदा वाचां सिद्धिः करकमलतले तस्य भूयात् सदैव ॥ ३९ ॥**

स्थूलसूक्ष्मक्रमात् पृथिव्यादिप्रपञ्चसमुदायं विलाप्य तां पुनर्जीवात्मना सह तत्र स्थितशिवशक्तिमयविन्दुनैकीभावमापाद्य तिष्ठेत् ततो ब्रह्मरन्ध्रभेदेन देहं त्यक्त्वा ब्रह्मणि लीनो भवेदिति। तदयं महावाक्यार्थनिर्णयः। अज्ञाचक्रं द्विदलं शुक्लवर्णं कर्बुरवर्णहक्षद्वययुक्तपत्रं कर्णिकायां चक्राधिष्ठात्री हाकिनी शक्तिः शुक्लवर्णा रक्तषड्वक्त्रा त्रिनेत्रा षड्भुजा वराभयाक्षमालाकपालडमरुपुस्तकधरा शुक्लपद्मोपरि स्थिता। तदूर्ध्वे त्रिकोणे इतरलिङ्गः शुक्लवर्णः विद्युदाकारः तदूर्ध्वेत्रिकोणे प्रणवाकृतिरन्तरात्मा प्रदीपाभज्योतिः तस्य चतुर्दिक्षु अन्तरिक्षे ज्योतिःस्फुलिङ्गबिम्बैर्वेष्टितः ज्वलद्दीपसदृशेन स्वतेजसा मूलादिब्रह्मरन्ध्रान्तप्रकाशकः। तदूर्द्ध्वे सूक्ष्मरूपं मनः। तदूर्ध्वे चन्द्रमण्डले हंसः परमशिवः सशक्तिक इति ॥ ३८ ॥

इदानीमाज्ञाचक्रोर्ध्वे सहस्रदलकमलाधःस्थानवर्त्तिकारणावान्तरशरीरं निरूपयितुमिच्छन्नाह लयस्थानं वायोरिति। अस्यार्थः यदा यस्मिन् काले योगिजनः गुरुचरणयुगाम्भोजसेवासुशीलः गुरुचरणयुगाम्भोजस्य सेवया सुशोभनं दृढतरैकाग्रमनोऽभिनिवेशेन सर्वाङ्गसुन्दरं शीलं योगानुष्ठानरूपसद्वृत्तं यस्य तादृशः सन् तदुपरि आज्ञाचक्रोर्ध्वे महानादरूपं महानादस्य रूपं पश्येत् तदा तस्य योगिनः करकमलतले सदा सर्वस्मिन् काले वाचां सिद्धिः वाक्यसिद्धिर्भूयादेवेत्यन्वितार्थः नादं विशेषयति लयस्थानं वायोरिति। अत्र महानादे वायोर्लयः यस्मादुत्पत्तिस्तत्र लयानिय-

**तदूर्ध्वे शङ्खिन्या निवसति शिखरे शून्यदेशे प्रकाशं वि-सर्गाधः पद्मं दशशतदलं पूर्णचन्द्रातिशुभ्रम् । अधोवक्त्रं कान्तं**

मात् यद्यपि भूतशुद्ध्यादौ स्पर्शतत्वे वायोर्लयस्तस्य च व्योम्नि-दृश्यते तथापि कदाचित् नादेऽपि वायोर्लयो भवतीति । अत्र पृथिवीकाराद्रसवती रसादजायत ककारात् सर्वाणि जलानि तीर्थानि रेफाद्वह्नितत्त्वं नादाद्वायुः सर्वप्राणमयः बिन्दोर्गगनं सर्व-शून्यं शब्दमयं तेभ्यः पञ्चविंशतिगुणमयतत्वं सर्वमिदं विश्वं ब्रह्माण्डं कालिकामयमिति श्रुतिवाक्येन कालीमन्त्रवर्णस्य सूक्ष्मे संहरणकाले नादे वायोर्लयो भवतीति ध्येयम् । शिवार्द्धमिति । शिवस्यार्द्धनारीश्वरत्वात् तदर्द्धं शक्तिस्तद्रूपं नादमित्यर्थः । सि-राकारमिति दन्त्यादि सिरोलाङ्गलस्तदाकारमित्यर्थः । तदूर्ध्वे तु महानादो लाङ्गलाकृतिरुज्ज्वल इति कार्त्तिकेयेश्वरसंवादवाक्यात् । यद्यपि कृषिको लाङ्गलं हलं गोदारणञ्च सीरश्चेत्यमरकोषे लाङ्ग-लवाचकसीरशब्दस्य चतुर्थस्वरयोगित्वं तथाप्यत्र वचनान्तरैक-वाक्यतानुरोधेन तृतीयस्वरयुक्तसिरःपदेनापि लाङ्गलः प्रतीयते इति । अथवा शिवाकारमिति तालव्यादिः तेन शिवशक्तिमयो-ऽयं नादः । तदुक्तं प्रपञ्चसारे । नादात्मना प्रबुद्धा सा निरा-मयपदोन्मुखी । शिवोन्मुखी यदा शक्तिः पुंरूपा सा तदा स्मृते-ति । अतएव तस्या एव शक्तेर्नादबिन्दू पृषत्युपयोग्यरूपाविति राघवभट्टेनाप्युक्तम् । अन्यत्र सातत्यसंज्ञा चिन्मात्रा ज्योतिषः सान्निधेस्तथा । विचिकीर्षुर्घनीभूय क्वचिदभ्येति बिन्दुतामिति । तथा श्रीमदाचार्य्यवाक्यम्, नाद एव घनीभूतः क्वचिदभ्येति बिन्दुतामिति अत्र सकलवचनपर्य्यालोचनया शक्तिरेव नादबिन्दु-

**तरुणरविकलाकान्तिकिञ्जल्कपुञ्जं ललाटाद्यैर्वर्णैः प्रविल-
सितवपुः केवलानन्दरूपम् ॥ ४० ॥**

रूपेणाविर्भूता सुवर्णकुण्डलमिव । नादबिन्दुः पुनरेकाकारैव इति निष्कर्षः वरदानारमित्यर्थः ॥ ३९ ॥

अथ समाधिरूपयोगानुशीलनसाधकानां समाधिकालात् प्रागेवं विचिन्त्यातिप्रयत्नः स्थूलसूक्ष्मक्रमात् सर्वं चिदात्मनि विलापयेदित्याचार्य्यवचनेन समाधेः पूर्वं स्थूलसूक्ष्मरूपसृष्टिप्रपञ्चसमुदायचिन्तनविधानात् तज्ज्ञानस्यावश्यकत्वादत्र वदन्ति । तत्र तावत् पृथिव्यादिपञ्च स्थूलरूपाणि मूलादिविशुद्धान्तचक्रे उक्तानि तदाश्रितत्वात् मूलाधारे भूमण्डले पादघ्राणेन्द्रियगन्धतत्त्वेति त्रिः । जलमण्डले पाणिरसनेन्द्रियरसतत्त्वेति त्रिः । वह्निमण्डले पायुचक्षुरिन्द्रियरूपतत्त्वेति त्रिः । वायुमण्डले उपस्थत्वगिन्द्रियस्पर्शतत्त्वेति त्रिः । नभोमण्डले वाक्श्रोत्रेन्द्रियशब्दतत्त्वेति त्रिरिति समुदायेन पञ्चदश तत्त्वानि वर्त्तन्ते । पृथिव्यादिना मिलित्वा विंशतितत्त्वानि स्थूलानि बोद्धव्यानि । इदानीं सूक्ष्मरूपाणि विधीयन्ते । तत्राज्ञाचक्रे सूक्ष्मरूपं मनः स्वयं प्रदर्शितम् । अपराण्याह कङ्कालमालिनीतन्त्रे आज्ञाचक्रमुपक्रम्य । मनश्चात्र सदा भाति हाकिनीशक्तिराञ्जितम् । बुद्धिप्रकृत्यहङ्कारालङ्कृतं तैजसं परमिति । अत्र बुद्धिप्रकृत्यहङ्कारात्मकसूक्ष्मरूपत्रयाणां स्थितिः प्रतीयते । तत्राहङ्कारस्य न पाठक्रमात् स्थितिः मूलाधारादिसर्वत्र पृथिव्यादिजनकस्य तत्तद्विलयाधारस्य च जन्यविलाप्ययोरधःस्थितिदर्शनात् पाठक्रमाच्छाब्दक्रमस्य बलवत्त्वाच्चात्रापि तथा स्थितिः कल्प्यते । तेनाहङ्कारे हरे व्योम सशब्दं तन्महत्यपि इति वचनात् व्योम्नो विलयार्थं तद्विलयाधिकरणस्याहङ्कारस्य प्रथमोपस्थितं तदादावहङ्कार-

स्तदूर्द्धे बुद्धिप्रकृत्योः स्थितिः। एतेषां जन्यजनकाभावमाह सारदायाम्। मूलभूतात्ततोऽव्यक्तात् विकृतात् परवस्तुनः। आसीत् किल महत्तत्वं गुणान्तःकरणात्मकम्। अभूत्तस्मादहङ्कारस्त्रिविधःसृष्टिभेदत इति। विकृतादिति इदं परवस्तुनः प्रतिबिम्बत्वेन विकृतिरूपं महत्तत्त्वादीनां प्रकृतित्वात् प्रकृतिनामकञ्च। अतएवोक्तं, प्रकृतिः परमाशक्तिर्विकृतिः प्रतिबिम्बतेति। तथा परं ब्रह्मात्मप्रकृतिप्रतिबिम्बस्वरूपिणीति प्रागुपदर्शितम्। सारदावचने महत्तत्त्वमिति। यदेव महत्तत्त्वं सैव बुद्धिः। तदाह ईशानशिवेन बोद्धव्यलक्षणा सैव प्रकृतिः शक्तिजृम्भिता। बुद्धितत्त्वं भवेद् व्यक्तं सात्त्विकं गुणमाश्रिता। सैव बुद्धिर्महन्नाम तत्त्वं साङ्ख्ये प्रगीयत इति। महत्तत्वन्तु गुणान्तःकरणात्मकम्। गुणाः सत्त्वरजस्तमोरूपाः अन्तःकरणमाह सारदायाम्। अन्तःकरणमात्मनः मनोबुद्धिरहङ्कारश्चित्तञ्च परिकीर्त्तितमिति एतत् समुदायात्मकं महत् तत्त्वम्। ननु मनसो महत्तत्त्वान्तर्गतत्वे तदन्तश्चक्रेऽस्मिन् प्रविलसति मनः सूक्ष्मरूपमित्यनेन पृथगभिधानं कथं सङ्गच्छते इति चेन्न तन्मनो न महत्तत्त्वान्तर्गतं किन्तु तदहङ्कारजन्यमतिरिक्तं तदाह। यतोऽपरं मनस्तत्त्वं ससङ्कल्पविकल्पकम्। तैजसादेव तज्जातमिति राघवभट्टः। एवञ्चाज्ञाचक्रस्थमनःपर्य्यन्तानां क्रमेण स्थितेर्विहितत्वात् तदूर्ध्वेऽहङ्कारादिना स्थितिर्बोध्या। ततश्चाज्ञाचक्रे हाकिनी इतरलिङ्गप्रणवमनोऽहङ्कार–बुद्धिप्रकृतीनामव्यवहितोर्द्धोर्ध्वक्रमेण स्थितिनिरूपणात् स्थानविशेषानभिहितस्य पूर्वदर्शितचन्द्रमण्डलस्य तेषामूर्ध्वे स्थितिरिति। ननु तेषामधः कथं न स्थीयते इति चेन्न। इन्दुर्ललाटदेशे च तदूर्ध्वे बोधिनी स्वयमिति सम्मोहनतन्त्रवचनेन वक्ष्यमाणाज्ञाचक्रोर्ध्ववर्त्तिन्योः समनियतयोरिन्दु-

बोधिन्योरधोभागे स्थितिबोधनात् तयोरव्यवधानाय सर्वोर्ध्वे एव तस्य स्थितिरिति। अथाज्ञाचक्रोर्ध्वे कारणरूपमाह सम्मोहनतन्त्रे। इन्दुर्ल्ललाटदेशे च तदूर्ध्वे बोधिनी स्वयम्। तदूर्ध्वे भाति नादोऽसावर्द्धचन्द्राकृतिः परः तदूर्ध्वं च महानादो लाङ्गलाकृतिरुज्ज्वलः। तदूर्ध्वे च कला प्रोक्ता आञ्जीति योगिवल्लभा। उन्मनी तु तदूर्ध्वे च यद्गत्वा न निवर्त्तत इति। तदूर्ध्वे बोधिनीत्यत्र तदूर्ध्वे ललाटोर्ध्वे आज्ञाचक्रोर्ध्वे इति यावत्। बोधिन्यधःस्थले विन्दुस्थितिमाह भूतशुद्धितन्त्रे। बिन्दुर्मात्रार्द्धतो देवी तदूर्ध्वं नादसंज्ञितम्। लयस्थानं तथा वायोर्महानादं तदूर्द्धे इति मात्रार्द्धा शक्तिः। बालसूर्य्यप्रतीकाशमासीद्बिन्दुमदक्षरम्। तदूर्द्धे चार्द्धमात्रा तु गान्धाररागमाश्रितेति बृहत्त्रिविक्रमसंहितावचनेनार्द्धमात्रायाः शक्तिवाचकत्वप्रतीतेः। अत्र द्वयोर्वचनयोरेकवाक्यतया यार्द्धमात्रा सैव बोधिनीति बोध्यम्। बिन्दुबोधिनी नादेति त्रयं बिन्दुमयपरशक्तेरूपविशेषः। तदाह सारदायाम्। सच्चिदानन्दविभवात् सकलात् परमेश्वरात् आसीच्छक्तिस्ततो नादो नादाद्बिन्दुसमुद्भवः। परशक्तिमयः साक्षात्त्रिधासौ भिद्यते पुनः। बिन्दुर्नादो बीजमिति तस्य भेदाः समीरिताः बिन्दुर्नादात्मको बीजं शक्तिर्नादस्तयोर्मिथः समवायः समाख्यातः सर्वागमविशारदैरिति। परशक्तिमयः परः शिवस्तेन शिवशक्तिमयो बिन्दुः। अयं ललाटोर्ध्वे स्थितो बिन्दुर्नादात्मकः शिवात्मकः। बीजं शक्तिर्बोधिनीरूपमित्यर्थः। नादस्तयोः समवायः सम्बन्धः क्षोभ्यक्षोभकरूपस्तेनायं क्रियाशक्तिरूपः एतत्त्रयोर्ध्वे महानादः पूर्वं प्रदर्शितः। तदूर्ध्वे च कला प्रोक्ता इति। कला शक्तिः आञ्जीति तिर्य्यक् रेखारूपमात्राकारा इत्यर्थः इयं शक्तिः सृष्ट्यादौ आविर्भूता तदुक्तं पञ्चरात्रे। एवमालोक्य सर्गादौ सच्चिदानन्दरूपिणीं समस्ततत्त्वसङ्घातां स्मृत्यधि-

च्छातृरूपिणीम् । व्यक्तां करोति नित्यां तां प्रकृतिं परमः पुमा-
निति । अन्यत्र शिवशक्तिसमायोगादव्यक्तात् परमेश्वरात् ।
आद्या भगवती देवी सैव त्रिपुरसुन्दरी । आसीच्छक्तिस्ततो नादो
नादाद्बिन्दुसमुद्भव इति । उन्मनी तु तदूर्ध्वे चेति । तल्लक्षणमाह
यत्र गत्वा तु मनसो मनस्त्वं नैव विद्यते । उन्मनी सा समा-
ख्याता सर्वतन्त्रेषु गोपितेति । ततश्च मनोवृत्तिमद्विषयावलम्बन-
चेष्टाकालीनविषयावलम्बनसामान्याभावसंपादनं तत्त्वमुन्मनीत्व-
मिति । सा च द्विविधा सहस्राराधारा निर्वाणकुलारूपा
एतत्स्थानस्थिता वर्णावलीरूपा । तथा च कङ्कालमालिनी-
तन्त्रे । सहस्रारकर्णिकायां चन्द्रमण्डलमध्यगा । सर्व-
सङ्कल्परहिता कला सप्तदशी भवेत् । उन्मनी नाम तस्या
हि भवपाशनिकृन्तनीति । तथा उन्मनीञ्च मालावर्णं स्मर-
णात् मोक्षदायिनीति । मालावर्णं वर्णावलीरूपमित्यर्थः ।
उन्मन्यधः समनीमाह भूतशुद्धौ । ततो हि व्यापिका
शक्तिराज्ञीति यां विदुर्जनाः । समनीमूर्द्धतस्तस्या उन्म-
नी तु तदूर्ध्वत इति । इदमपि परशक्तेरवान्तररूपम् । ततश्चाज्ञा-
चक्रोर्ध्वे द्वितीयबिन्दुः शिवस्वरूपः तदूर्ध्वे अर्द्धमात्राकारा बोधि-
नी शक्तिस्तदूर्ध्वे शिवशक्तिसमवायरूपाऽर्द्धचन्द्राकृतिर्नादस्तदूर्ध्वे
लाङ्गलाकृतिर्महानादस्तदूर्ध्वे आज्ञीरूपाव्यापिका शक्तिस्तदूर्ध्वे श-
मनी तदूर्ध्वे उन्मनीति क्रमेण सप्त कारणरूपाणि वर्त्तन्ते । अलम-
तिविस्तरेण प्रकृतमनुसरामः । सहस्रदलपद्मं निरूपयन्नाह तदूर्ध्वे
इति दशभिः । तदूर्ध्वे प्रागुपदर्शितसर्वेषामूर्ध्वे पूर्वोपदर्शितशङ्खि-
नीनाड्याः शिखरे मस्तके शून्यदेशे नाड्यनावृतस्थाने तेन सुषु-
म्नाया अपि ऊर्ध्वे इति सूचितम् । विसर्गस्याधः दशशतदलं सह-
स्रदलं पद्मं निवसति इत्यन्वयः । विसर्गन्तु ब्रह्मरन्ध्रस्योर्ध्वभागे त-

स्मिन् रन्ध्रे विसर्गश्च नित्यानन्दं निरञ्जनमित्यादि वक्ष्यमाणवचनात्। पद्मं विशेषयति पूर्णचंद्रेत्यादि नकाराद्यैर्वर्णैः प्रविलसितवपुरिति। अत्र नकारग्रहणं न विलोमेन वर्णचिन्तनार्थं किन्तु नकारग्रहणं क्षकारपरित्यागार्थम्। तस्यागर्वाजिं हि वर्णानां सहस्रदले स्थितिरावर्त्तनेनैव घटते। एवञ्च क्षकारसहितैकपञ्चाशद्वर्णानां विंशत्यावर्त्तने विंशत्यधिकसहस्रसंख्या भवन्ति। ऊनविंशत्यावर्त्तने तु एकत्रिंशन्न्यूनसहस्रसंख्या भवन्ति। अतः क्षकारपरित्यागेन तत् समाधीयते। तेनाकारादिलकारान्तपञ्चाशद्वर्णा अनुलोमेन विंशत्यावर्त्तनेन सहस्रदले चिन्तनीया इति ध्येयम्। अनुलोमेन वर्णचिन्तनं व्यक्तमाह कङ्कालमालिनीतन्त्रे। सहस्रारं महापद्मं शुक्लवर्णमधोमुखम्। अकारादिक्षकारान्तैः स्फुरद्वर्णैर्विराजितमिति। अत्र क्षकारान्तैरित्यत्रान्तशब्दस्यावसानार्थकत्वात् क्षकारोऽन्तेऽवसाने यस्येति बहुव्रीहिणा क्षकारं विहाय लकारान्तपञ्चाशद्वर्णयोगः। अथवा लकाराद्यैरिति लकारक्षकारान्तपञ्चाशद्वर्णानामकथादित्रिरेखावद्धामावर्त्तन यथायोग्यावर्त्तनेन विन्यासः। कङ्कालमालिनीवचनन्तु दक्षिणावर्त्तेन वर्णविन्यासविधायकमिति वचनद्वयोरविरोधः। अत्र पञ्चाशद्वर्णानां रूपविशेषानभिधानात्तद्वर्णमय्या मातृकायाः शुक्लवर्णत्वदर्शनात्तेऽप्यत्र शुक्लत्वेनैव चिन्तनीया इति ध्येयम्। ललाटाद्यैर्वर्णैरिति पाठे तु ललाटशब्देन मातृकान्यासोक्तललाटवर्ण अकारस्तदाद्यैर्वर्णैरित्यर्थः। एतत् पक्षे लकारं विहाय अकारादिक्षकारान्तं पञ्चाशद्वर्णयोगो बोध्यः। सर्वत्र पञ्चाशद्वर्णग्रहणे अन्त्यनकारत्यागदर्शनात्। अत्र केचित् प्रविलसिततनुरिति पठन्ति। तत्र वा पुंसि पद्ममिति दर्शनात् पुंसि विशिष्टस्य पद्ममित्यस्य विशेषणतया तनुरित्यस्यापि पुंस्त्वमिति व्याख्यायन्ति च। तत्र एतत् च्छ्लोकस्थनिवसतिक्रियायाः कर्तृत्वेन पद्म-

समास्ते तस्यान्तः शशपरिरहितः शुद्धसम्पूर्णचन्द्रः स्फुरज्ज्योत्स्नाजालः परमरसचयास्निग्धसन्तानहासी । त्रिकोणं तस्यान्तः स्फुरति च सततं विद्युदाकाररूपं तदन्तः शून्यं तत् सकलसुरगणैः सेवितञ्चातिगुप्तम् ॥ ४१ ॥

मिति बिन्द्वन्तनिर्देशात् क्लीवलिङ्गप्रयोग एव प्रतीयते न तु पुंलिङ्गप्रयोगस्तथात्वे विसर्गान्तो भवितुमर्हति अतस्तद्विशेषणस्य तनुशद्वस्य क्लीवत्वमवश्यं वाच्यं तथात्वे बिन्द्वन्तता न भवति निर्बिन्दुत्वे छन्दःपातस्तस्माद्वपुरित्येव पाठः । स्पष्टमन्यत् ॥ ४० ॥

सहस्रदलकमलकर्णिकायां चन्द्रमण्डलस्थितिमाह समास्तेति । तत्रान्तः तत्र पद्मे अन्तर्मध्ये । शुद्धः निर्मलोदयविशिष्टः । चन्द्रं विशेषयति स्फुरदित्यादि परमरसचयास्निग्धसन्तानहासीति स्निग्धः आर्द्रसदृशभावस्तस्य सन्तानो विस्तारो यत्र इत्यर्थः । ततश्च परमामृतरसचयेन उत्तापहानतया स्निग्धसन्तानयुक्तोहासवदानन्दमयकिरणविशिष्ट इत्यर्थः । अथ चन्द्रमण्डलस्याध ऊर्ध्वे अन्तरात्मादीनां स्थितिमाह कङ्कालमालिनीतन्त्रे । सहस्रारमुपक्रम्य तत्कर्णिकायां देवेशि अन्तरात्मा ततो गुरुः । सूर्य्यस्य मण्डलञ्चैव चन्द्रमण्डलमेव च । ततो वायुर्महानामा ब्रह्मरन्ध्रं ततः स्मृतम् । तस्मिन् रन्ध्रे विसर्गञ्च नित्यानन्दं निरञ्जनम् । तदूर्ध्वे शङ्खिनी देवी सृष्टिस्थित्यन्तकारिणीति । तत्रान्तः चन्द्रमण्डलमध्ये सततं निरन्तरं विद्युदाकाररूपं त्रिकोणं स्फुरतीति । तदन्तःशून्यमिति । अन्तर्मध्ये शून्यं यस्य तदन्तःशून्यं परं बिन्दुशरीरं तस्मिन् त्रिकोणे अन्तःशून्यं तदन्तःशून्यं त्रिकोणमध्यवर्त्ति परं बिन्दुरूपं शून्यं स्फुरतीति क्रियान्वयः । यद्वा तदन्तस्त्रिकोणमध्ये शून्यं परं बिन्दुरूपं स्फुरति अतएवोक्तं तोड़नतन्त्रे षष्ठोल्लासे निराकारं परं

**सुगुप्तं तद् यत्नादतिशयपरमामोदसन्तानराशेः परं कन्दं सूक्ष्मं सकलशशिकलाशुद्धरूपप्रकाशम्। इह स्थाने देवः परमशिवसमाख्यानसिद्धः प्रसिद्धः स्वरूपी सर्वात्मा रसविरसमितोऽज्ञानमोहान्धहंसः ॥ ४२ ॥**

ज्योतिर्बिन्दुश्चाव्ययसंज्ञकम्। बिन्दुशब्देन शून्यं स्यात् तथा च गुणसूचकमिति। अत्राहारनिर्हारविहारयोगाः सुसंवृताः धर्मविदा तु कार्य्या इति वचनात् योगस्य गोपनेनानुष्ठानाविधानात् तदन्तः-शून्यमतिगुप्तं यथा स्यात्तथा सकलसुरगणैः सेवितमाराधित-मित्यर्थः ॥ ४१ ॥

सुगुप्तमिति। अस्यायमर्थः वक्ष्यमाणकेशाग्रकोटिभागैकरूप-त्वादतिगुप्तं तच्छून्यं यत्नात् चिरनिरंतरध्यानाद्यनुष्ठानात् सकल-शशिकलाशुद्धरूपप्रकाशं कला निर्वाणकला तया सह वर्तमाना या शशिनश्चन्द्रस्य षोड़शी कला तया निर्म्मलरूपप्रकाशो यस्य तदित्यर्थः। तथाचातिसूक्ष्ममपि त्रिकोणान्तर्वर्त्त्यमा कला निर्वाणक-लासहितपरं बिन्दुं रूपान्तशून्यं ध्यानेन प्रकाशितं भवतीति भावः परमामोदसन्तानराशेर्मोक्षस्य परं कन्दं प्रधानमूलमित्यर्थः। सुगु-प्तमित्यत्र सुगोप्यमिति पाठे यत्नादित्यस्य उभयत्रान्वय इति ध्येयं केचित्तु त्रिकोणान्तःशून्यं शून्यस्थानं तत्तु कीदृशं सकलशशि-कलाशुद्धरूपप्रकाशम्। शशिनश्चन्द्रस्य सकलकलाः सम-स्तकलाः षोड़शकलाः तत् शुद्धं शुक्लं यद्रूपं तदेव प्रकाशो यस्य तादृशपूर्णचन्द्रप्रकाशमित्यर्थः इति व्याख्यायन्ति तच्चिन्त्यम्। तत्त्रिकोणस्य पूर्णचन्द्रमण्डलमध्यवर्त्तित्वकथनेनैव त्रिकोण-मध्यस्थानस्य पूर्णचन्द्रतुल्यप्रकाशप्राप्तौ पुनस्तत्कथनं व्यर्थं स्यात्। किञ्च सकलसुरगणैः सेवितामित्यनेन शून्यस्थानस्य

सुधाधारासारं निरवधि विमुञ्चन्नतितरां यतेः स्वात्मज्ञानं दिशति भगवान् निर्म्मलमतेः। समास्ते सर्वेशः सकलसुखसन्तानलहरी परीवाहो हंसःपरम इति नाम्ना परिचितः॥ ४३॥

सेवनं न युज्यते किन्तु त्रिकोणान्तर्बिन्दोरेव सेव्यत्वमिति। यदि तु तत् शून्यस्थानस्य परं बिन्दोराधिष्ठानात् सेव्यत्वमित्युच्यते तदा तत् शून्यस्थानमेव नो भवतीति सुधीभिर्भाव्यम्। सहस्रदलकर्णिकायां परमशिवस्थितिमाह इह स्थान इति। इह स्थाने कर्णिकायामित्यर्थः। परमशिवसमाख्यानसिद्धः परमशिवनाम्ना ख्यातो देवो वर्त्तते इति शेषः। देवं विशेषयति स्वरूपीति। ब्रह्मरूपि ब्रह्ममयमिति यावत्। सर्वात्मा सर्वेषां जीवानामात्मा जीवात्मस्वरूपः जीवात्मपरमात्मनोर्वस्तुतो भेदाभावात्। आत्मा स एव जीवः अतएवोक्तमध्यात्मरामायणे। जीवात्मा परमात्मा च पर्य्यायो नात्र भेदधीः। आचार्य्यशास्त्रोपदेशादैक्यज्ञानं यदा भवेत्। आत्मनोर्जीवपरयोर्मूला विद्या तदैव तु इत्युक्तम्। श्रुतिरपि तत्त्वमसि इति वाक्येन तत्त्वं पदयोरेकार्थत्वं दर्शयति। रसविरसमित इति। रसः परमानन्दरसः विरसस्तद्वैलक्षण्येन शिवशक्तियोगजन्यसामरस्यानन्दरूपः। तदुभयरसमितः प्राप्त इत्यर्थः। अथवा रसः प्रथमोपस्थितत्वेन विषयसस्तस्मिन् विरसा हेयता बुद्धिर्येन रसेन स परमानन्दरसस्तन्मित इत्यर्थः। अज्ञानमोहान्धहंसः अज्ञानमोहान्धकारनाशकत्वात् हंसः सूर्य्यरूप इत्यर्थः॥ ४२॥

सुधाधारासारं निरवधि विमुञ्चन्नतितरामिति। निरवधि निरन्तरमतितरामतिशयं यथा स्यात्तथा सुधाधाराख्यसारं वस्तु वि-

मुञ्चन्नित्यर्थः । अथवा सुधाया आधारश्चन्द्रस्तस्मादाश्रियते निःश्रियते यत् तत् सुधाधारासारं शुक्लवर्णामृताकिरणं विमुञ्चन् प्रकाशयन्नित्यर्थः। एतद्विशेषणेन विशेष्यस्य चंद्रवत् शुक्लवर्णत्वं सूचितम् । यद्वा आसार्य्यते निःसार्य्यते उच्चार्यते इति यावत् तद्वाक्यं सुधाधारया सह आसारं सुधाधारासारं सुधामयवाक्यमित्यर्थः ततश्च निरवधि सर्वस्मिन् काले अतितरां मोहनाशायातिप्रबलतरं सुधामयवाक्यं विमुञ्चन् उच्चरन् सन् यतेरुपास्यदेवतायां नियतमनसः स्वात्मज्ञानं स्वञ्जीवात्मा तेन सहात्मा परमात्मा ज्ञायतेऽनेनेति अत्रापृथक्साहित्येन जीवात्मभेदेन परमात्मज्ञानकारणं तारकब्रह्ममंत्रमुपदिशतीति समुदायार्थः । अथवा सुधा कृपामृतं तद्धारया युक्तं सारं ब्रह्ममन्त्रात्मकसारवाक्यमुच्चरन् स्वात्मज्ञानं दिशतीत्यर्थः । एतद्विशेषणेन तारकमन्त्रोपदेशकत्वज्ञापनात्तु विशेष्यगुरुत्वं सूचितम् । एवञ्चैतद्विशेषणं पूर्वश्लोकोक्तपरमशिवस्यैव गुरुत्वात् । अतएव ललितारहस्ये गुरुतत्वनिरूपणे । ख्यातोऽयं पुरुषश्रेष्ठः सर्वदात्मरतिप्रिय इत्यादिना गुरुं वर्णयित्वा, तेजोरूपा प्रिया तस्य ब्रह्मवर्त्म सुदुर्लभा । परमं ब्रह्म यत्पादपङ्कजद्युतिवैभवमित्युक्त्या शोभाधिक्येन पदपङ्कजयोः परब्रह्मरूपपरमशिवस्य हृत्पद्मादिति व्याख्यातम् । तेजोरूपगुरुप्रियायाः पादद्वयारोहणं गुरुहृदय एव न त्वन्यपुरुषस्येति । अतो यः परमशिवः स एव गुरुरिति तात्पर्य्यम् । निर्वाणतन्त्रेऽपि । शिरःपद्मे महादेवस्तथैव परमो गुरुः । तत्समो नास्ति देवेशि पूज्यो हि भुवनत्रये । तदंशं चिन्तयेद्देवि बाह्ये गुरुचतुष्टयमिति । अयं परमशिवः कर्णिकान्तस्त्रिकोणस्य बहिरधः कथ्यमानहंसः इत्यस्योपरि वर्त्तते पूर्वोक्तकङ्कालमालिनीतन्त्रवचने, तत्कर्णिकायां देवेशि अन्तरात्मा ततो गुरुः । सूर्य्यस्य मण्डलं तत्र चन्द्रमण्डलमेव च । इ-

स्यादिना क्रमेण महाशङ्खिनीशक्तिपर्य्यन्तास्थितिमभिप्राय। तस्या-
धस्ताच्च देवेशि चन्द्रमण्डलमध्यगम्। त्रिकोणं तत्र सञ्चिन्त्य क्ष-
यहीनात्मिका कला। तन्मध्ये कुटिला निर्वाणाख्यसप्तदशी क-
लेति वचनेन चन्द्रमण्डलान्तास्त्रिकोणेऽमाकलादीनामेव स्थितेरु-
क्तत्वात्। गुरुस्तु तदधोऽन्तरात्मन उपरि स्थितिरुवाच। ननु
कङ्कालमालिनीवचनेऽन्तरात्मन उपरि गुरोः स्थितिरुक्ता तत्कथं
हंसस्य ऊर्ध्वे गुरोः स्थितिरुच्यते इति चेन्न हंसान्तरात्मनोरेकार्थ-
त्वात्। तथाहि कङ्कालमालिनीतन्त्रे गुरुध्यानं यथा। सहस्रदल-
मध्यस्थमन्तरात्मानमुत्तमम्। तस्योपरि नादबिन्दोर्मध्ये सिंहासनो-
ज्ज्वलम्। तस्मिन् निजगुरुं नित्यमित्यादि। तथान्यत्र हंसः पीठे
मन्त्रमये स्वगुरुं शिवरूपिणम्। अमुकानन्दनाथान्तं स्मरेत्तन्नाम-
पूर्वकमिति। तथा अन्नदाकल्पे। शिरःपद्मे शुक्ले दशशतदले क-
शरगते पतत्रीणां तल्पे परमशिवरूपं निजगुरुमिति। एतेषां व-
चनानां पर्य्यालोचनया हंसान्तरात्मनोरभेदः प्रतीयते। एवं परम-
शिवरूपं निजगुरुमित्यनेन परमशिव एव गुरुरिति भाव्यम्। यत्तु,
सहस्रदलमुपक्रम्य तन्मध्ये तु त्रिकोणं स्याद्विद्युदाकाररूपकम्।
बिन्दुद्वयञ्च तन्मध्ये विसर्गरूपमव्ययम्। तन्मध्ये शून्यदेशे तु
शिवः परमसंक्रयः इति वचनं परमशिवस्य त्रिकोणमध्ये स्थिति-
बोधकम्। तन्मतभेदेन सहस्रदलकमलाभिन्नतत्कर्णिकाधोवर्त्त्यूर्ध्व-
मुखद्वादशदलकर्णिकान्तस्त्रिकोणे गुरुस्थितिबोधकमेतत् पादुकाप-
ञ्चकस्तोत्रे स्पष्टीकृतम्। न तूर्ध्वसहस्रदलकर्णिकात्रिकोणे गुरुस्थि-
तिबोधकम्। मध्यत्रिकोणस्याधस्तनत्रिकोणान्तरे तद्रूपेण स्थितम्।
अन्यथा कङ्कालमालिनीतन्त्रवचनविरोधात्। समास्ते सर्वेश इति
अत्र कर्णिकायां सर्वेषामीश्वरः समास्ते इत्यर्थः। नन्वत्र परमशि-
वस्थितिकथनेनैव ईश्वरस्थितिरुक्ता तत् कथं पुनः सर्वेशस्थितिरु-

च्यते इत्यतः सर्वेशं विशेषयति हंस इति । अयं सर्वेशो हंसः इत्यानुपूर्विकमन्त्राकारः । तदुक्तं प्रपञ्चसारे । सा तत्त्वसंज्ञा चिन्मात्रा ज्योतिषः सन्निधेस्ततः । विचिकीर्षुर्घनीभूय क्वचिदभ्येति विन्दुताम् । कालेन भिद्यमानस्तु स विन्दुर्भवति द्विधा । बिन्दुर्दक्षिणभागश्च वामभागो विसर्गकः । तेन दक्षिणवामाख्यौ भागौ पुंस्त्रिविशेषितौ । हङ्कारो बिन्दुरित्युक्तो विसर्गः स इति स्मृतः । बिन्दुः पुरुष इत्युक्तो विसर्गः प्रकृतिः स्मृतः । पुंप्रकृत्यात्मको हंसस्तदात्मकमिदं जगदिति । सुव्यक्तमाह महाकालीतन्त्रे प्रथमपटले । सहस्रारान्तरे शून्ये दिव्यतोरणशोभिते । चन्द्रमण्डलमध्ये तु हंसवर्णद्वयोपरि । शुद्धस्फटिकसङ्काशं शुद्धक्षौमविराजितमित्यादि । अत्र हंसवर्णद्वयोपरीति सुव्यक्तम् । अथवा हंसः परम इति नाम्ना च परिचितो विख्यात इत्यर्थः । अतएव ग्रन्थकारेणाष्टचत्वारिंशत्श्लोके केचित् हंसाख्यमेतदित्यनेन हंसनामकत्वं स्वयमुक्तम् । यद्वा हंसोऽन्ते यस्य स हंसोऽन्तः हंसोऽन्तश्चासौ परमश्चेति कर्म्मधारयेन शाकपार्थिवादित्वात् मध्यपदलोपे हंसपरम इति सिद्धम् । तेन परमहंस इति नाम्ना परिचित इत्यर्थः । अतएवोक्तम् आगमकल्पद्रुमे । असौ परमहंसाख्यो युक्तः स्थावरजङ्गमैः इति । सकलसुखसन्तानलहरीपरीवाह इति । सर्वप्रकारसुखं सकलसुखं तस्य सन्तानो विस्तारः स एव लहरी श्रेणी परि सर्वतोभावेनोह्यते उत्तरोत्तरकालस्थायित्वेन प्रकाश्यते यस्मिन् इत्यर्थः । ततश्च श्रेण्याकारेण सर्वव्यापकसर्वप्रकारसुखविशिष्ट इति यावत् अयं हंसः परमशिवस्याधोवर्त्तीत्युक्तं गाढ़ ॥ ४२ ॥

शिवस्थानं शैवाः परमपुरुषं वैष्णवगणा लपन्तीति
प्रायो हरिहरपदं केचिदपरे। परं देव्या देवीचरणयुगलाम्भो-
जरसिका मुनीन्द्रा अप्यन्ये प्रकृतिपुरुषस्थानममलम् ॥४४॥

इदं स्थानं ज्ञात्वा नियतनिजचित्तो नरवरो न भूयात्
संसारे पुनरपि न बद्धस्त्रिभुवने। समग्रा शक्तिः स्यान्नियत-

एतत्कर्णिकायां सर्वदेवतामयहंसादीनामधिष्ठानात् शैव-
शाक्तादिसकलोपासकानामुपास्यदेवतास्थानमित्याह। शिव-
स्थानमिति। शैवाः शिवोपासका एतत्पद्मं शिवस्थानं लपन्ति
वदन्तीत्यर्थः। परमपुरुषं परमपुरुषस्य विष्णोः स्थानमिदमर्थनद्धि-
तप्रत्ययेन सिद्धम्। केचिदिति। ये हरिहरोपासकास्ते शैवा वै-
ष्णवाश्च ते केचित् अपरे केवलशिवविष्णूपासकेतराः हरिहरपदं
लपन्ति अतः सर्वे शैवा वैष्णवाः केवलशिवस्थानं केवलविष्णु-
स्थानं न वदन्ति इत्यभिप्रायेण उक्तमन्ये युगलभजनशीलाः।
यद्वा अन्ये हंसमंत्रोपासका मुनीन्द्राः प्रकृतिपुरुषस्थानं हंसस्य
प्रकृतिपुरुषोभयरूपत्वात् तदधिष्ठितस्थानं लपन्तीत्यर्थः। एतत्
प्रदर्शनमात्रं तत्स्थाने सर्वदेवतामयपरं बिन्दोरधिष्ठानात् यो
यद्दैवतोपासकः स तद्देवतास्थानं वदतीति बोध्यम् ॥ ४४ ॥

सहस्रारज्ञानफलमाह इदं स्थानमिति। साङ्गोपाङ्गरूपेणैतत्-
स्थानज्ञानं भवतीति भावः। नियतनिजचित्त इति। नियतं तत्र
नियुक्तं निजचित्तं येन इत्यर्थः न भूयात् संसारे मुक्तो भवतीति
भावः। यतः क्वचिदपि न बद्धस्त्रिभुवने इति हेतुगर्भविशेषणम्।
बद्धः पुण्यपापरूपमायापाशबद्धः। तदुक्तं भागवते। कर्म्मणि क्रि-
यमाणे तु गुणैरात्मनि मन्यते। तदस्य संस्मृतिर्बन्धः पारतन्त्र्यञ्च

**तमनसस्तस्य कृतिनः सदा कर्त्तुं हर्तुं खगतिरपि वाणी सुवि-विमला ॥ ४५॥**

**अत्रास्ते शिशुसूर्यसोदरकला चन्द्रस्य सा षोडशी शुद्धा नीरजसूक्ष्मतन्तुशतधाभागैकरूपा परा। विद्युत्कोटिस-**

तत् स्मृतमिति। भगवद्गीतायामपि। स्वभावो येन कौन्तेय नि-रुद्धः स्वेन कर्म्मणेति। ततश्च पुण्यपापभोगार्थं शरीरधारणात् बन्धः। स च स्वर्गे पुण्यभोगार्थं पाताले पापभोगार्थं मर्त्ये उभय-भोगार्थं भवतीति। तत्त्वज्ञानिनान्तु बन्धहेतुभूतपुण्यपापानुदयात् सञ्चितपुण्यपापक्षयाच्च क्वचिदपि कस्मिन् कालेऽपि त्रिभुवने स्वर्गमर्त्त्यपाताले न बद्धः न शरीरी भवति। सोऽयं प्रार-ब्धकर्मभोगपर्य्यन्तं जीवन्मुक्तः सन् तिष्ठति देहान्ते मुक्तो भव-तीति भावः। तस्य पुण्यपापानुदयमाह कुलार्णवे। अश्वमेधशते-नापि ब्रह्महत्याशतेन च। पुण्यपापैर्न लिप्यन्ते येषां ब्रह्म हृदि स्थितमिति। तथा भगवद्गीतायाम्। नैव तस्य कृतेनार्थो-नाकृतेनेह कश्चन। न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रय इति। तस्य प्रक्रान्ततत्त्वज्ञानिनः कृतेन कर्म्मणा पुण्यं नास्ति न चाकृतेन नित्यकर्म्मणा कश्चन प्रत्यवायोऽस्तीति सुबोधिनीव्याख्यानम्। स-ञ्चितपुण्यपापक्षयमाह श्रुतिः। तस्मिन् मनसि लीने गते सङ्कल्पवि-कल्पे दग्धे पुण्यपापे सदाशिवः शक्त्यात्मा शान्त इति। भगवद्-गीतायामपि ज्ञानाग्निः सर्वकर्म्माणि भस्मसात् कुरुते तथेति। तस्य समग्रा सर्वकार्य्यसाधिका शक्तिः स्यात्। शक्तिकार्य्यं दर्श-यति सदा कर्त्तुमिति अभीष्टकार्यं कर्तुं तथा हर्त्तुमनिष्टं संहर्त्तुं शक्तिः खगतिराकाशपथगमनं सुविमला मधुरगद्यपद्यमयी वाणी स्यादिति सर्वत्रान्वयः॥ ४५॥

**मानकोमलतनूर्विद्योतिताधोमुखी पूर्णानन्दपरम्परातिविग-लत्पीयूषधाराधरा ॥ ४६ ॥**

**निर्वाणाख्यकला परा परतरा सास्ते तदन्तर्गता के-शाग्रस्य सहस्रधाविभजितस्यैकांशरूपा सती। भूतानाम-**

अथात्र पूर्वं तदन्तःशून्यं तदित्यनेन सकलशशिकलाशुद्ध-रूपप्रकाशमित्यनेन च सहस्रारकर्णिकान्तस्त्रिकोणे अमाकला नि-र्वाणकला परं विन्दूनामधिष्ठानं स्थूलेनाभिहितम्। इदानीं तेषां स्वरूपेण इतरभेदकविशेषणेन च स्पष्टयितुमिच्छन्नादावमाकलास्व-रूपमाह अत्रास्ते इति। शशिसूर्यसोदरमित्यनेन कलाया रक्तवर्णत्वं ज्ञापितम्। चन्द्रस्य या षोड़शीत्यनेनेयममाकलेति ज्ञापितम्। नीरजतन्तुर्मृणालसूत्रं तस्य शतभागो दीर्घफालनेति बो-ध्यम्। शुद्धा कलङ्करहिता परा चिच्छक्तिरूपा चिच्छक्तेरवेदं रूपम्। अवएवोक्तं प्रभासखण्डे। संस्थिता परमा माया देहिनां देहधारिणीति अमाविशेषणम्। नित्यानन्दपरम्परेति ब्रह्मपरम्परो-त्पन्ना इत्यर्थः अतिविगलत्पीयूषधाराधरा अतिशयामृतस्राविणी-त्यर्थः। यद्वा नित्यानन्दपरम्परातिविगलत्पीयूषधाराधरेत्येकविशेष-षणम्। अस्यार्थः परं विन्दुरूपं शिवः परा प्रकृतिः शक्तिः। आनन्देन समग्रसानन्देन परम्पराभ्यां शिवशक्तिभ्यामतिविगल-न्ती या पीयूषधारा परामृतधारा। नित्यं निरन्तरं तादृशधारा इव धारां धारयतीत्यर्थः। स्पष्टमन्यत्॥ ४६॥

निर्वाणकलास्वरूपमाह निर्वाणाख्यकलेति। सा परा पर-तरा परमा कला अस्या अपि परतरा श्रेष्ठा परादिति पाठे सर्व-श्रेष्ठा इत्यर्थः। सा तदन्तर्गता अमाकलायाः क्रोड़े स्थिता।

**धिदैवतं भगवती नित्यप्रबोधोदया चन्द्रार्द्धाङ्गसमानभङ्गुरवती सर्वार्कतुल्यप्रभा ॥ ४७ ॥**

**एतस्या मध्यदेशे विलसति परमापूर्वनिर्वाणशक्तिः कोट्यादित्यप्रकाशा त्रिभुवनजननी कोटिभागैकरूपा। केशाग्रस्यातिसूक्ष्मा निरवधिविगलत्प्रेमधाराधरा सा सर्वेषां जीवभूता मुनिमनसि मुदा तत्त्वबोधं वहन्ती ॥ ४८ ॥**

तन्मध्ये कुटिला निर्वाणाख्यसप्तदशी कलेति पूर्वोक्तवचनात्। केशाग्रस्येत्यादि। केशाग्रस्य सहस्रभागैकभागरूपसूक्ष्मा सती आस्ते इत्यन्वयः। भूतानां सर्वप्राणिनामधिदैवतं हार्दचैतन्यस्वरूपा इत्यर्थः नित्यप्रबोधोदया तत्त्वज्ञानसम्पादयित्री चन्द्रार्द्धाङ्गसमानभङ्गुरवती। चन्द्रार्द्धाङ्गरूपामाकलावत् कुटिलाकारेत्यर्थः। सर्वार्कतुल्यप्रभा एकदा द्वादशसूर्य्योदये यादृशप्रकाशमाना रक्तवर्णा च ॥ ४७ ॥

परं बिन्दुस्वरूपमाह एतस्या इति। एतस्या निर्वाणकलायाः मध्यदेशे क्रोड़े अपूर्वा सृष्टेरादावाविर्भूतत्वात् किञ्चिदपि नास्ति पूर्वं यस्यास्तादृशी। परमा परंब्रह्मशक्तिरूपा निर्वाणशक्तिर्विलसतीत्यर्थः। निर्वाणशक्तिं विशेषयति। कोट्यादित्यप्रकाशेति। त्रिभुवनजननी स्वर्गमर्त्यपातालादिप्रपञ्चसमुदायस्योत्पत्तिस्थानरूपेत्यर्थः। यतः केशाग्रस्य कोटिभागैकरूपा अतोऽतिसूक्ष्मा। निरवधिविगलत्प्रेमधाराधरेति। प्रेम आनदार्द्रभावप्रफुल्लता। सामरस्यानन्दार्द्रभावप्रफुल्लताजनिता या परामृतधारा निरवधि निरंन्तरं विगलन्तीं तादृशधारां धारयतीत्यर्थः। सर्वेषां जीवभूतेति। एतस्य अंश एव जीवः तदुक्तं यथा। ज्वलदग्नेर्यथा देवि स्फुर-

**तस्यामध्यान्तराले शिवपदममलं शाश्वतं योगिगम्यं नित्यानन्दाभिधानं सकलसुखमयं शुद्धबोधस्वरूपम्।**

न्ति विस्फुलिङ्गकाः। तस्याश्च्युतं परं विन्दुर्यदा भूमौ पतत्यपि। तदैव सहसा देवि संज्ञायुक्तो भवत्यपीति। तस्याः शिवशक्त्यात्मकपरं बिन्द्वन्तर्गतशक्त्याः संज्ञायुक्तो जीवनामा भवतीत्यर्थः। स्पष्टमन्यत्। इयं निर्वाणशक्तिः निर्वाणकलाधःस्थाने नादरूपनिबोधिकोपरि वर्त्तते। तद्यथा, निर्वाणाभ्यन्तरगता वह्निरूपा निबोधिका। नादाव्यक्ता तदुपरि कोट्यादित्यसमप्रभा। निर्वाणशक्तिः परमा सर्वेषां योनिरूपिणी। तस्यां शक्तौ शिवं ज्ञेयं निर्विकारं निरञ्जनम्। अत्रैव कुण्डलीशक्तिर्विहरेत् परमात्मनेति। निबोधिकाऽव्यक्तनादात्मिका वन्हिरूपा तथाहि नादस्य त्रिविधावस्था तमोगुणाधिक्येन केवलध्वन्यात्मकोऽव्यक्तनादः रजआधिक्येन किञ्चिद्वर्णवद्ध्वन्यात्मकः। सत्वाधिक्येन बिन्दुरूप इति राघवभट्टः। ततश्च नादबिन्दुनिबोधिकाः अर्केन्दुवह्निरूपाः ते ज्ञानेच्छाक्रियात्मनो वह्नीन्द्वर्कस्वरूपिण इति सारदावचनात्। तस्मादत्र वह्निरूपनिबोधिकोपरि स्थितिकथनात् सूर्य्यचन्द्रवह्निमण्डलोपरि निर्वाणशक्तेः स्थितिरिति सुधीभिर्भाव्यम्। व्यक्तमाह कुलार्णवोक्तपरब्रह्मध्याने विन्दुरूपं परं ब्रह्म सहस्रदलसंस्थितम्। इत्युपक्रम्य कर्णिकान्तस्त्रिकोणान्तर्मण्डलत्रयमण्डितामिति। मण्डलत्रयेण सूर्य्यचन्द्रवह्निमण्डलेन मण्डितमित्यर्थः। इयं निर्वाणशक्तिः परबिन्दुरूपेति स्फुटिकरिष्यामः॥ ४८॥

निर्वाणशक्तिमध्ये परब्रह्मस्थानमाह। तस्यामध्यान्तराल इति। तस्याः परं विन्दुरूपनिर्वाणशक्त्याः मध्यान्तराले मध्यस्थशून्ये अमलं मायामलरहितं शिवपदं ब्रह्मस्थानं लपन्ति तत्त्वज्ञा

**केचिद् ब्रह्माभिधानं पदमिति सुधियो वैष्णवं तल्लपन्ति के-**
**चिद्धंसाख्यमेतत् किमपि सुकृतिनो मोक्षमात्मप्रबोधम् ॥४९॥**

इति शेषः । योगिगम्यं सूक्ष्मातिसूक्ष्मतमत्वात् वाङ्मनसोरगोचर-त्वाच्च योगिनां ज्ञानमात्रगम्यमिति भावः । केचित् वेदान्तिका ब्रह्माभिधानं ब्रह्मेति नाम्ना लपन्ति अथवा हंसाख्यं हंसनामकमि-ति यथाश्रुतार्थः । अन्ये सुकृतिनः किमपि अनिर्वचनीयमात्मप्र-बोधमात्मसाक्षात्कारस्थानं लपन्तीत्यर्थः । मोक्षमिति । मुच्यते मायाप्रपञ्चाद्बहिर्भूयते यत्र तन्मोक्षरूपमित्यर्थः । अत्रेदमवधी-यताम् । सहस्रदलकर्णिकान्तस्त्रिकोणे मायाबन्धनच्छादितप्रकृति-पुरुषात्मकपरं बिन्दुः । तदुक्तम् । सत्यलोके निराकारा महाज्यो-तिःस्वरूपिणी । मायाच्छादितमात्मामं चणकाकाररूपिणी । हस्तपादादिरहिता चन्द्रसूर्याग्निरूपिणी । मायाबन्धनमुत्सृज्य द्विधा भित्त्वा यदोन्मुखी । शिवशक्तिविभागेन जायते सृष्टिकल्प-नेति । सत्यलोके सहस्रारे इत्यर्थः । तथा निर्गुणो बिन्दुरूपश्च सिद्धिकारणमेव हि । केचिद्वदन्ति स ब्रह्मा केश्चित् विष्णुः प्र-कथ्यते । कैश्चित् रुद्रो महापूर्ण एको देवो निरञ्जनः । आद्याश-क्तिर्यतो देवश्चणकाकाररूपक इति । अस्य बिन्दोः केशाग्रकोटि-भागैकभागरूपसूक्ष्मतेजोंऽशो निर्वाणशक्तिमध्यशून्यभागो ब्रह्म-पदमिति गन्थकारमतम् । तथान्यत्र । तन्मध्ये परबिन्दुश्च सृ-ष्टिस्थितिलयात्मकम् । शून्यरूपं शिवः साक्षात् बिन्दुः परमकु-ण्डली । तथा वृतः कुण्डलिनी शक्तिर्गुणत्रयसमन्वितः । शून्य-भागं महेशानि शिवशक्त्यात्मकं प्रिये इति । अयं बिन्दुः सर्व-कारणरूप ईश्वर इति केचित् । पौराणिकास्तु महाविष्णुरू-पोऽयमिति वदन्ति । अन्ये तु ब्रह्मपुरुषोऽयम् । तदाह नाहो न-

रात्रिर्न वियन्न पृथ्वी नासीत्तमो ज्योतिरभुन्न वान्यत् । श्रोत्रादि-
बुद्ध्यानुपलभ्यमेकं प्राधानिकं ब्रह्म पुमांस्तदासीदिति । निर्गुणः
सगुणश्चेति शिवो ज्ञेयः सनातनः । निर्गुणः प्रकृतेरन्यः सगुणः
सकलः स्मृतः इति शारदावचनात्तन्मध्येऽयं सगुणब्रह्मरूपः व-
स्तुतस्त्वेकमेव मतभेदान्नानाविधिनाम्ना गायन्तीत्यलं विस्तरेण ।
तदयं महावाक्यार्थनिर्णयः । सुषुम्ना नाड्यूर्द्ध्वं सहस्रदलपद्मं शु-
क्लवर्णमधोमुखं रक्तकिञ्जल्कशोभितं अकारादिलकारान्तपञ्चाशद्वर्णैः
शुक्लामैर्विंशत्यावर्त्तनेन सहस्रसंख्यकैर्युक्तं सहस्रदलं एतत्क-
र्णिकायां हंसः ततः परमशिवरूपगुरुः । ततः सूर्य्यमण्डलं
चन्द्रमण्डलं ततो महावायुः ततो ब्रह्मरन्ध्रम् । ततो महाशङ्खिनी
चन्द्रमण्डले विद्युदाकारत्रिकोणम् । तन्मध्ये मृणालसूत्रशतभागै-
कभागरूपसूक्ष्मा चन्द्रस्य षोड़शी कलाऽधोमुखी रक्तवर्णा तत्-
क्रोड़े केशाग्रसहस्रभागैकभागरूपसूक्ष्मा निर्वाणकला रक्तवर्णाऽ-
धोमुखी तदधस्तात् अव्यक्तनादात्मकनिबोधिकाख्यवह्निः । तदु-
परि निर्वाणकला क्रोडे परं बिन्दुःशिवशक्त्यात्मकः । अस्य केशा-
ग्रकोटिभागैकरूपसूक्ष्मतेजो हंसरूपा निर्वाणशक्तिः अस्याः हंसो-
जीवः बिन्दोर्मध्ये शून्यं ब्रह्मपदमिति । आगमकल्पद्रुमपञ्चशाखा-
दिमते सहस्रदलकर्णिकामध्ये चन्द्रमण्डले अकथादित्रिकोणं तन्म-
ध्ये त्रिकोणसमीपे त्रिबिन्दुः तस्याधोबिन्दुर्हकारः पुरुषात्मकः ।
ऊर्द्ध्वबिन्दुद्वयरूपविसर्गः सकारः प्रकृतिरूपः । एतदुभयात्मको
हंसस्त्रिबिन्दुरूपेण प्रकाशते । तन्मध्ये अमा कला तत्क्रोड़े नि-
र्वाणशक्तिः तस्य मध्यशून्यं परं ब्रह्म इति । तद्यथा अथ शुभ्रस-
हस्रारे पूर्णेन्दुमध्यात्विस्फुरत् । त्रिकोणं तड़िदाभासम् अकथादि-
हलक्षयुक् । तदन्तरे परं शून्यं विसर्गाधोऽव्यवस्थितम् । बालादित्यप्र-
भा तत्र कला षोड़श्यधोमुखी । स्रवन्ती सौधधारां वै चन्द्रार्द्धा-

**हूङ्कारेणैव देवीं यमनियमसमाभ्यासशीलः सुशीलो ज्ञात्वा श्रीनाथवक्त्रात् क्रममिति च महामोक्षवर्त्मप्रकाशम् ।**

क्रविभङ्गुरा । तदन्तरे परा शक्तिः कोट्यादित्यप्रभामयी । बिसतन्तु सहस्रांशभागरूपा चिदात्मिका । तदन्तः सच्चिदानन्दो वेदातीतो निरञ्जनः । बिन्दुः पुरुष इत्युक्तो विसर्गः प्रकृतिर्मतः । पुंप्रकृत्यात्मको हंसः स्वप्रकाशेन भासत इति । एतन्मतमाश्रित्य परं बिन्दोरूर्द्धे हंसघटकविसर्गोपरि गुरुस्थितिरिति वदन्ति । तन्न समीचीनम् । निर्वाणतन्त्रे परं बिन्दुरूपशक्तिसमीपे तस्याः पूजाध्यानपरायणस्य निजगुरोः स्थितिकथनात् पूजार्थोपवेशनन्तु अधःस्थले सन्मुख एव युज्यते । नतूर्द्धस्थले पश्चाद्देशे । तद्यथा । निर्वाणे । सत्यलोके बीजकोषे चिन्तामणिगृहे शुभे । ध्यायेन्निरञ्जनां देवीं रत्नसिंहासनोपरि । तस्यान्तिके निजगुरुं पूजाध्यानपरायणमित्यादि । किञ्च, पूर्वप्रदर्शिते महाकालीतन्त्रवचने हंसवर्णद्वयोपरि गुरुस्थितिः सुव्यक्ता । अत्र मूलादिसहस्रदलपर्य्यन्तोक्तप्रकारविपरितप्रकारबोधकानि तथा तदतिरिक्तबोधकानि च यानि वचनानि दृश्यन्ते तानि मतभेदेन प्रकारान्तरविधायकानि इति बोध्यम् ॥ ४९ ॥

अथेदानीं सहस्रदलपर्य्यन्तं चक्रं निरूप्य तत्र कुण्डलिनीयोगं कथयिष्यन्नादौ कुण्डलिन्युत्थापनप्रकारमाह । हूङ्कारेणेति । अस्यायमर्थः । सयोगित्वेन प्रसिद्धोजनः गुरुवक्त्रात् क्रमं ज्ञात्वा येन क्रमेण प्रकारेण हृदाद्याकुञ्चनादिपवनदहनयोराक्रमणं कुण्डलिन्युत्थापनादिकं भवति तत्प्रकारक्रमं श्रीनाथस्य गुरोर्वक्त्रात् ज्ञात्वा पवनदहनयोराक्रमेण हूमिति कूर्चबीजोच्चारणेन च कुण्डलीनीमुत्थाप्य तल्लिङ्गरूपं भित्त्वा स्वयम्भुलिङ्गछिद्र

**ब्रह्मद्वारस्य मध्ये विरचयति सतां शुद्धबुद्धिस्वभावो भित्त्वा तल्लिङ्गरूपं पवनदहनयोराक्रमेणैव गुप्तम् ॥ ५० ॥**

प्रस्फोटयित्वा तां देवीं कुण्डलिनीं ब्रह्मद्वारस्य मध्ये चित्रिणीनाड़ीमुखमध्ये विरचयति प्रापयतीत्यर्थः। हूङ्कारेणेति। ततो हंसमुपस्मृत्य शनैराकुञ्चयेत् गुदमित्याद्यागमकल्पद्रुमवचने हंसमन्त्रस्योच्चारणेन कुण्डलिनीचालनविधानात् हूं हंस इति मन्त्रः कुण्डलिनीचालने विनियुक्त इति ललितारहस्यकारः। किन्तु हंसस्मरणपूर्वकतदाकुञ्चनविधानात् हंस इति मनुमन्युस्मृत्य जीवात्मानं हृदयस्थं दीपकलिकाकारं मूलाधारमानीय तेन सार्द्धं कुण्डलिनीं चालयेदित्यभिप्रायः। अतएवागमकल्पद्रुमे। आरोप्यारोप्य शक्तिं कमलजनिलयादात्मना साधकेन्द्र इति परवचने आत्मना जीवात्मना सार्धं चालनमुक्तम्। कालीकुलामृतेऽपि। हृदयान्धंसमनुना नीत्वा जीवं मुखाम्बुजे। हूङ्कारेण समुत्थाप्य कुण्डलीं परदेवतामिति। कङ्कालमालिनीतन्त्रे। आकृष्य प्रणवेनैव जीवात्मानं नगेन्द्रजे। कुण्डलिन्या सह प्राणं गन्धमादाय साधकः। सोऽहन्तु मनुना देवीं स्वाधिष्ठाने प्रवेशयेदिति। ततश्च हंसेन प्रणवेन वा हृदयाज्जीवं मूलाधारमानीय केवलकूर्चबीजेन कुण्डलिनीमुत्थापयेदिति सुधीभिर्भाव्यम्। स जनः कीदृशः यमनियमसमभ्यासशीलः यमनियम इति योगप्रतिबन्धककामक्रोधादिनाशकतदनुकूलशरीरान्तर्वायुरेचनमनः स्थैर्यादिसाधकाङ्गयोगप्रदर्शकं तैरेव प्रकृतयोगनिष्पत्तेः नतु केवलयमनियममात्रेण। अतएव ग्रन्थकृता चतुःपञ्चाशत्श्लोके योगी यमाद्यैर्युत इत्यत्र यमाद्यैरिति बहुवचनान्तत्वेन प्रयुक्तम्। अयन्तु यमाद्यभ्यासः कामाद्याकुलितचित्तानामेव। यदि तु

जन्मान्तरीयादृष्टवशात् स्वभावतो वा क्रोधकामादिरहितः तदा तद्योगाभ्यासं विनाऽपि प्रकृतयोगे शक्तो भवतीति बोध्यम् । सुशील इति । यतः यमाद्यभ्यासशीलः अतएव सुशील इति । श्रीनाथवक्त्रादिति । गुरूपदेशं विना क्रमज्ञानं न भवतीति भावः। अतएवोक्तं गुरूपदेशतो ज्ञेयं न तु शास्त्रार्थकोटिभिरिति । क्रमं विशेषयति । महामोक्षवर्त्मप्रकाशितामिति । मोक्षवर्त्म चित्रिणीनाडीमध्यछिद्ररूपवर्त्म तस्य प्रकाशः प्रस्फोटनं येन क्रमेणेत्यर्थः । शुद्धबुद्धिस्वभाव इति । शुद्धबुद्धौ ब्रह्मणि स्वभावो यस्य अथवा शुद्धबुद्ध्या स्वस्मिन् आत्मनि भावो यस्येत्यर्थः सुगुप्तं यथा स्यात्तथेति क्रियाविशेषणम् । अथवा नाह्लिङ्गरूपं सुगुप्तं मुद्रितमुखत्वेनाऽव्यक्तम् अप्रकाशितमुखमिति यावत् । अथात्र कुण्डलिन्युत्थापनप्रकारं विशेषेणाह । आगमकल्पद्रुमपञ्चशाखायांच। पद्मासने निवेश्याङ्कं ततः पाणिद्वयं न्यसेत् । ततो हंसमुपस्मृत्य शनैः शङ्कोचयेद्गुदम् । वायुमुत्तोलयेत्तेन वर्त्मना स पुनः पुनः। उत्तोल्य भेदयेच्चक्रं तस्याऽनुष्ठानमुच्यते। मूलाधारसरोजेतु त्रिकोणमतिसुन्दरम् । कामो भवति तन्मध्ये बालार्ककोटिसन्निभम् । तदूर्द्धे कुण्डलीशक्तिं स्वयम्भुलिङ्गवेष्टिनीम् । तथा वामाग्निना कूर्चयोगात् परं हंसाभिलासिनीमिति । तथा भूतशुद्धौ । हृदिस्थां कुञ्चिकां कृत्वा गत्वा तदुदरे शिवे । कण्ठाद्यं समनुप्राप्य द्वारं कुञ्चिकया हठात् । उद्घाट्य परमेशानि पवनेन प्रदीपयेत् हुताशनप्रतप्तां तु तापेन भृशमूर्द्धताम् । प्रसुप्तां नागिनं लिङ्गे योनिवक्त्रे प्रबोधयेत्। ततः प्रचालयेद्वायुं यावन्नाड्यन्तरेषु च गुरुदृष्टेन मार्गेण सकृत्वाकुम्भकेन वै । आकर्ष्यैवं यतो जीवं सुगुप्तेन पथा भृशम् । ऊर्द्धोच्छ्वासैरूर्द्धमुखान् कारयेत् पङ्कजान् शिवे । प्रबोधयन् शनै-

भित्त्वा लिङ्गत्रयं तत् परमरसशिवे सूक्ष्मधाम्नि प्रदीपे सा देवी शुद्धसत्त्वा तडिदिव विलसत्तन्तुरूपस्वरूपा। ब्रह्माख्यायाः शिरायाः सकलसरसिजं प्राप्य देदीप्यते तन्मोक्षाख्यानन्दरूपं घटयति सहसा सूक्ष्मतालक्षणेन॥ ५१॥

भानुं मेरुशृङ्गं नयेत् सुधीरिति। तदयं सकलवचनपर्य्यालोचनसिद्धः क्रमोऽत्रधीयताम्। योगी जनः विहितासने उपविश्य स्वाङ्के उत्तानौ करौ कृत्वा खेचरीमुद्रया स्थिरचित्तः सन् देहान्तर्वायुमापूर्य्य कुम्भकं कृत्वा हृदयमाकुञ्चयेत्। तेन ऊर्द्ध्वोच्छ्वासोत्सरणनिवृत्तिः। ततो देहान्तरस्थवायोरुदरकण्ठादिव्यापकतया नाड़ीच्छिद्रप्रस्फोटनेनाधोगमनमनुभूय गुदमाकुञ्चयापानं संरुध्य वायुमुत्तोल्य मूलाधारकमलकर्णिकान्तस्त्रिकोणस्थकामं वाममावर्त्तयेत्। तेनोद्दीप्तेन तत्र स्थितेन कामाग्निनोत्तप्तां कुण्डलिनीं हूङ्कारेण चेतयित्वा परमशिवसामरस्याभिलाषिणीं तां स्वयम्भुलिङ्गमुखं स्फोटयित्वा तच्छिद्रेण चित्रिणीनाड़ीमुखमध्यं प्रापयेदिति समुदितार्थः॥ ५०॥

इदानीं कुण्डलिनीयोगप्रकारमाह भित्त्वेति। संरुद्ध वर्त्मनि वर्त्मकरणं भेदः। अस्यार्थः सा देवी कुण्डलिनी तल्लिङ्गत्रयंस्वयंभुवाणेतराख्यंलिङ्गत्रयंभित्वा तैर्लिङ्गैः संरुद्धय वर्त्म कृत्वा ब्रह्माख्यायाः शिरायाः चित्रिणीनाड़ीसम्बन्धितद्ग्रथितमिति यावत् ग्रथितं तत्सकलसरसिजं प्राप्य तत्र देदीप्यते ततःसूक्ष्मता। लक्षण सूक्ष्मभावस्वरूपण सूक्ष्मभावेनेति यावत्। तेन भावेन विलसत्तन्तुरूपस्वरूपा सती परमरसशिवे परमरसः परमानन्दः तन्मये शिवे सहस्रदलकार्णिकास्थपराबिन्दुरूप शिवसमीपे अर्थाद्गत्वा मोक्षाख्यानन्दरूपमर्थात् साधकस्य नि-

त्यानन्दरूपमुक्तिं सहसा घटयतीत्यर्थः । लिङ्गत्रयमिति। तत् पूर्वोक्तं षट्चक्रं पञ्चशिवंश्चेति चतुर्दशग्रन्थीन् भित्वेति बोध्यम्। तदुक्तं शाक्तानन्दतरङ्गिण्याम्। गच्छन्तीं ब्रह्मरन्ध्रेण भित्वा ग्रन्थींश्चतुर्दशेति। तत्र लिङ्गशिवयोर्भेदप्रकारमाह। स्वतान्त्रतन्त्रे। षट्चक्रस्थान् शिवान् भित्वा देवी गच्छति निष्कलम्।चक्राधिष्ठानतो रूपं धृत्वा तत्तन्मनोहरम् । मोहयित्वा महशानमानन्दाप्लुतविग्रहम्। रमित्वा तत्र तत्रैव यावत् प्राप्नोति शाश्वतम्। मोहितः परया यस्मात्तस्माद्भित्र उदाहृत इति। तथा मायातन्त्रे। भित्वा लिङ्गत्रयं देवी शक्तिमार्गेण गच्छति। तत्तद्रूपेण चक्रेषु निष्कलं प्राप्य निर्वृतेति। तत्तद्रुपेणेति वैखरीमध्यमा पश्यन्ति भावेन। तदुक्तम्। प्रथमे वैखरीभावो मध्यमा हृदये स्थिता। भ्रूमध्ये पश्यन्तीभावः पराभावस्तद्विन्दुनि। अस्यार्थः परापश्यन्ती मध्यमा वैखरीति चतस्त्रः शब्दोत्पादिकाः शक्तयः कुण्डलिन्यभेदरूपाः। ततः सहस्त्रारे कुण्डलिनी गमनकाले प्रथमे स्वयम्भुलिङ्गसमीपे वैखरीभावेन तं मोहयित्वा एवं हृदये बाणलिङ्गं मध्यमाभावेन भ्रूमध्ये इतरलिङ्गं पश्यन्ती भावेन मोहयित्वा परंविन्दुनिकटे पराभावमाप्नोतीत्यर्थः। चक्रभेदप्रकारमाह। चित्रिणीविवरे रक्तभेदपङ्कसमुद्भवान्। सव्यदक्षपार्श्वयोश्च नालस्थान् वाहयेच्च तान्। पश्चान्नाडीमध्यवर्त्मरोधितान् परकेश्वरि। नालं वामं विशेत् पद्मं तेन भेदः प्रजायते। यथा शिल्पवतीं रश्मिवाहीं लाययति प्रभुः। भेदयित्वा तथा चक्रं षड् जीवेन नयेच्च तमिति। तथा षट्चक्रसन्धिभार्गेण सुषुम्नावर्त्मना तथा। हंसेन मनुना देवीं सहस्त्रारं समानयेदिति। परमरसाशिवं विशेषयति। सूक्ष्मधाम्नि प्रदीपे इति। सूक्ष्मधाम निर्वाणशक्त्यात्मकपरं निन्दोस्तेजो हंसः तन्मध्ये दीपमानेत्यर्थः। देवीं विशेषयति। शुद्धसत्त्वेति।

सत्त्वातिसत्त्वपरमसत्त्वशुद्धसत्त्वविशुद्धसत्त्वेति पञ्चविधं शरीराव-
च्छिन्नचैतन्यमुत्तरोत्तरप्रकृष्टम् । तत्रेयं शुद्धसत्त्वा तुरीयेति या-
वत् । केन प्रकारेण मोक्षाख्यानन्दं घटयनीत्याकाङ्क्षायामुच्यते ।
तत्र परबिन्दौ तां कुण्डलिनीं विलाप्य केषाञ्चित् साधकानां शि-
वात्मनोरभेदेन तद्बिन्दुचिन्तनेन केषाञ्चित् तथा शक्त्यात्मकचि-
न्तनेन केषाञ्चित् परमपुरुषमयचिन्तनेन तथा केषाञ्चित् केवल-
शिवशक्तिसामरस्य चिन्तनेन सा देवी मोक्षं घटयतीति । तदुक्त
मायातन्त्रे । ऐक्यं जीवात्मनोराहुर्योगं योगविशारदाः । शिवा
त्मनोरभेदेन प्रतिपत्तिं परे विदुः । शक्त्यात्मकं तथा ज्ञानं जगु-
रागमवादिनः । पुराणपुरुषस्यान्ये ज्ञानमाहुर्विशारदाः । शिव-
शक्त्योः सामरस्यात्मकं प्रकृतिनोऽपर इति ऐक्यं जीवात्मनोरिति
समाधिविषयम् । योगमिति युज्यते परमात्मना एकीभूयते अने-
नासौ योगः । तं योगमित्यर्थः। समाधिमुक्ता ध्याने योगभेदमाह ।
शिवात्मनोरित्यादि । सामरस्यात्मकमिति । स्त्रीपुंयोगे तु यत्
सौख्यं सामरस्यं प्रकीर्तितम् । तच्चिन्तनप्रकारमाह बृहत् श्रीक्र-
मे । कलां कलङ्करहितां चिदानन्दमुपेयुषीम् । बिम्बरूपनिदानञ्च
शुद्धस्फटिकसन्निभम् । परा विराजिवामोरुमदालसवपुः स्त्रियम् ।
नादोपरि महादेवं पश्यन्ति ज्ञानचक्षुषा इति । कलां कुण्डलिनी-
म् । चिदानन्दं विन्दुरूपशिवमुपेयुषीं प्राप्तवतीमित्यर्थः । विम्ब-
रूपनिदानं परशिवम् । तथान्यत्र । शून्यरूपं परशिवं प्रापयित्वा
तु कुण्डलीम् । ततः सामरसीभूतां कारयित्वा परामृतम् । पुन-
स्तेन पथा देवीं प्रापयेत् कुलगह्वरमिति । यथा साङ्गत्यन्तु तयोः
कृत्वा सामरस्यं विभाव्य च । तदुद्भूतरसेनैव तर्पयेद्देहदेवतामि-
ति । प्रकारान्तरमाह गन्धर्वमालिकायाम् । सहस्रारं शिवपुरं रम्यं
दुःखविवर्जितम् । सर्वतोऽलङ्कृतैर्दिव्यं नित्यपुष्पफलद्रुमैः । सदा.

शिवपुरं रम्यं कल्पवृक्षसुशोभितम्। पञ्चभूतात्मकं वृक्षं गुणत्रय-समन्वितम्। चतुर्वेदचतुःशाखानित्यपुष्पसमन्वितम्। पीतं श्वेतं तथा कृष्णं रक्तपुष्पञ्च पार्वति हरितञ्च विचित्रञ्च नानापुष्पमनोहरम्। एवं कल्पद्रुमं ध्यात्वा तन्मध्ये रत्नवेदिकम् तत्रोपरि सुपर्य्यङ्कं नानावस्त्रोपशोभितम्। मन्दारपुष्पसहितं नानागन्धानुमोदितम्। तत्रोपरि महादेवः सदा तिष्ठति सुन्दरि। ध्यायेत् सदाशिवं देवं शुद्धस्फटिकसन्निभम्। बहुरत्नसमाकीर्णं दीर्घबाहुं मनोहरम्। सुखप्रसन्नवदनं स्मेरास्यं सततं प्रिये। श्रवणे कुण्डलोपेतं रत्नहारेण शोभितम्। गले पद्मसहस्रेण मालया शोभितं वपुः। अष्टबाहुं त्रिनयनं शिवं पद्मदलेक्षणम्। पादयोर्नूपुरं रम्यं शब्दब्रह्ममयं वपुः। एवं स्थूलवपुस्तस्यभावयेत् कमलेक्षणे। पद्ममध्ये स्थितं देवं निरीहं शवरूपवत्। शवरूपो महादेवः कृत्यं नास्ति कदाचन तथा ध्यायेत् कुण्डलिनीं देवीं स्वयम्भुलिङ्गवेष्टिनीम्। हंसेन मनुना देवीं सहस्रारं समानयेत्। सदाशिवो महादेवो यत्रास्ते परमेश्वरि। देवं रूपवतीं कामसमुल्लासविहारिणीम्। मुखारविन्दगन्धेन मोदितं परमं शिवम्। प्रबोध्य परमेशानि तत्रैवोपविशेत् प्रिये। शिवस्य मुखपद्मं हि चुचुम्बे कुण्डली शिवे। सदाशिवेन देवेशि क्षणमात्रं रमेत् प्रियो अमृतं जायते देवि तत्क्षणात् परमेश्वरि। तदुद्भवामृतं देवि लाक्षारससमायुतम्। तेनामृतेन देवेशि तर्पयेत् परदेवताम्। षट्चक्रदेवतास्तत्र सन्तर्प्यामृतधारया। आनयेत्तेन मार्गेण मूलाधारं पुनः सुधीः। यातायात क्रमेणैव तत्र कुर्य्यान्मनोलयम्। एवमभ्यस्यमानस्तु अहन्यहनि पार्वति। जरामरणदुःखाद्यैर्मुच्यते भवबन्धनात्। एवम्प्रकारान्तरस्तन्त्रान्तरे अनुसन्धेयः॥ ५१॥

**नीत्वा तां कुलकुण्डलीं लयवशात् जीवेन सार्द्धं गुधीर्मोक्षे धामनि शुद्धपद्मसदने शैवे परे स्वामिनि। ध्यायेदिष्टफलप्रदां भगवतीं चैतन्यरूपां परां योगीन्द्रो गुरुपादपद्मयुगलालम्बी समाधौ यतः॥ ५२॥**

कुण्डलिनीध्यानयोगमुक्त्वा समाधियोगमाह नीत्वेति। अस्यायमर्थः। समाधौ यतः योगीन्द्रः सुधीः तां पूर्वोक्तोत्थापनक्रमेण ब्रह्मद्वाराप्राप्तवतीं भगवतीं कुण्डलिनीं जीवेन सार्द्धं लयवशात् लयक्रमेण शुद्धपद्मसदने सहस्रारमध्ये परे परंविन्दुरूपे शिवे- शिवपदे स्वामिनि स्वामिनिकटे नीत्वा इष्टफलप्रदाम् इष्टदेवतारूपां तां स्वामिरूपपरंविन्दुना सहैकीभावं प्रापयित्वा परां परंविन्दुस्वरूपां ध्यायेत् चैतन्यरुपामिति। तदनन्तरं परंविन्दुमपि तन्मध्यशून्यमध्ये चिदात्मनि विलाप्य शुद्धचैतन्यरूपां ध्यायेदिति समुदायार्थः। ततः सोऽहम्भावेन जीवात्मनोरैक्यं ज्ञात्वा तत्र चित्तं विलाप्य सर्वव्यापकसम्पूर्णज्ञानात्मना स्थिरचित्तः सन् तिष्ठेदिति शेषः। तदुक्तं श्रीमदाचार्य्यस्वामिना। मकारं कारणं प्राज्ञश्चिदात्मनि विलापयेत्। चिदात्माहं नित्यशुद्धबुद्धमुक्तसतद्वयः। परमानन्दसन्दोहं वासुदेवोहमोमिति। ज्ञात्वा विवेचकं चित्तं तत् साक्षिणि विलापयेत्। चिदात्मनि विलीनश्चेत्तच्चितं नैव चालयेत्। पूर्णबोधात्मना तिष्ठेत् पूर्णाचलसमुद्रभवदिति। मकारमिति प्रणवपक्षे। अत्र कारणं परंविन्दुः। वासुवोऽहमिति वैष्णवं तल्लपन्ति। इत्यनेनैकवाक्यतया वैष्णवपक्षे। तेन यो यद्देवतोपासकः स सोऽहमिति ज्ञात्वा ओम् इति प्रणवोपासनायां अन्यत्र तत्तन्मन्त्रमयकुण्डलिनीस्वरूपं ज्ञात्वा इति बोध्यम्। तन्त्रान्तरे। किरणस्थं तदग्निस्थं चन्द्रभास्करमध्यगम्। महामूल्यमयं

कृत्वा पूर्णस्तिष्ठति योगिराडिति। जीवेन सार्द्धं नीत्वेति पूर्वप्रदर्शितवचनात् हंस इति जीवात्मनां हृदयस्थं दीपकलिकाकारं हंस इति मन्त्रेण मूलाधारमानीय तेन सार्द्धं कुण्डलिनीं नयेत्। लयवशादिति। लयक्रममाह। त्रिकोणाख्ये तु देवेशि लङ्कारं चिन्तयेत्ततः। ब्रह्माणंतत्र सञ्चिन्त्य कामदेवञ्च चिन्तयेत्। जीवं तत्रैव निश्चित्य प्रणवोच्चारणेन च। पदे च गमनं पत्यौ विसर्गनाशकामिनी। घ्राणं संचिन्त्य देवेशि महेशि प्राणवल्लभे। डाकिनीं परमाराध्यं शक्तिञ्च भावयेत्ततः। एतानि गिरिजे मातः पृथ्वीं नीत्वा गणेश्वरि। तथा ततश्च पृथिवीं धन्यां गन्धं नीत्वा महेश्वरी। आकृष्य प्रणवेनैव जीवात्मानं नगेन्द्रजे। कुण्डलिन्या सह प्राणं गन्धमादाय साधकः। सोऽहन्तु मनुना देवि स्वाधिष्ठाने प्रवेशयेत्। तथा तत् कर्णिकायां वरुणं तत्रापि भावयेत् हरिम्। पुराणकारिणीं शक्तिं चिन्तयित्वा वरानने। एतानि गन्धञ्च शिवे वरं नीत्वा वरानने। जीवात्मानं कुण्डलिनीं रसञ्च मणिपुरके। तथा तत् कर्णिकायां सुश्रोणि वह्निं संचिन्त्य साधकः। तत्र रुद्रः स्वयं कर्त्ता संहारे सकलस्य च। साकिनीं शक्तिसंयुक्तं भावयेत्तं मनोहरम्। ततश्चक्षुरिन्द्रियंच ध्यात्वा तेजोमयं शिवे। एतद्रसानि सुभगे रूपं नीत्वा महाभगे। जीवात्मानं कुण्डलिनीं रुपज्ञानाहते नयेत्। तथा तत् कर्णिकायां वायंच जीवस्थाननिराशिनम् तत्र योनिमण्डलञ्च वाणलिङ्गविराजितम्। राकिनीशक्तिसंयुक्तं तत्र वायुत्वागिन्द्रियम् एतानि रूपं संयुज्य स्पर्शे त्वमलकारिणि। जीवं कुण्डलिनीं स्पर्शं विशुद्धे स्थापयेत्ततः। तथा। तत् कर्णिकायामाकाशं शिवंच साकिनीयुतम्। वाचः श्रोत्रंच आकाशे संस्थाप्य नगनन्दिनि। एतानि स्पर्शं शब्दे वै नीत्वा शङ्करि मत्प्रिये। जीवं कुण्डलिनीं शब्दंचाज्ञाचक्रे नि-

लापयेत्। इत्यन्तं कङ्कालमालिन्याम्। त्रिकोणाख्ये प्रक्रान्तमूलाधारत्रिकोणे। तन्मध्ये लङ्कारचिन्तनमिति। एवं प्रणवोच्चारणेन जीवानयनमिति मतान्तरम्। विसर्गनाशकामिनीति। विसर्ग उपसर्गः कामोद्वेग इति यावत्। तन्नाशयितुं शीलं यस्याः सा कुण्डलिनी पत्यौ पदे सहस्रदलकमलस्थबिन्दुमयशिवे गमनं साधकेन कार्य्येति शेषः। एतानि लङ्कारब्रह्मकामदेवडाकिनीशक्तिघ्राणेन्द्रियाणि पृथ्वीं नीत्वा पृथ्व्यां विलाप्य पृथिवीं गन्धतत्त्वे विलाप्य जीवात्मानं कुण्डलिनीं गन्धतत्त्वं प्रणवेनाकृष्य सोऽहं मन्त्रेण स्वाधिष्ठाने समानयेत् इति शेषः। एवं सर्वत्र बोध्यम्। जीवं कुण्डलिनीं शब्दतत्त्वमाज्ञाचक्रे नीत्वा शब्दतत्त्वं तत्रस्थाहङ्कारेऽहङ्कारं महत्तत्त्वे हिरण्यगर्भाख्यसूक्ष्मप्रकृतौ प्रकृतिं परबिन्दौ विलापयेत्। तदुक्तं मन्त्रतन्त्रप्रकाशे। अहङ्कारे हरेद्व्योम सशब्दं तन्महत्यपि। महच्च सर्वशक्तीनामव्यक्ते कारणे परे। सच्चिदानन्दरूपं यद् वैष्णवं कारणं परम्। पृथिव्यादिक्रमात् सर्वं तत्र लीनं विचिन्तयेदिति। सर्वव्यक्तिमव्यक्ते हिरण्यगर्भाख्यसूक्ष्मप्रकृतौ महद्धरेत् प्रकृतिञ्च परे परबिन्दुरूपकारणे हरेदित्यर्थः। अत्र समाधिकालात् प्रागेवं विचिन्त्यातिप्रयत्नतः। स्थूलसूक्ष्मक्रमात् सर्वं चिदात्मनि विलापयेदित्याचार्य्यविधानात् स्थूलानां सूक्ष्मे लयः। पृथिव्यादिक्रमनाहतपर्य्यन्तं तेषामुक्तक्रमेणलये पृथिव्याश्रितत्वेन पादघ्राणेन्द्रिययोः पृथिवीप्रपञ्चसमुदायस्य च पृथिवीस्थाने विलापयेत्। एवं जलस्थाने पाणिरसनेन्द्रियजलप्रपञ्चानां वह्निस्थाने पायुचक्षुरिन्द्रियवह्निप्रपञ्चानां वायुस्थाने उपस्थत्वगिन्द्रियवायुप्रपञ्चानाम्। आकाशस्थाने वाक्श्रोत्रेन्द्रियाकाशप्रपञ्चानां लयः। आज्ञाचक्रे सूक्ष्ममहदहङ्कारादिक तेषामुक्तक्रमेण कारणे लयः। ततः क्षकाराद्यकारान्तवर्णान् विलोमेन

विलाप्य स्थूलसूक्ष्मक्रमात् सर्वमित्यत्र सर्वमित्युपादानात् ब्रह्ममात्रावस्थितये आज्ञाचक्रोर्द्धस्थितपूर्वोपदर्शितविन्दुबोधिन्यादि सकलकारणशरीरमपि विलोमेनादिकारणे परबिन्दौ विलापयेदिति। तत्प्रकारमाह। सङ्कल्पैवं ततोन्यासस्थानाद्वर्णांश्च संहरेत्। प्रतिलोमे लक्षणयोर्लकारस्य हकारके। हलयोश्च सकारे च सलयोश्च षकारे। क्रमेणैवमपर्य्यन्तं लयमुत्पाद्य यन्नत इति। तथा तद्वर्णं संहरेद्विन्दौ कलायन्तं नियोजयेत्। तं नादेनान्तरं नादं नादान्तं संहरेत् पुनः। तामुन्मन्यां समायोज्य विष्णुवक्त्रे नयेच्च ताम्। तं पुनर्गुरुवक्त्रे तु योजयेत् साधकोत्तमः। ततश्च योजयेद्वर्णान्निलयेत् परमे शिवे इति। विष्णुवक्त्रे पंबिन्दौ सूर्य्यविन्दुर्मुखं प्रोक्तमधस्तादिन्दुपावकौ। इत्यादिवचने विन्दुः पुरुष इत्युक्तो विसर्गः प्रकृतिः स्मृत इत्यादिवचनयोरेकवाक्यतया तस्यैव वक्त्रत्वात्। नीत्वा तां पुंसि विन्द्वात्मनि तमय परात्मन्यथोकालतत्त्वे तद्वै शक्तौ चिदात्मन्यपि नयतु तां केवले दाम्नि शान्ते इति केशवाचार्य्यवचनैकवाक्यत्वाच्च। अत्र स्वस्वकारणे संहरणदर्शनात् नादात् तस्य व्यापकशक्तौ तामुन्मन्यां तां समन्यां तां विष्णुवक्त्रे इति बोध्यम्। एवं प्रकारेण वर्णानां संहरेण षट्चक्राणां संहारः पद्मदलाना वर्णमयत्वात्। तदुक्तं विश्वसारे। आदिवर्णात्मकं पत्रं पद्मानां परिकीर्त्तितामिति। अथ वर्णपद्मोभयसंहरणप्रकारमाह संमोहनतन्त्रे। वादिसन्तान् दलस्थाणात् संहरेत् कमलासने। तं षट्पत्रमयं पद्मे वादिलान्ताक्षरान्विते। स्वाधिष्ठाने समायोज्य बोधयेदाज्ञया गुरो इत्यादि। द्विपत्रे हक्षलसिते योजयित्वा ततः सुधीः। तद्वर्णौ संहरेद्विन्दौ तं कलाया नियोजयेदित्यन्तवचगम्। ततश्च मूलकमले चतुर्वर्णं संहृत्य तत्पद्मं स्वाधीष्ठाने संहरेत्। एवं क्रमेणाज्ञाचक्रस्थहक्षपर्य्यन्तं संहृत्य तत्पद्मं बिन्दौ बिन्दुं बोधिन्यां

लाक्षाभं परमामृतं परशिवात् पीत्वा पुनः कुण्डली नित्यानन्दमहोदयात् कुलपथान्मूले विशेत् सुन्दरी । तद्दिव्यामृतधारया स्थिरमतिः सन्तर्पयेद् दैवतं योगी योगपरम्पराविदितया ब्रह्माण्डभाण्डस्थितम् ॥ ५३ ॥

एवं पूर्ववत् सर्वं परंबिन्दौ विलापयेदिति एवञ्चाज्ञाचक्रसंहरणे तत् कर्णिकास्थहाकिनीतरलिङ्गप्रणवादीनां निराधारस्थित्यसम्भवात् प्रकृतिपर्य्यन्तसंहरणानन्तरं तानपि परंबिन्दौ संहरेत् । शुद्धपद्मसदने किम्भूते मोक्षे धामनि मुक्तिसम्पादकस्थाने इत्यर्थः । योगीन्द्रं विशेषयति । गुरुपादपद्मयुगलालम्बीति । गुरूपदेशेनैव सर्वसिद्धिरित्यतस्तत्पदाश्रितः सन्निति भावः । समाधौ यत इति । समाधिलक्षणमाह कुलार्णवे । यदत्र नात्र निर्भास स्तिमितोदधिवत् स्मृतम् । स्वरूपशून्यं यद्ध्यानं तत् समाधिर्विधीयते इति । तथान्यत्र । समत्वभावना नित्यं जीवात्मपरमात्मनोः । समाधिमाहुर्मुनयः प्रोक्तमष्टाङ्गलक्षणमिति । योगश्चित्तवृत्तिनिरोध इति पातञ्जलसूत्रम् । तस्मिन् यतः तदभ्यासयुक्त इत्यर्थः ॥ ५२ ॥

उक्तप्रकारसकलयोगचिन्तनानन्तरं यत् कर्त्तव्यं तदाह लाक्षाभमिति । अस्यार्थः । कुण्डलिनी सुन्दरी परशिवात् परमामृतं पीत्वा नित्यानन्दमहोदयान्निःसृत्या कुलवधा चित्रिणीनाडीमध्यस्थब्रह्मपथं प्राप्य मूले मूलाधारे पुनः प्रविशेदित्यन्वयः । पीत्वेति पूर्वोक्ततत्तध्यानानन्तरं शिवशक्त्योः सामरस्यं विभाव्य सामरस्यानन्देन परशिवादुत्पन्नपरमामृतेन कुण्डलिनीं तर्पयेत् । तत् तर्पणामृतं पीत्वेत्यर्थः । साङ्गयन्तु तयोः कृत्वा पाययित्वा परामृतामिति । पूर्वोक्तवचने पाययित्वेत्यनेन पानकार्य्यप्रेरणबोधनात् । अमृतं विशेषयति लाक्षाभमिति । अलक्तरसवद्रक्ताभमित्यर्थः । नित्यानन्दमहोदयादिति नित्यानन्दस्य [illegible]दयो महाप्र-

काशो यत्र तस्मादित्यर्थः। मूले विशेदिति। येन प्रकारेणोत्तानं पुनस्तेन प्रकारेण मूलाधारे आनयनम्। तेन यदा लिङ्गादिभेदक्रमेणोर्द्धं गच्छति तदा तद्रूपेणैव पुनराधारमायाति। तदुक्तं श्रीमदाचार्य्यस्वामिना। सुधाधारासारैश्चरणयुगलान्तर्विगलितैः प्रपञ्चं सिञ्चन्ती पुनरपि रसाम्नायमहसा। आवाप्य स्वां भूमिं भुजगनिभमध्युष्टवलयं स्वमात्मानं कृत्वा स्वपिषि कुलकुण्डे कुहरिणीति। अत्र श्लोके रसाम्नायमहसेति। आम्नायते कथ्यते विधियत इति यावत्। तेनाम्नायो विधानम्। महः प्रकाशः पुनरित्यनेन पूर्वरूपरसविधानप्रकाशेन स्वां भूमिं मूलाधारमवाप्य इत्यर्थात् तथा प्रतीयते। लयक्रमेण यमते तु पुनः सृष्टिक्रमेणागमनम्। तदुक्तं यथा। ततः सा कुण्डली शक्तिर्मुद्राकारा सुरेश्वरी। पुनस्तेन प्रकारेण गच्छत्याधारपङ्कज इति। तथा भूतशुद्धिप्रकरणे। परमात्मनः पृथिव्यादितद्रूत्तत्त्वानि च च क्रमात्। जीवं कुण्डलिनीं चापि स्वस्थानं प्रापयेत् क्रमादिति। विशेषस्तु प्रकाशमाना प्रथमप्रयाणे प्रतिप्रयाणेऽप्यमृतायमागामिति तदनन्तरं तद्दिव्यामृतधारया पूर्वदर्शितशिवशक्तिसामरस्योत्पन्नपरमामृतस्य ब्रह्मरन्ध्रान्मूलाधारपर्य्यन्तगलितधारया। अतएवोक्तं तृतीयश्लोके। ब्रह्मद्वारं तदास्ये प्रविलसति सुधाधारगम्यप्रदेशमिति। स्थिरमतिः। स योगी दैवतं इष्टदैवतं षट्चक्रस्थडाकिन्यादिदैवतञ्च सन्तर्पयेदित्यर्थः तेनामृतेन देवेशि तर्पयेत् परदेवताम् षट्चक्रदेवतास्तत्र सन्तर्प्यामृतधारयेति। पूर्वोक्तवचनात् अमृतधारां विशेषयति। योगपरम्पराविदितयेति। योगस्य गुरूपदेशपरम्पराप्राप्तत्वात्। योगपरम्परेत्युक्तिरिति भावः। तेन गुरूपदेशपरम्पराविदितयेति फलितार्थः। अमृतं विशेषयति। ब्रह्माण्डभाण्डस्थितमिति। ब्रह्माण्डस्य भाण्ड आधारपत्रं कुण्डलिनी तस्याः सर्वेषां

**ज्ञात्वैतत् क्रममुत्तमं यतमना योगीयमाद्यैर्युतः श्रीदीक्षागुरुपादपद्मयुगलामोदप्रवाहोदयात्। संसारे न हि जन्यते न हि कदा संक्षीयते संक्षये नित्यानन्दपरम्पराप्रमुदितः शान्तः सतामग्रणीः ॥ ५४ ॥**

**योऽधीते निशि सन्ध्ययोरथ दिवा योगी स्वभावस्थितो मोक्षज्ञाननिदानमेतदमलं शुद्धञ्च गुप्तं परम्। श्रीमत्श्रीगुरुपादपद्मयुगलालम्बी यतान्तर्मनास्तस्यावश्यमभीष्टदैवतपदे चेतोनरीनृत्यते ॥ ५५ ॥**

योनिरूपत्वात्। तत्र स्थितं कुण्डलिनीपात्रस्थितमित्यर्थः॥ ५३॥

उक्तयोगक्रमज्ञानफलमाह ज्ञात्वैतदिति। श्रीदीक्षागुरुपादपद्मयुगलामोदप्रवाहोदयादिति। आमोद आनन्दः तस्य प्रवाहोऽविच्छिन्नोत्तरोत्तरसम्बन्धस्तेन नित्यानन्द इति यावत् तस्योदयो यस्मात् तदृशपादपद्मयुगलाज्ज्ञात्वेत्यर्थः। दीक्षागुरुरिति। प्रथमोपस्थितत्वेन गौरवातिशयेन च तद्ग्रहणम्। तदभावे अन्यगुरोरपि ज्ञातव्यम्। अतएवोक्तम्। मधुलुब्धो यथा भृङ्गः पुष्पात् पुष्पान्तरं व्रजेत्। ज्ञानलुब्धस्तथा शिष्यो गुरोर्गुर्वन्तरं व्रजेत् इति। नित्यानन्दपरम्पराप्रमुदित इति। नित्यानन्दधारारूपहर्षयुक्त इत्यर्थः। सतां योगिरूपप्रशस्तजनानामग्रगण्य इत्यर्थः॥५४॥

षट्चक्रश्लोकाध्यनफलमाह। योऽधीत इति। स्वभावे स्थित आत्मभावे नियुक्त इत्यर्थः। यतान्तर्मना इति। यतंयोगाभ्यासेन॥ स्थिरीकृतं अन्तरात्मनि मनो येन तादृश इत्यर्थः। स्पष्टमन्यत्॥ ५५॥

इति श्रीपूर्णानन्दयतिविरचित-श्रीतत्त्वचिन्तामण्यन्तर्गत-षट्चक्रविवरणश्लोकार्थपरिष्कारिण्यामष्टमं प्रकरणं समाप्तम्।

---



# राष्ट्रिय संस्कृत संस्थानम्
नवदेहली

ङ्गानाथ झा केन्द्रीय संस्कृत विद्यापीठ ग्रन्थमाला

॥ ४ ॥

बदरीनाथविरचिता

# चक्रकौमुदी

सम्पादकः
जीवेश्वर झा



# Rashtriya Sanskrit Sansthan

(Under the auspices of the Ministry of Education, Govt. of India)

**NEW DELHI**


●

## GANGANATHA JHA KENDRIYA SANSKRIT VIDYAPEETHA

## TEXT SERIES

●

*General Editor*

**Dr. G. C. TRIPATHI**

●

No 4

# CHAKRA KAUMUDI

( A treaties on the six plexus in the human body )

*of*

**BADARINATHA**

*Edited by*

**JEEVESHWAR JHA**





Allahabad

1979

राष्ट्रियसंस्कृतसंस्थानम्
( केन्द्रीयशिक्षामन्त्रालयस्याङ्गभूतम् )
नवदेहली

# गंगानाथझाकेन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला

प्रधानसम्पादकः
डॉ० गयाचरण त्रिपाठी

चतुर्थं प्रसूनम्

# चक्रकौमुदी

बदरीनाथविरचिता

सम्पादकः
जीवेश्वर झा




गंगानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्
मोतीलाल नेहरू पार्क
इलाहाबाद-२

॥ ४ ॥

बदरीनाथविरचिता

# चक्रकौमुदी

सम्पादकः
जीवेश्वर झा

गंगानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्
मोतीलाल नेहरू पार्क
इलाहाबाद-२
१९७९

Only one manuscript of this work has come to light till now. This was most probably collected in Mithila which Badarinatha actually haled from, and is presently preserved in the Manuscripts Library of this Vidyapeetha.

Shri Jeeveshwar Jha, Asstt. Curator in this Vidyapeetha, has carefully restored the text and nicely translated it into Hindi so that this technical subject has become more clear to the many non Sanskrit knowing people. The figures and sketches provided in the book contribute further to the proper understanding of the text.

Inspite of the fact that some works on this subject are already available ( e. g. *ṣaṭcakranirūpaṇa* translated by Arthur Avlon in his book *Serpent Power* ), I think that this small work has its own importance in view of its candid and easily intelligible treatment of the subject.

I am confident that this work shall be received well by the research students and scholars and shall prove popular.

*G. C. Tripathi*
**Principal**
**G. N. Jha K. S. Vidyapeetha**

Allahabad
June 1st, 1979

# विषयसूची

प्रज्ञानं ब्रह्म यद्वाक्यमहं ब्रह्मास्मि यत्पुनः ।
तत्त्वमसीति यद्वाक्यमयमात्मा ब्रह्म इत्यपि ॥
चतुष्टयमहावाक्यैरेतद् ब्रह्माभिधीयते ।
ब्रह्मविच्चापि लोकेषु ब्रह्मरूपेण वर्त्तते ॥

—चक्रकौमुदी ७.१६-१७

# प्रस्तावना

चक्रकौमुदीकार **बदरीनाथ** उजान[1] ( उद्यान ) ग्राम के **'नरोनए पूरे'** कुल-संभूत पराशर गोत्रीय श्रोत्रिय मैथिल ब्राह्मण थे।[2] आपके पिता का नाम **भोलानाथ** था। आपके पुत्ररत्न न था। केवल दो कन्याएँ थीं, जो **'खण्डवलाकुल'** संभूत मधुबनी के **बाबू हर्षधारी सिंह** तथा **बाबू तन्त्रधारी सिंह** के साथ विवाहित थीं। आजकल आपके दौहित्रवंश में **बाबू चन्द्रधारी सिंह** 'हिमकर' तथा **बाबू बुद्धिधारी सिंह** 'रमाकर' एवं **बाबू जयधारी सिंह** 'प्रभाकर' आदि जीवित हैं। यद्यपि लेखक ने अपने निवासस्थानादि के विषय में प्रस्तुत रचना में उल्लेख नहीं किया है, फिर भी मातृका के मङ्गलाचरण में अपने को मिथिला में उत्पन्न बतलाया है।[3]

मिथिला जनपद के श्रोत्रिय मैथिल परिवार में **महाराजा लक्ष्मीश्वर सिंह** के समय **'बदरीनाथ'** नाम से प्रसिद्ध दो व्यक्ति हुए। तथ्य यह है कि प्रथम, **'बदरीनाथ'** चक्रकौमुदीकार हैं और दूसरे आधुनिक संस्कृत साहित्य के ख्यातिप्राप्त काश्यपगोत्रीय **कविशेखर बदरीनाथ झा** थे। इनके अतिरिक्त एक और **बदरीनाथ उपाध्याय** नामक विद्वान का **पं० त्रिलोकनाथ मिश्र** ने अपने निबन्ध में चक्रकौमुदीकार के रूप में उल्लेख किया है।[4] परन्तु ग्रन्थ के अन्तःसाक्ष्य 'पुष्पिका' से यह स्पष्ट है कि चक्रकौमुदीकार **बदरीनाथ** श्रोत्रिय मैथिल ब्राह्मण थे।[5] साथ ही, **महाराजा लक्ष्मीश्वर सिंह** के समय में मैथिल श्रोत्रिय ब्राह्मण में उपरोक्त दोनों **'बदरीनाथ'** के अतिरिक्त **बदरीनाथ उपाध्याय** के नाम से प्रसिद्ध हुए ही नहीं, ऐसा मैथिल पञ्जीकार से जिज्ञासा करने पर ज्ञात हुआ है। उपरोक्त दूसरे **'बदरीनाथ'** साहित्य के विद्वान थे और तन्त्रादिशास्त्रों में उनकी रुचि न थी। ये वैष्णव थे, तथा अन्य कतिपय ख्यातिप्राप्त ग्रन्थों के अतिरिक्त **एकावलीपरिणय** एवं **राधापरिणय** जैसे मैथिली एवं संस्कृत में महाकाव्यों की रचना की। इनकी रचना **चक्रकौमुदी** नहीं है। यह उनके स्वलिखित प्रकाशित तथा अप्रकाशित ग्रन्थ सूची से स्पष्ट हो जाता है। इस विषय

---

१. दरभङ्गा मण्डलान्तर्गत, बिहार।

२. द्र० वंशवृक्ष।

३. सैषा श्रीमिथिलोद्भवेन बदरीनाथेन विद्वन्मुदे। च० कौ०, प्र० प०, श्लोक २।

४. मिथिलामिहिर, मिथिलाङ्क।

५. इति मैथिलश्रोत्रियश्रीबदरीनाथविरचितायां चक्रकौमुद्यां मूलाधारचक्रविवृतिर्नाम प्रथमः परिच्छेदः। प्रत्येक चक्र की पुष्पिका द्रष्टव्य।

में 'कविशेखर पुष्पाञ्जलि' अभिनन्दन ग्रन्थ में **डॉ० रामकरणशर्मा**[1] तथा **डॉ० त्रिलोकनाथ झा**[2] के निबन्ध द्रष्टव्य हैं।

**एम० कृष्णमाचारियर** महोदय ने अपनी पुस्तक में **बदरीनाथ** द्वारा रचित **'वृत्तप्रदीप'** नामक ग्रन्थ का उल्लेख किया है।[3] साथ ही क्रमशः **'हिस्ट्री आफ द क्लासिकल संस्कृत लिटरेचर'**,[4] **कैटेलागस कैटेलागरम**[5] तथा **न्यू कैटेलोगस कैटेलोगरम**[6] में चक्रकौमुदीकार **बदरीनाथ** एवं **बदरीनाथ उपाध्याय** का उल्लेख मिलता है। उक्त दोनों में **उपाध्याय बदरीनाथ** मैथिल श्रोत्रिय ब्राह्मण नही हैं ऐसा पहले स्पष्ट हो चुका है।

ग्रन्थ के अन्तःसाक्ष्य के आधार पर यह स्पष्ट होता है कि **बदरीनाथ** मैथिल श्रोत्रिय ब्राह्मण थे तथा **महाराजा लक्ष्मीश्वर सिंह** के दरबार पण्डित के पद पर थे।[7] मिथिला जनपदीय किंवदन्ती के अनुसार आपसे प्रसन्न होकर उक्त महाराजा ने जीवन निर्वाह हेतु उपहार स्वरूप भूमि भी दिया था। उसी प्रकार मिथिला के कतिपय मूर्धन्य विद्वानों, जैसे **पं० कृष्णमाधव झा, स्व० पं० जीवनाथ झा, पं० धर्मनाथ झा, पं० श्यामसुन्दर झा** तथा **पं० तेजनाथ झा** आदि से जिज्ञासा करने पर यह स्पष्ट हो गया कि उपरोक्त तथ्य सत्य है। **पं० श्यामसुन्दर झाजी** के कथनानुसार किंवदन्ती तो यह भी प्रचलित है कि उक्त **बदरीनाथ** बहुत बड़े तान्त्रिक थे और उनकी पत्नी महासिद्ध शाबर थी। एक दिन उनकी पत्नी ने अपने नौकरानी को अपने सिर के जूँ हेरने के लिए कहा। जब नौकरानी उक्त कार्य करने लगी तो उनके समस्त सिर में आँख देखकर भयभीत होकर वहाँ से रोती हुई भाग गई। शोरगुल सुनकर लेखक (बदरीनाथ) भीतर गए और अपनी पत्नी से कहने लगे कि 'अपने व्यक्तियों के साथ यदि इस प्रकार का व्यवहार करेंगी तो कौन घर का कार्य कर सकेगा ? यदि यही इच्छा है तो अपने ही दोनों के मध्य दोनो में अपनी-अपनी 'माया' और 'शक्ति' का प्रदर्शन कर हास्य-विनोद उपस्थित करें। अन्यथा अन्य व्यक्ति तो भय से भागेंगे और समाज में अप्रतिष्ठा होगी। अतः इससे तो यह स्पष्ट होता है कि **बदरीनाथ** एक बड़े तान्त्रिक थे और

---

१. कविशेखर पुष्पाञ्जलि, पृ० ६-१३।

२. वही, पृ० ६-८।

३. हिस्ट्री आफ क्लासिकल संस्कृत लिटरेचर, ले० एम० कृष्णमाचारियर, पृ० ६११।

४. वही।

५. कैटलोगस कैटलोगरम, ले० थियोडोर आफ्रेक्ट, पृ० ३६६।

६. न्यू कैटलोगस कैटलोगरम, मद्रास वि० वि०, मद्रास, पृ० २८१।

७. 'प्रतापोन्नतराज्यस्य महाराजस्य भूपतेः। श्रीलक्ष्मीश्वरसिंहस्य नयतामुदमादरात्'। च० कौ०, प्र० प०, श्लोक ३।

इसके अतिरिक्त सांख्य योग एवं अन्य आगम-निगम का आलोड़न करने के पश्चात ही प्रस्तुत **'चक्रकौमुदी'** की रचना की है।[1]

इनके वंशधरो में इनके चाचा (एकनाथ) के सन्तानों में प्रसिद्ध अर्थशास्त्र एवं मैथिली के विद्वान **प्रो० तन्त्रनाथ झा**, भारतीय प्रसिद्ध वैज्ञानिक **डॉ० शचीनाथ झा**, पत्रकार **श्री बोधनाथ झा** आदि विद्यमान हैं।

लेखक का समय १९वीं शती है, क्योंकि कि **महाराजा लक्ष्मीश्वर सिंह** के समसामयिक होने का स्पष्ट प्रमाण ग्रन्थ में उल्लिखित है।[2] इस दृष्टि से उक्त महाराजा का राज्यकाल 'कोर्ट्स ऑफ वार्ड' के बाद १८६० ई० से ही प्रारम्भ हुआ है।[3] अत: निश्चित तिथि उपलब्ध नहीं होने पर भी लेखक महोदय का समय १९वीं शती का उत्तरार्द्ध मानना अधिक युक्तियुक्त प्रतीत होता है। वंशावली के आधार पर भी यह कहा जा सकता है कि आपके जामाता द्वय के समय के अन्तराल से उक्त समय सही प्रतीत होता है।

**'चक्रकौमुदी'** की मातृका **गंगानाथ झा केन्द्रीय संस्कृत विद्यापीठ, इलाहाबाद** के **हस्तलेख-विद्यानुसन्धान विभाग** में सुरक्षित है। प्रस्तुत मातृका देवनागरी लिपि में लिखित उत्तम स्थिति में है। इसमें कुल तीस पत्रक हैं, प्रति पत्र पन्द्रह पंक्तियाँ तथा प्रति पंक्ति बीस अक्षर हैं और इसका आकार २३ × १४ से० मी० है। तथा मातृका के अन्तिम पाँच पत्रक किञ्चित् कीटविद्ध है।

उक्त मातृका की दूसरी प्रति अन्य स्थानों में कहीं भी उपलब्ध नहीं है। जैसा कि **कैटलोगस कैटलोगरम, न्यू कैटलोगस कैटलोगरम** तथा अन्य मातृका सूचीपत्रों को देखने से स्पष्ट होता है। अत: पाठभेद संकलन का समावेश नहीं किया जा सका है। वैसे तो मातृका स्पष्ट अक्षरों में लिखित है फिर भी प्रतिलिपिकार के अज्ञान वश कतिपय स्थलों पर ष का ख, ख का ष, श का स, स का श तथा व का ब और व लिखा गया है जिसका निराकरण यथास्थान यथामति संपादक द्वारा कर दिया गया है।

'बहुजन हिताय' के आधार पर प्रकाशन समिति के निर्णयानुसार प्रस्तुत ग्रन्थ में हिन्दी भाषानुवाद का समावेश किया गया है। ग्रन्थ का अनुवाद ग्रन्थ

---

१. 'आलोक्यागमसांख्ययोगनिगमान् संयत्नतो धीमता', च० कौ०, प्र० प०, श्लोक २।

२. 'प्रतापोन्नतराज्यस्य महाराजस्य भूपते:। श्रीलक्ष्मीश्वरसिंहस्य नयतामुदमादरात्। च० कौ०, प्र० प०, श्लोक ३।

३. हिस्ट्री आफ मैथिली लिटरेचर, ले० डॉ० जयकान्त मिश्र, भाग १ (मैथिली साहित्य का आधुनिक समय प्रारम्भ)।

सामग्री के मूल रूप में रखा गया है तथा भाव पक्ष को छोड़ दिया गया है। जहाँ जहाँ भाषानुवाद करते समय पारिभाषिक तान्त्रिक शब्दों का प्रयोग किया गया है वहाँ उसे कोष्ठक के अन्तर्गत स्पष्ट कर दिया गया है।

**षट्चक्र निरूपण** अथवा **षट्चक्र विवेचन** नामक अनेक ग्रन्थ लोकजीवन में अत्यधिक समादृत होने से इनके अनेकानेक संस्करण प्रकाशित हो चुके हैं। यह बंग प्रान्त के ख्यातिप्राप्त तान्त्रिकाचार्य **स्वामी पूर्णानन्द परमहंसदेव** विरचित **श्रीतत्त्व-चिन्तामणि**[1] ग्रन्थ का एक अध्याय (षष्ठ प्रकाश) मात्र है जिसमें सभी चक्रों का सम्पूर्ण रूप से वर्णन है। विभिन्न विद्वानों ने अत्यन्त मनोयोग से भाषानुवाद एवं टीका-टिप्पणियों सहित इसे प्रकाशित किया है। इसी के आधार पर एक विदेशी विद्वान आर्थर एभेलेन (Arthur Avalen) ने अंग्रेजी भाषा में एक बृहत्काय पुस्तक ही लिख डाली।[2] परन्तु भारतीय विद्वानों ने इसे उक्त ग्रन्थ का अविकल अनुवाद ही माना। म० म० **डॉ० गोपीनाथ कविराज** महोदय ने षट्चक्रों के विषय में लिखित अपने ग्रन्थ **तान्त्रिक साहित्य** में उन सभी लेखकों तथा टीकाकारों की सूची दी है जो विभिन्न संस्थाओं में उपलब्ध हैं, परन्तु प्रस्तुत **बदरीनाथ** विरचित **चक्रकौमुदी** का उल्लेख न तो मूल पुस्तक के रूप में किया है और न टीका अथवा भाषानुवाद के रूप में ही।[3] अतः षट्चक्रों पर लिखित अन्य ग्रन्थों की अपेक्षा तुलनात्मक दृष्टिकोण से ग्रन्थ में वर्णित बृहत् आधार से यह तथ्यतः स्पष्ट है कि यह **चक्रकौमुदी** एक स्वतन्त्र रूप से लिखित महत्त्वपूर्ण तान्त्रिक ग्रन्थ है, जिसमें यौगिक प्रक्रियाओं के द्वारा सतचित् आनन्द को प्राप्त कर अभीप्सित फल प्राप्ति का मार्ग प्रशस्त किया गया है।

ग्रन्थारम्भ मंगलाचरण से होता है, जिसमें द्वैतवाद के सिद्धान्त को ध्यान में रखते हुए भी अद्वैतवाद के अनुसार ही नित्यानन्द चिदात्मक भगवान श्रीकृष्ण अर्थात् ब्रह्म से प्रार्थना के रूप में लेखक ने काम भाव से युक्त इस कलि-काल में विखिन्न हृदय के दावाग्नि को शमन करके मोक्ष प्राप्ति की कामना की है तथा अर्द्धनारीश्वर से युक्त श्रुति सिद्धि को मन में धारण करके उक्त ग्रन्थ की रचना की बात कही गई है।

ग्रन्थ का विभाजन सात परिच्छेदों में किया गया है जिसमें क्रमशः मूला-धारचक्र, स्वाधिष्ठानचक्र, मणिपूरचक्र, अनाहतचक्र, विशुद्धचक्र, आज्ञाचक्र तथा

---

१. षट्चक्र निरूपणम्, संवत् २०११, प्राक्कथन तथा तान्त्रिक साहित्य, लेखक म० म० डॉ० गोपीनाथ कविराज, पृ० ६६४।

२. सर्पेण्ट पावर, ले० आर्थर एवेलेन।

३. तान्त्रिक साहित्य, ले० म० म० डॉ० गोपीनाथ कविराज, पृ० १९७-१९८; ६६४-६६७।

सहस्रारचक्र आदि हैं। प्रत्येक चक्र में प्रत्येक चक्र की अलग-अलग रूप से स्थिति को स्पष्ट किया गया है।

प्रस्तुत ग्रन्थ में विद्वान लेखक ने नित्य आनन्दस्वरूप **चिदात्मक** ब्रह्म को प्राप्त करने के मार्ग को प्रशस्त किया है। लेखक का तात्पर्य है कि **'नित्यपरमानन्द'** ही 'ब्रह्म' है। यहाँ स्पष्ट रूप से समझना चाहिए कि **'आनन्द'** का दो भेद माना गया है—**'परमानन्द'** और **'नित्यपरमानन्द'**। प्रथम अवस्था में साधक को, जो आनन्द कर्म करने के समय में प्राप्त होता है वह आनन्द स्थायी नहीं होता है क्योंकि बाह्य माया से आच्छादित रहता है। इसे ही **'परमानन्द'** कहते हैं। **'नित्यपरमानन्द'** में बाह्य माया का स्थान नहीं होता है। वह क्रमशः विभिन्न चक्रों में कुण्डलिनी का गमनागमन होने से **'शिवशक्ति'** अर्थात् **'नित्यपरमानन्द'** प्राप्त होता है। इसी **'नित्यपरमानन्द'** के प्राप्ति हेतु प्रस्तुत ग्रन्थ में समाविष्ट चक्रों के माध्यम से निम्नलिखित तथ्यों का विवरण प्रस्तुत किया गया है।

समस्त प्राणियों में मनुष्य मात्र ही पूर्णता को प्राप्त कर सकता है। इसी तथ्य पर तान्त्रिक एवं योगिक प्रक्रिया के आधार पर प्रस्तुत ग्रन्थ में मानव शरीर का निगूढतत्त्व अत्यन्त निपुणता के साथ निरूपित किया गया है। कुण्डलिनी शक्ति मनुष्य मात्र के शरीर में सुप्त रहती है। यही परमेश्वर की **'चैतन्यरूपा'** शक्ति है। किन्तु जब तक यह सुप्तावस्था में रहती है तब तक मनुष्य पशुवत् होकर आत्मस्वरूप को खोकर विश्व में विचरण करते हैं। मनुष्य मात्र ही शिव रूप है, परन्तु शक्ति के ज़ागृत होने पर ही शिवत्व को उपलब्धि होती है। इसी शक्ति का मूलधारचक्र में निवास स्थान है जो योगिक क्रिया के द्वारा ही जागृत किया जाता है। यही शक्ति सुषुम्णा मार्ग का अवलम्बन करके क्रमशः वज्रिणी तथा चित्रिणी नाड़ी को भेदन करती हुई ब्रह्मनाड़ी से ऊर्ध्वमुख होकर चलती है। इसके मार्ग में अनेक प्रदेशों में अनेक चक्रों की स्थिति है। कुण्डलिनीशक्ति जागृत होकर जिस समय जिस चक्र में प्रविष्ट होती है उसी समय उक्त चक्र से उन्मीलित होकर कार्यरत होती है तथा उक्त चक्र की शक्ति जागृत हो जाती है और योगी को शक्तिशाली बनाती है। उस समय योगी उस चक्र का ईश्वर बन जाता है। किन्तु योगी को चाहिए कि उस चक्र के वैभव में आत्मविभोर न होकर उसको पार करके उससे ऊपर उठे। उस चक्र में लिप्त रहने से पूर्ण शिवत्व की प्राप्ति सम्भव नहीं। ऐसा ही प्रत्येक चक्र में समझना चाहिए। नीचे के पाँच चक्र पाञ्चभौतिक तत्त्वों के तथा आज्ञाचक्र मन का अधिष्ठान है। इन छहों चक्रों का भेदन करने पर योगी पंचभूत तथा मन का नियामक अर्थात् ईश्वर बन जाता है। आज्ञाचक्र से ऊपर में जो बिन्दुस्थान है वहाँ से सहस्रदल कमल तक अति गुप्त मार्ग है। ज्ञानचक्र का उन्मीलन और दिव्यचक्षु का लाभ आज्ञाचक्र भेदन होने पर ही होता है किन्तु कुण्डलिनी का पूर्ण जागरण वहाँ भी नहीं होता है। जब कुण्डलिनी शक्ति पर भूमि अतिक्रमण करती हुई सहस्रदल में प्रवेश करती है तब उसी

समय शक्ति का जागरण पूर्ण रूप से होता है। मनीषिगण इस अवस्था को **योगावस्था** अथवा **सामरस्य** कहते हैं। इस प्रकार के मिलन से सुधारस का स्रवण होता है। जीव उस रस को पीकर सब दुःखों से मुक्त होकर धन्य हो जाता है अर्थात् 'ब्रह्म' तत्त्व को प्राप्त करके कृतकृत्य हो जाता है। इस प्रकार **नित्यपरमानन्द** की उपलब्धि के लिए षट्चक्र तथा उसकी प्रक्रिया ही मुख्य एवं महत्त्वपूर्ण उपाय है।

अन्त में, राष्ट्रिय संस्कृत संस्थान के निदेशक एवं अन्य पदाधिकारियों को इसके प्रकाशन स्वीकृति हेतु धन्यवाद ज्ञापित करता हूँ। अपने विद्यापीठ के भू० पू० अध्यक्ष **डॉ० बाबूराम सक्सेना,** प्रकाशन एवं शोध समिति के सदस्य आचार्य प्रवर **प्रो० सरस्वती प्रसाद चतुर्वेदी, डॉ० आद्या प्रसाद मिश्र** एवं भू० पू० कार्यकारी प्राचार्य **डॉ० हरिहर झा** के प्रति मैं अपना आभार प्रकट करता हूँ जिन लोगों ने उक्त हस्तलेख के सम्पादन कार्य का गुरुतर भार मुझ पर सौंप कर उत्साहित एवं अनुगृहीत किया।

इसके अतिरिक्त मैं अपने मित्र **डॉ० किशोरनाथ झा** तथा **डॉ० जगन्नाथ पाठक जी** का अत्यन्त आभारी हूँ, जो मुझे समय-समय पर अपना अमूल्य समय देकर इस सम्पादन कार्य में सुझाव एवं सहायता आदि देकर इस गुरुतर कार्य को पूर्ण करने के लिए उत्साहित करते रहे।

कामेश्वर सिंह दरभंगा संस्कृत विश्वविद्यालय, दरभंगा के **'पञ्जी-प्रबन्ध'** विभाग के अध्यक्ष **पं० हरिनन्दन झा** एवं यू० जी० सी० गवेषक **डॉ० शशिनाथ झा जी** का हृदय से कृतज्ञ हूँ जिनके सत्प्रयास से मुझे चक्रकौमुदीकार **बदरीनाथ** की वंशावली एवं अन्य महत्त्वपूर्ण सूचनाएँ प्राप्त हुईं।

मित्र प्रवर **डॉ० ब्रह्ममित्र अवस्थीजी** ने इस ग्रन्थ के सम्पादन भाषानुवाद में दुरूह स्थल तथा कतिपय क्लिष्ट एवं अस्पष्ट शब्दों की व्याख्या करके इस कार्य को पूर्ण करने में सहायता तथा सुझाव दिया है, अतएव उन्हें हृदय से धन्यवाद देता हूँ।

अन्त में मित्रवर **डॉ० राघव चौधरी प्रसाद जी** को धन्यवाद देता हूँ जिन्होंने ग्रन्थ समाप्ति के समय में उपयुक्त सुझाव देने का कष्ट किया। साथ ही विद्यापीठ में शोधरत, विन्ध्य माँ के परम भक्त श्री प्रकाश पाण्डेय जी का हृदय से धन्यवाद देता हूं जिन्होंने मुझे ग्रन्थ में आगत चक्र आदि के निर्माण में अपना सत्परामर्श देकर कृतार्थ किया है।

सबसे महत्त्वपूर्ण एवं उल्लेखनीय विषय यह है कि विद्यापीठ के समादरणीय प्राचार्य, **डॉ० गयाचरण त्रिपाठीजी** ने अपने गुरुतर प्राशासनिक भार रहते हुए

तथा अपने कार्यकाल की अल्पावधि में ही समस्त पाण्डुलिपि का अवलोकन कर ग्रन्थ को प्रकाशित करने की व्यवस्था की, अतएव उनके प्रति मैं हृदय से अत्यन्त आभारी हूँ।

प्रस्तुत सम्पादन कार्य कहाँ तक सफल हो सका है, इसका निर्णय तो सुधी पाठकगण ही करेंगे। पाठकगण से प्रार्थना करता हूँ कि समुचित सुझाव देकर अनुगृहीत करेंगे जिससे कि अगले संस्करण में उसका संशोधन एवं परिमार्जन करके पुनः प्रस्तुत कर सकूँ।

अन्त में, मैं श्री विष्णु आर्ट प्रेस, इलाहाबाद के अधिकारियों को धन्यवाद ज्ञापित करता हूँ, जिन लोगों के अथक प्रयास से कम समय में यह संस्करण पाठकों के समक्ष प्रस्तुत हो सका। इति शुभम्।

रामनवमी
५-४-७६
प्रयाग

जीवेश्वर झा

—:०:—

※'नरोनए पूरे' मूल के उजान ग्राम निवासी

## 'चक्रकौमुदीकार' श्रोत्रियमैथिल बदरीनाथ की वंशावली




※प्रस्तुत कुलवृक्ष (वंशावली) पंडित श्री हरिनन्दन झाजी, श्रोत्रिय मैथिल ब्राह्मण ञ्जीप्रबन्ध विभाग, कामेश्वर सिंह दरभङ्गा संस्कृत विश्वविद्यालय, लक्ष्मीश्वर सिंह नगर, दरभंगा के सौजन्य से प्राप्त हुआ है।

१. म० म० डॉ० गङ्गानाथ झा जी से भिन्न हैं।

२. चक्रकौमुदीकार।

—०—

# षट्चक्रमूर्त्तिः
## ( THE NATURE OF THE SIX PLEXUS )




सिद्धासनम्

चित्रसंख्या : १

बदरीनाथ-विरचिता

# चक्रकौमुदी

## [ प्रथमः परिच्छेदः ]

### मङ्गलाचरणम्

नमः श्रीतारिण्यै ।

यन्मायावशवर्त्तिनो विदधते जीवानि मर्त्या तनुं [?]
द्वैतज्ञानमवाप्य कामवसिते घोरे भवे कामुकाः ।
दस्युक्रोधगणैर्विखिन्नहृदया दावाग्निसम्मर्द्दिता
नित्यानन्दचिदात्मकञ्च सकलं नेच्छन्ति यस्मिन् जगत् ॥१॥

जिस परब्रह्म माया के वशीभूत होकर कामुक लोग द्वैतज्ञान प्राप्त कर कामवासित घोर संसार में जीवरूपता एवं मरणशील शरीर (जीवन) को धारण करते हैं वे क्रोधगण डाकुओं के द्वारा प्रताडित अर्थात् दावाग्नि से विकल की तरह व्याकुल हृदयवाले, जिसमें (श्रीकृष्ण में) नित्यानन्द चिदात्मक सकल जगत की कामना नहीं करते हैं ।

[यद्यपि उपरोक्त इस श्लोक में परब्रह्म शब्द का उल्लेख नहीं है, फिर भी पूर्वापर अनुशीलन से प्रतीत होता है कि ग्रन्थकार के अनुसार श्रीकृष्ण को नित्यानन्द चिदात्मक परब्रह्म स्वीकारा गया है। जो कि समस्त जगत के आधार भूत हैं। इस तरह ग्रन्थकार के मत में श्रीकृष्ण अद्वैत सिद्धान्त के अनुसार स्वीकृत परब्रह्म ही हैं। यद्यपि माया के वशीभूत, जन्ममरणशील द्वैतभावना से वासित संसार, पीडा से व्याकुल लोग उस नित्यानन्द चिदात्मक (श्रीकृष्ण) परब्रह्म को समस्त जगत का आधारभूत होना स्वीकार नहीं करते हैं लेकिन वस्तुतः श्रीकृष्ण ही परब्रह्म हैं।]

तं श्रीकृष्णमुदारबुद्धिममलं प्रध्वंसनं कर्मणां
चिन्मात्रञ्च परं निधाय हृदये शिक्षादिसत्संग्रहान् ।
आलोक्यागमसाङ्ख्ययोगनिगमान् संयत्नतो धीमता
सैषा श्रीमिथिलोद्भवेन **बदरीनाथेन** विद्वन्मुदे ॥२॥

उस उदार बुद्धि निर्मल कर्म के विध्वंसकारी चिन्मात्र श्रीकृष्ण को हृदय में धारण करके शिक्षा आदि सद्ग्रन्थों के संग्रह को देखकर सांख्य, योग, आगम और निगम आदि का भी यत्नपूर्वक आलोड़न करके मेधावी मैथिल पण्डित बदरीनाथ द्वारा विद्वानों की प्रसन्नता के लिए इस चक्रकौमुदी की रचना की जा रही है ।

प्रतापोन्नतराजस्य महाराजस्य भूपतेः ।
श्रीलक्ष्मीश्वरसिंहस्य नयता मुदमादरात् ॥३॥

यह चक्रकौमुदी परम प्रतापी अर्थात् उन्नत या समृद्ध राज्य वाले महाराजा लक्ष्मीश्वर सिंह के समक्ष आदरपूर्वक उपस्थित की जाती हुई उनकी प्रसन्नता का कारण बने ।

उमाविराजिततनोश्चन्द्रशेखर धीरतेः [?] ।
श्रुतिसिद्धिवचो धृत्वा क्रियते **चक्रकौमुदी** ॥४॥

उमा से विराजित शरीर वाले (अतएव अर्द्धनारीश्वर) चन्द्रशेखर (शिव) के सदृश उमा से युक्त चन्द्रशेखर नाम वाले परम मनीषी के श्रुतिसिद्ध वचनों को हृदय में धारण करके (अर्थात् परमगुरु चन्द्रशेखर के वचनों के अनुसार ही) चक्रकौमुदी की रचना की जा रही है ।

---

## [मूलाधारचक्रम्]

•

अथ वक्ष्ये मूलचक्रं मूलप्रकृतिसंयुतम् ।
यस्य विज्ञानमात्रेण जीवन्मुक्तो भवेन्नरः ॥५॥

सर्व प्रथम मैं मूल प्रकृति से युक्त मूलाधार चक्र का वर्णन करूँगा जिसके ज्ञान मात्र से मनुष्य का जीवन मुक्त हो जाता है ।

## मूलाधारचक्रम्
( PELVIC PLEXUS )
चतुर्द्दलपद्म




चित्रसंख्या : २

गुदलिङ्गान्तरे पद्मं चतुर्द्दलसमन्वितम् ।[1]
चतुर्द्दलेषु स्वर्णाभान् वा दिसान्तान् स्मरेत्सुधीः ॥६॥

गुदा एवं लिङ्ग के मध्य चार दलों से युक्त पद्म विराजमान है, उसके चार दलों में स्वर्ण सदृश चारों दिक् भागों का साधक स्मरण करे।

क्षितेर्मण्डलमत्रैव पीताभं ऋतुकोणकम् ।
चतुष्कोणेषु वज्राद्यं लं बीजं तत्र भावयेत् ॥७॥

इस पर ही ऋतु (अर्थात् ६ कोणों वाला) पीत कान्ति युक्त क्षिति मण्डल है, इसके चार कोणों में वज्रादि लं बीज की भावना करे।

क्षितिरूपं गजारूढं स्वर्णाभं वेदबाहुकम् ।[2]
तत्र ध्यायेच्चतुर्बाहुं ब्रह्माणं साक्षसूत्रकम् ॥८॥

वहीं पर पृथ्वी के रूप में हाथी (ऐरावत) पर बैठे हुए स्वर्णिम कान्ति सम्पन्न चारो हाथों में वेद लिए हुए चतुर्भुज अक्ष और सूत्र (माला) से युक्त ब्रह्मा का ध्यान करे।

---

तुलनीयः—१. अथाधारपद्मं सुषुम्णास्यलग्नं
ध्वजाधो गुदोर्द्ध्वं चतुःशोणपत्रम् ।
अधोवक्त्रमुद्यत्सुवर्णाभवर्णै—
र्वकारादिसान्तैर्युतं वेदवर्णैः ॥
[श्रीतत्त्वचिन्तामणिः, षष्ठाध्यायः, आधारचक्रम्, श्लोक ५]

अमुष्मिन् धरायाश्चतुष्कोणचक्रं
समुद्भासिशूलाष्टकैरावृतं तत् ।
लसत्पीतवर्णं तडित्कोमलाङ्गं
तदङ्के समास्ते धरायाः स्वबीजम् ॥
[श्रीतत्त्वचिन्तामणिः, षष्ठाध्यायः, आधारचक्रम्, श्लोक ६]

२. चतुर्बाहुभूषं गजेन्द्राधिरूढं
तदङ्के नवीनार्कतुल्यप्रकाशः ।
शिशुः सृष्टिकारी लसद्वेदबाहु—
र्मुखाम्भोजलक्ष्मीश्चतुर्भागभेदः ॥
[श्रीतत्त्वचिन्तामणिः, षष्ठाध्यायः, आधारचक्रम्, श्लोक ७]

दधानं पङ्कजं दिव्यं कमण्डलुमनुत्तमम् ।[1]
तद्वामे डाकिनी शक्तिर्ध्येया सूर्यसमप्रभा ॥९॥

जो कि दिव्य कमल एवं अत्यन्त उत्तम कमण्डलु को धारण किए हुए हैं, उनके बाएँ भाग में सूर्य के सदृश कान्ति वाली डाकिनी शक्ति का ध्यान करे।

चतुर्भुजा साक्षसूत्रनीरपात्रयुताम्बिका ।
मूलचक्रस्थिता नित्या ध्यानाद्योगप्रदर्शनी ॥१०॥

चार भुजाओं वाली अक्षसूत्र (माला) और जलपात्र (कमण्डलु) से युक्त मूलचक्र पर स्थित अम्बिका का नित्य ध्यान करने से वह देवी योग विद्या का साक्षात् प्रदर्शन करती है।

कर्णिकायामूर्ध्वकोणं त्रिकोणमतिसुन्दरम् ।[2]
ऊर्ध्वकोणे सुषुम्णाख्या वामदक्षिणयोः क्रमात् ॥११॥
इडाख्या पिङ्गलाख्या हि वीणातन्तुवदास्थिता ।
इडा तु चन्द्रनाडी स्यात् पिङ्गला सूर्यनाडिका ॥१२॥

उस मूलाधार चक्र के चतुर्दल कमल की कर्णिका में अत्यन्त सुन्दर ऊर्ध्व-कोण त्रिकोण है, उसके ऊर्ध्व कोण में सुषुम्णा तथा वायीं एवं दायीं क्रमशः इडा और पिङ्गला नाम की नाड़ियाँ वीणा तन्तु की तरह [सूक्ष्म] स्थित है। इनमें से इडा को चन्द्रनाड़ी तथा पिङ्गला को सूर्यनाड़ी भी कहते हैं।

---

तुलनीयः—१. वसेदत्र देवी च डाकिन्यभिख्या
लसद्वेदबाहूज्ज्वला रक्तनेत्रा ।
समानोदितानेकसूर्यप्रकाशा
प्रकाशं वहन्ती सदा शुद्धबुद्धेः ॥
[श्रीतत्त्वचिन्तामणिः, षष्ठाध्यायः, आधारचक्रम्, श्लोक ८]

२. वज्राख्या वक्त्रदेशे विलसति सततं कर्णिकामध्यसंस्थं
कोणं तत् त्रैपुराख्यं तडिदिव विलसत् कोमलं कामरूपम् ।
कन्दर्पो नाम वायुर्निवसति सततं तस्य मध्ये समन्तात्
जीवेशो बन्धुजीवप्रकरमभिहसन् कोटिसूर्यप्रकाशः ॥
[श्रीतत्त्वचिन्तामणिः, षष्ठाध्यायः आधारचक्रम्, श्लोक ९]

अनिलेन्द्वर्करूपा हि सुषुम्णा परिकीर्त्तिता ।
सुषुम्णान्तर्गता ध्येया चित्रिणी ब्रह्मनाडिका ॥१३॥

सुषुम्णा का स्वरूप अग्नि, चन्द्र तथा सूर्य के सदृश कहा गया है, सुषुम्णा के अन्तर्गत ही चित्र वर्णों वाली ब्रह्मनाड़ी है, जिसका ध्यान करना चाहिए ।

ब्रह्मरन्ध्रं विदुस्तस्यां कुण्डलीगमनायनम् ।
सार्द्धत्रिकोट्यो नाड्यस्तु मूलचक्रोत्थिताः स्मृताः ॥१४॥

उसमें ही योगी लोग ब्रह्मरन्ध्र है, ऐसा जानते हैं। इस ब्रह्मरन्ध्र में कुण्डली के गमन का स्थान है। मूलचक्र से ऊपर निकली हुई साढ़े तीन करोड़ (कोटि) नाड़ियाँ हैं ।

तासु प्रधाना दश च पिङ्गलेडा सुषुम्णिका ।
गान्धारी हस्तिजिह्वाख्या सुपूषाऽलम्बुषास्तथा ॥१५॥

उनमें दश प्रधान नाड़ियाँ है, जिनके नाम निम्नलिखित हैं—१. पिङ्गला २. इडा ३. सुषुम्णा ४. गान्धारी ५. हस्तिजिह्वा ६. सुपूषा ७. अलम्बुषा,

यशस्विनी शङ्खिनी च कुहूस्तत्र व्यवस्थिता ।
सव्ये नेत्रें च गान्धारी हस्तिजिह्वा तु दक्षिणे ॥१६॥

८. यशस्विनी ९. शङ्खिनी १०. कुहू । इन नाड़ियों में से गान्धारी बायें नेत्र तथा हस्तिजिह्वा दायें नेत्र से संयुक्त है ।

यशस्विनी वामकर्णे सुपूषा दक्षकर्णके ।
मुखे चालम्बुषा ज्ञेया कुहूर्ल्लिङ्गे व्यवस्थिताः ॥१७॥

इसी प्रकार बायें कान में यशस्विनी, दाहिने कान में सुपूषा, मुख में अलम्बुषा और लिङ्ग में कुहू व्यवस्थित है ।

शङ्खिनी मूलदेशे तु देहं व्याप्यापराः स्थिताः ।
तासाम्प्रयोजनाभावादत्र व्याख्या कृता नहि ॥१८॥

शङ्खिनी नाड़ी मूलदेश में स्थित है तथा शेष नाड़ियाँ सम्पूर्ण शरीर में फैली हुई हैं। प्रयोजन के अभाव से यहाँ उनकी व्याख्या नहीं की जा रही है ।

ऊर्ध्वकोणे लिङ्गरूपं दाडिमीपुष्पसन्निभम् ।[1]
स्वयम्भूलिङ्गमाहुस्तत् केचित्तान्त्रिकसत्तमाः ॥१९॥

पूर्वोक्त त्रिकोण के ऊर्ध्वकोण में अनार के फूल के सदृश एक लिङ्ग की आकृति विद्यमान है जिसे तान्त्रिक श्रेष्ठ विद्वान लोग स्वयम्भू-लिङ्ग कहते हैं।

दशेन्द्रियमनोबुद्धिपञ्चप्राणसमन्वितम् ।
अपञ्चीकृतभूतोत्थं लिङ्गदेहमुदाहृतम् ॥२०॥

यह लिङ्ग दश इन्द्रियाँ, मन, बुद्धि और पाँच प्राणों से युक्त है। इसका निर्माण अपञ्चीकृत (शुद्ध) पंचभूतों से हुआ है, इसे ही लिङ्ग-देह कहा जाता है।

अनेन वासनायुक्तो जीवो देहान्तरं व्रजेत् ।
जीवस्य वासनानाशे लिङ्गनाशो भवेद् ध्रुवम् ॥२१॥

यह लिङ्ग शरीर में वासनाओं से युक्त होकर देह (शरीर) देहान्तर (अर्थात् विभिन्न शरीरों) को प्राप्त करता है, जीव की वासनाओं का नाश हो जाने पर लिङ्ग का भी नाश निश्चित हो जाता है।

सार्द्धत्रिवलयाकारा सुप्ताहिसदृशाकृतिः ।[2]
प्रकृतिः कुण्डली नित्या लिङ्गमाश्रित्य संस्थिता ॥२२॥

इस लिङ्ग के आश्रित ही सोये हुए साँप की आकृति वाली साढ़े तीन वलयों से युक्त कुण्डली विद्यमान है। यह कुण्डली नित्य है और इसे ही प्रकृति भी कहते हैं।

---

तुलनीयः—१. तन्मध्ये लिङ्गरूपी द्रुतकनककलाकोमलः पश्चिमास्यो
ज्ञानध्यानप्रकाशः प्रथमकिसलयाकाररूपः स्वयम्भूः ।
विद्युत्पूर्णेन्दुबिम्बप्रकरचयस्निग्धसन्तानहासी
काशीवासी विलासी विलसति सरिदावर्तरूपप्रकारः ॥
[श्रीतत्त्वचिन्तामणिः, षष्ठाध्यायः, आधारचक्रम्, श्लोक १०]

तुलनीयः—२. तस्योर्ध्वे विसतन्तुसोदरलसत्सूक्ष्मा जगन्मोहिनी
ब्रह्मद्वारमुखं मुखेन मधुरं सञ्छादयन्ती स्वयम् ।
शङ्खावर्तनिभा नवीनचपलामालाविलासास्पदा
सुप्ता सर्पसमा शिवोपरिलसत्सार्द्धत्रिवृत्ताकृतिः ॥
[श्रीतत्त्वचिन्तामणिः, षष्ठाध्यायः, आधारचक्रम्, श्लोक ११]

तमोरजस्सत्त्वसाम्यावस्थेयं चित्कला स्मृता ।
अर्द्धांशब्रह्मसंश्लिष्टा मूलप्रकृतिरीश्वरी ॥२३॥

यह प्रकृति कुण्डली जब तम, रजस, तथा सत्त्व की साम्य अवस्था से युक्त होती है तब इसे चित्कला कहते हैं। इसके अर्द्धांश में ब्रह्म का संश्लेष होने पर यह मूल प्रकृति ईश्वरी कहलाती है।

सत्त्वादित्रिकरूपं हि वलयत्रयमीरितम् ।
ब्रह्मपुच्छमिदं यद्वदर्द्धं [?] ब्रह्मांश उच्यते ॥२४॥

उसमें जो तीन वलय दिखाई पड़ते हैं वे एक एक सत्त्व, रजस और तमस रूप हैं और वलय रूप ऊपर को उठा हुआ अंश ब्रह्मपुच्छ और ब्रह्मांश कहा जाता है।

काव्यादिवाचो जगतां श्वासोच्छ्वासविभञ्जनैः ।[1]
कूजन्ति कुण्डलीशक्तिर्यया जीवो हि धार्यते ॥२५॥

विश्व की प्राणियों के श्वास-उच्छ्वास से प्रकट होने वाली काव्य आदि वाणियाँ उस कुण्डली शक्ति का ही वर्णन करती है। इस कुण्डली शक्ति से ही जीव का धारण किया जाता है।

मूलाधारोत्थिता विद्या पञ्चाशद्वर्णरूपिणी ।
चैतन्यं यच्च भूतानां शब्दब्रह्म तदुच्यते ॥२६॥

मूल आधार से उठी हुई विद्या जो कि पचास वर्णों वाली है तथा जो समस्त भूतों का चैतन्य है, उसे शब्दब्रह्म कहते हैं।

तत्प्राप्य कुण्डलीरूपं प्राणिनां मूलचक्रगम् ।
वर्णात्मनाऽविर्भवति गद्यपद्यादिभेदतः ॥२७॥

समस्त प्राणियों के मूलचक्र में विद्यमान कुण्डली रूप शब्दब्रह्म को प्राप्त करके वर्णों के रूप में प्रगट होता है। गद्य और पद्य उसके ही भेद हैं।

---

तुलनीयः—१. कूजन्ती कुलकुण्डली च मधुरं मत्तालिमालास्फुटं
वाचः कोमलकाव्यबन्धरचनाभेदातिभेदक्रमैः ।
श्वासोच्छ्वासविभञ्जनेन जगतां जीवो यया धार्यते
सा मूलाम्बुजगह्वरे विलसति प्रोद्दामदीप्त्यावलिः ॥
[श्रीतत्त्वचिन्तामणिः, षष्ठाध्यायः, आधारचक्रम्, श्लोक १२]

परिस्फुरति सर्वात्मा हंसमात्मानमाश्रिताः ।
हंसः प्राणाश्रयो नित्यं प्राणो नाडीपथाश्रयः ॥२८॥

ये गद्यपद्य आदि भेद सर्वात्मना हंस रूप आत्मा पर आश्रित होकर प्रगट होते हैं। यह आत्मा हंस प्राण के आश्रित है और यह प्राण नाड़ी पथ के आश्रित है।

आधारादुद्गतो वायुर्यथावत्सर्वदेहिनां ।
देहं व्याप्य सुनाडीभिः प्रयाणं कुरुते बहिः ॥ २९॥

(मूल) आधार से उठा हुआ वायु सभी प्राणियों के देह में यथावत व्यापक होकर शुभ नाड़ियों के माध्यम से प्रयाण करता है।

द्वादशाङ्गुलमानेन तस्मात् प्राण इतीरितः ।
पुम्प्रकृत्यात्मकौ प्रोक्तौ बिन्दुसर्गौ मनीषिभिः ॥३०॥

क्योंकि इसका मान अर्थात् प्रमाण द्वादश अङ्गुल है अतः इसे प्राण कहा जाता है। मनीषि लोग बिन्दु और सर्ग को पुरुष और प्रकृति के रूप में बतलाते हैं।

हंसौ तौ पुम्प्रकृत्याख्यौ हम्पुमान् प्रकृतिस्तु सः ।
अजपा कथिता ताभ्यां जीवो यामुपतिष्ठते ॥३१॥

पुरुष और प्रकृति रूप हंसों में (हम् पुरुष का वाचक है तथा सः प्रकृति का) इस प्रकार हंस पद पुरुष और प्रकृति दोनों का वाचक होता है। जीव जिसे प्राप्त करता है उसे हंस (अजपा) कहते हैं।

हंकारेण बहिर्याति सःकारेण विशेत्पुनः ।
हंसमित्यक्षरं नित्यं जीवो जपति सर्वदा ॥३२॥

जीव हं इस एक अक्षर का नित्य जप करे। इस जप के अवसर पर हंकार के साथ प्राण को बाहर निकाले और सः कार के द्वारा पुनः प्राण को प्रवेश कराये।

पुरुषस्याश्रयं गत्वा प्रकृतिर्नित्यमात्मनः ।
यदा तद्भावमाप्नोति तदा सोऽहमियम्भवेत् ॥३३॥

जब प्रकृति पुरुष का आश्रय प्राप्त करके स्वयं को तद् रूप बना देती है अर्थात् पुरुष के आश्रय से प्रकृति पुरुष रूप हो जाती है, उस समय यह सोहं स्थिति हुआ करती है।

सकारार्णं हकारार्णं लोपयित्वा ततः परम् ।
सन्धिं कुर्यात् पूर्वरूपं तदाऽसौ प्रणवो भवेत् ॥३४॥

इस सोहं पद में सकार एवं हकार का लोप करके यदि पूर्व रूप सन्धि कर दी जाय तो (सोहम् = ओ अम् = ओऽम्) ओंकार रूप प्रणव बन जाता है।

ॐ मित्येकाक्षरब्रह्म शब्दब्रह्मेति मे मतिः ।
एकमेकाक्षरब्रह्म स्थानभेदादनेकधा ॥३५॥

यह ओं एकाक्षर ब्रह्मशब्द ब्रह्म है, ऐसी मेरी धारणा है। यह एक एकाक्षर ब्रह्म स्थान भेद से अनेक प्रकार का हो जाता है।

एकविंशसहस्रञ्च षट्शताधिकमेव तु ।
अजपा नाम मन्त्रन्तु जीवो जपति नित्यशः ॥३६॥

इसी प्रणव को यदि इक्कीस हजार छः सौ बार जपा जाय तो अजपा मन्त्र निष्पन्न होता है, जीव जिसका जप करता है।

साधकः प्रातरुत्थायाजपाजपं समर्पयेत् ।
सशक्तिकगणेशाय मूलाधारस्थिताय च ॥३७॥
समर्पयेत् षट्शतन्तु स्वाधिष्ठाने स्थिताय च ।
सावित्रीब्रह्मणे चैव षट्सहस्रं समर्पयेत् ॥३८॥

साधक व्यक्ति प्रातःकाल उठकर अजपा जप समर्पित करे। इस पूर्वोक्त अजपा जप में ६ सौ मन्त्रों का मूलाधारचक्र में स्थित शक्ति और गणेश को समर्पित करे तथा स्वाधिष्ठानचक्र में स्थितस ावित्री — ब्रह्मा को ६ हजार मन्त्रों का समर्पण करे।

मणिपूरे षट्सहस्रं लक्ष्मीनारायणाय च ।
अनाहते षट्सहस्रमुमामहेश्वराय च ॥३९॥

मणिपूर चक्र में स्थित लक्ष्मीनारायण को छः हजार तथा अनाहतचक्र में स्थित उमा-महेश्वर को छः हजार मन्त्रों का समर्पण करे।

जीवात्मने सहस्रन्तु प्राणशक्तियुताय च ।
समर्पयेद्विशुद्धाख्य आज्ञाचक्रे परात्मने ॥४०॥
पराशक्तियुतायेव सहस्रन्तु समर्पयेत् ।
सहस्रन्तु सहस्रारे गुरवे तं समर्पयेत् ॥४१॥

प्राण और शक्ति से युक्त जीवात्मा को एक हजार तथा आज्ञाचक्र में स्थित पराशक्ति से युक्त विशुद्ध संज्ञा वाले परमात्मा को एक हजार मन्त्रों का समर्पण करे एवं सहस्रारचक्र में स्थित गुरू को सहस्र (हजार) मन्त्रों का समर्पण करे।

प्राणादिवायवो ये च सन्तीह दशसंख्यकाः ।
तेषां स्थानानि नामानि कथ्यन्ते क्रमशः स्फुटम् ॥४२॥

अग्रिम पद्यों में प्राण आदि दश वायुओं (दश प्राणों) के क्रमशः स्थान और नाम बताये जा रहे हैं।

नासाग्रवर्त्ती प्राणाख्यस्त्वपानोऽधो व्यवस्थितः ।
समानो मध्यदेहस्थोऽशितान्नादिसमीकरः ॥४॥

नासिका के अग्रभाग में स्थित वायु को 'प्राण' कहा जाता है तथा अधो-भाग में (मलद्वार में) व्यवस्थित वायु को 'अपान' कहते हैं। उदर में स्थित खाये हुए अन्न आदि का पाचन करने वाला वायु 'समान' कहलाता है।

उदानः कण्ठदेशस्थ ऊर्ध्वगामी स्फुरत्यसौ ।
सम्पूर्णदेहवर्त्ती स्यात् व्यानो नाम प्रचारकः ॥४४॥

ऊर्ध्वगामी तथा कण्ठदेश में स्थित वायु को 'उदान' कहते हैं एवं सम्पूर्ण देह में व्याप्त होकर उसके संचार में हेतु वायु को 'व्यान' कहते हैं।

नाग उद्‌गीरणे प्रोक्तः कूर्म्म उन्मीलने मतः ।
कृकरः क्षुत आख्यातो देवदत्तो विजृम्भणे ॥४५॥

जिस वायु से उद्‌गीरण अर्थात् सम्भाषण करते हैं उसे 'नाग' कहा जाता है। आँखों के उन्मीलन-निमीलन का हेतु वायु 'कूर्म' कहलाता है। क्षुधा का हेतु वायु 'कृकर' (कृकल ?) कहलाता है तथा जम्भाइ में कारणभूत वायु दवदत्त कहलाता है।

सर्वव्यापी पोषणे च धनञ्जय इति स्मृतः ।
वह्नयोऽत्र दशप्रोक्तास्तत्तत्स्थानसमाश्रिताः ॥४६॥

सम्पूर्ण शरीर में व्यापक तथा पोषण के हेतु वायु को 'धनञ्जय' कहते हैं। अग्रिम पंक्तियों में दश अग्निओं का तथा उन स्थानों का वर्णन किया जायगा जहाँ वे अग्नियाँ स्थित हैं।

त्वचि भ्राजकनामाग्नी रञ्जकोऽसृजि संस्थितः ।
मांसे क्लेदकनामाग्निर्मेदसि स्नेहकः स्मृतः ॥४७॥

त्वचा में 'भ्राजक' नाम की अग्नि स्थित रहती है तथा 'रञ्जक' नाम की अग्नि खून में स्थित है, मांस में रहने वाली अग्नि 'क्लेदक' तथा मेद (चर्वी) में रहने वाली अग्नि 'स्नेहक' कहलाती है।

धावकोऽस्थिस्मृतो वह्निर्मज्जायां बन्धकः स्मृतः ।
शुक्रे द्रावकनामाग्निर्वाते व्यापक उच्यते ॥४८॥

हड्डी में स्थित अग्नि को 'धावक', मज्जा में स्थित अग्नि को 'बन्धक', शुक्र (वीर्य) में स्थित अग्नि को 'द्रावक' तथा वात में स्थित अग्नि को 'व्यापक' कहते हैं।

पित्ते पावकनामाग्निः कफे श्लेष्मक उच्यते ।
वह्नयो दोषदूष्येषु संलीना दशदेहिनः ॥४९॥

पित्त में स्थित अग्नि को 'पावक' तथा कफ में स्थित अग्नि को 'श्लेष्मक' कहते हैं। इस प्रकार तीन दोषों (वात, पित्त, कफ) तथा सात दूष्य (धातुओं) में ये दश अग्नियाँ लीन रहती हैं।

वातपित्तकफा दोषा दूष्याः स्युः सप्तधातवः ।
त्वगसृक्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः ॥५०॥

वात, पित्त और कफ इन्हें दोष कहा जाता है तथा त्वचा, रक्त, मांस, मेद, अस्थि, मज्जा और शुक्र ये सात धातुएँ हैं।

ध्वन्यात्मकानां वर्णानामुत्पत्तिक्रम उच्यते ।
आत्मा बुद्धया समेत्यार्थान् मनोयुङ्क्ते विवक्षया ॥५१॥
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ।
स मारुतः कुण्डलिन्या च वलुवसित क्रमात्[?] ॥५२॥

अग्रिम पंक्तियों में ध्वन्यात्मक वर्णों की उत्पत्ति का क्रम कहा जा रहा है। आत्मा बुद्धि की सहायता से अर्थों को एकत्र कर बोलने की इच्छा से मन को प्रेरित करता है। मन शरीराग्नि को और वह वायु को प्रेरित करता है तथा वह वायु कुण्डलिनी से होता हुआ उरः स्थल में प्राप्त होता है।

सोदीर्णोमूर्ध्न्यभिहतो वर्णान् जनयति ध्वनीन् ।
ध्वन्यात्मकाश्च ये वर्णा व्यञ्जकास्ते प्रकीर्तिताः ॥५३॥

उठा हुआ वह वायु मूर्धा में अभिहित होकर (टकराकर) वर्णध्वनियों को उत्पन्न करता है। जो वर्ण ध्वन्यात्मक हैं वे व्यञ्जक कहे जाते हैं।

तद्व्यङ्ग्या निर्विकाराश्च बोधका अचलाः स्मृता ।
ते ब्रह्मरूपा विज्ञेया सर्वोपाधिविवर्जिता ॥५४॥

उन वर्णों द्वारा व्यङ्ग्य निर्विकार अर्थबोधक अक्षर (अचल) माने जाते हैं। वे सभी उपाधियों से रहित ब्रह्मरूप हैं, ऐसा समझना चाहिए।

यथा व्यजनघातेन वायोः प्रत्यक्षता त्वचा ।
सर्वत्र व्याप्य वर्णानां व्यञ्जकात् स्फुटता तथा ॥५५॥

जिस प्रकार व्यजन (पंखा) के आघात से वायु का त्वचा द्वारा प्रत्यक्ष हो जाता है उसी प्रकार सर्वत्र व्यापक वर्णरूप शब्दब्रह्म की व्यञ्जक ध्वनियों से स्फुट प्रतीत होती है।

सुषुम्णारन्ध्रतो वर्णाः कण्ठादिकरणैः क्रमात् ।
आविर्भवन्ति ते नित्यं बैखरीसृष्टिमागताः ।।५६।।

ये वर्ण सुषुम्णा रन्ध्र से क्रमशः कण्ठ आदि करणों (साधनों) द्वारा प्रगट होते हैं। इस प्रकार वे बैखरी सृष्टि को प्राप्त होते हैं।

अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलञ्च दन्तश्च नासिकोष्ठौ च तालुकः ।।५७।।

वर्णों के उच्चारण के आठ निम्नलिखित स्थान हैं—१. उरस २. कण्ठ ३. शिर (मूर्धा) ४. जिह्वामूल ५. दन्त ६. नासिका ७. ओष्ठ ८. तालु ।

अकारादिविसर्गान्ता स्वराः षोडशशक्तयः ।
ककारादिक्षकारान्ता वर्णास्ते शिवरूपिणः ।।५८।।

वर्णों में 'अ' से लेकर 'विसर्ग' पर्यन्त सोलह स्वरों को शक्ति तथा 'क' से 'क्ष' पर्यन्त वर्णों को शिवरूप माना जाता है।

व्यञ्जनत्वात् सदानन्दा [अनन्ता ?] अत उच्चारणं नहि ।
उच्चरेत् स्वरसंयुक्तान् कादिवर्णान् शिवात्मकान् ।।५९।।

क्योंकि शिव स्वरूप 'क' आदि ध्वनियाँ व्यञ्जन अर्थात् शब्दब्रह्म की सदा व्यञ्जना कराने वाले तथा अनन्त हैं। अतः उनका उच्चारण सम्भव नहीं है, इसलिए इनका स्वर सहित अर्थात् शक्ति सहित ही उच्चारण करे।

अकारादिविसर्गान्ताः स्वराः षोडशसंख्यकाः ।
ककारादिमकारान्ताः स्पर्शा विंशतिपञ्चकाः ।।६०।।

'अ' से लेकर विसर्ग पर्यन्त सोलह वर्णों को स्वर कहा जाता है तथा 'क' से लेकर 'म' पर्यन्त पच्चीस वर्णों को स्पर्श वर्ण कहा जाता है।

यकारादिक्षकारान्ता व्यापका दशसंख्यकाः ।
एकपञ्चाशदर्णाश्च सोमसूर्याग्निदेवताः ।।६१।।

'य' से लेकर 'क्ष' पर्यंन्त शेष दश वर्ण व्यापक वर्ण हैं। उपर्युक्त इक्यावन वर्णों के सोम, सूर्य आदि देवता हैं।

भ्रूमध्यस्थितचक्रस्य पत्र[पद्म ?]द्वयमुदाहृतम् ।
हक्षाद्यममृतस्रावि लात्मिका कर्णिका यतः ॥६२॥

भ्रू मध्य में स्थित चक्र के दो पत्र (पद्म ?) कहे जाते हैं । जिनके आरम्भ में 'ह' तथा 'क्ष' वर्ण स्थित हैं । ये पत्रद्वय अमृतस्रावी अर्थात् अमृत का स्राव करने वाले हैं । इनकी कर्णिका 'ल' रूप है ।

अतोऽन्तर्मातृकादौ तु ज्ञेयाः पञ्चाशदक्षराः ।
वर्णन्यासाक्षमालादावेकपञ्चाशदक्षराः ॥६३॥

अतएव अन्तर्मात्रिका इत्यादि में पचास अक्षर है, ऐसा समझना चाहिए किन्तु वर्णन्यास तथा अक्षमाला आदि में इक्यावन अक्षर माने जाते हैं ।

अथ वक्ष्ये च भूतानां शुद्धिज्ञानाप्तये नृणाम् ।
भूतशुद्धिप्रकारास्तु बहवः शिवभाषिताः ॥६४॥

अब अग्रिम पंक्तियों में भूतों की शुद्धि (भूतशुद्धि) और मनुष्यों को ज्ञान प्राप्ति के लिए भूतशुद्धि के शिव द्वारा बताए गये बहुत से प्रकार कहे जाएँगे ।

तेषां मध्ये शिवोक्तं वै प्रकारद्वयमुच्यते ।
ब्रह्मणः प्रकृतिर्भाव्यां ततोऽन्तःकरणात्मकम् ॥६५॥
महत्तत्त्वं ततो जातोऽहङ्कारस्त्रिविधः क्रमात् ।
सात्त्विकादप्यहङ्काराद्देवा वैकारिका दश ॥६६॥

शिव भाषित भूतशुद्धि के अनेक उपायों में से दो प्रकार नीचे बताए जा रहे हैं । सबके मूल में ब्रह्म की भाव्य प्रकृति है, उससे अन्तःकरण रूप महत्तत्त्व उत्पन्न होता है । महत् तत्त्व से तीन प्रकार का (सात्त्विक, राजस और तामस) अहंकार उत्पन्न होता है तथा सात्त्विक अहंकार से निम्नलिखित दश वैकारिक देव उत्पन्न होते हैं ।

दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः ।
तैजसादिन्द्रियाण्यासन् तन्मात्राक्रमयोगतः ॥६७॥

१. दिशा २. वायु ३. अर्क (सूर्य) ४. प्रचेतस् (वरुण या जल) ५-६. दो अश्वि ७. अग्नि ८. इन्द्र ९. उपेन्द्र १०. मित्र । इसी प्रकार तैजस (राजस) अहंकार से तन्मात्राओं के क्रम सम्बन्ध से इन्द्रियाँ उत्पन्न होती हैं ।

तामसादप्यहङ्कारात् पञ्चभूतानि जज्ञिरे ।
वायुराकाशतो जातो वायोरग्निस्ततो जलम् ॥६८॥
अद्भ्यः पृथ्वीति सञ्जातेत्येवं सञ्चिन्त्य साधकः ।
विलाप्य पृथिवीमप्स्व[पश्चा ?]ग्नौ मारुतेऽनलम् ॥६९॥
आकाशे मारुतं विद्यादहङ्कारेऽन्तरीक्षकम् ।
अहङ्कारं महत्तत्त्वे प्रकृतौ तद्विलापयेत् ॥७०॥

इसी प्रकार तामस अहंकार से निम्नलिखित पाँच भूत उत्पन्न होते हैं— आकाश से वायु, वायु से अग्नि, अग्नि से जल, जल से पृथ्वी उत्पन्न होती है। इस प्रकार समझकर साधक पृथ्वी को जल में, जल को अग्नि में, अग्नि को वायु में, वायु को आकाश में, अन्तरिक्ष अर्थात् आकाश को अहंकार में, अहंकार को महत् तत्त्व में और महत् तत्त्व को पृथ्वी में विलीन करे।

प्रकृतिं ब्रह्मणि तथा वै[वि ?]लाप्यैवं विचिन्तयेत् ।
अथ चान्यप्रकारेण भूतशुद्धिर्निगद्यते ॥७१॥

इसी प्रकार प्रकृति का ब्रह्म में विलय करके उसका चिन्तन करे। अग्रिम पंक्तियों में एक अन्य प्रकार से भी भूतशुद्धि का कथन किया जा रहा है।

सुषुम्णारन्ध्रमार्गेण कूर्च्चबीजेन यत्नतः ।
कुण्डलीं मूलचक्रस्थामुत्थाप्य साधकोत्तमः ॥७२॥
चक्राणि क्रमशो भित्त्वा स्वान्तमानीय चित्कलाम् ।
जीवात्मानं कुण्डलिन्या हंसमन्त्रेण देशिकः ॥७३॥
मस्तकस्थसहस्रारपद्मे ब्रह्मणि योजयेत् ।
ऐक्यन्तु भावयेत्तत्र जीवात्म-परमात्मनोः ॥७४॥

उत्तम साधक मूलचक्र में स्थित कुण्डली को सुषुम्णारन्ध्र के मार्ग से कूर्च बीज के द्वारा जागृत (उठाकर) करके चक्रों का (समस्त चक्रों का) क्रमशः भेदन करके हृदय तक लाकर चेतन कला स्वरूप जीवात्मा को कुण्डलिनी के साथ 'हंस' मन्त्र के द्वारा मस्तक में विद्यमान सहस्रार पद्म में स्थित ब्रह्म में संयुक्त करे और वहाँ जीवात्मा एवं परमात्मा की एकता की भावना करे।

प्रादुर्भूतं शरीरन्तु ब्रह्मणो भावयेत्सुधीः ।
ततः संस्थाप्य हृज्जीवं मूलाधारे तु कुण्डलीम् ॥

उस समय बुद्धिमान साधक यह भावना करे कि ब्रह्म के शरीर का प्रादुर्भाव

हो गया है, उसके अनन्तर पुनः जीव को हृदय में और कुण्डली को मूलाधारचक्र में स्थित करे।

एवं क्रमेण यो मर्त्यः करोति नियतात्मवान्।
गतागतं कुण्डलिन्या 'जीवन्मुक्तः' स उच्यते ॥७६॥

इस प्रकार जो नियतात्मा मनुष्य क्रमशः कुण्डलिनी का गमन-आगमन अर्थात् पूर्वोक्त मार्ग से सहस्रार पद्म में स्थित ब्रह्म तक गमन और पुनः मूलाधार-चक्र में वापस अवस्थिति को करता है, वह जीवन्मुक्त कहा जाता है।

अथ चक्रोपरि ध्यायेत् षट्पञ्चाशद्दलम्परम्।
अष्टाविंशतितत्त्वानां शिवशक्तिप्रभेदतः ॥७७॥

उसके अनन्तर पूर्वोक्त चक्र के ऊपर छप्पन दलों वाले अन्य चक्र का ध्यान करे। इन छप्पन दलों में अट्ठाइस तत्त्वों का शिव और शक्ति भेद से द्विगुणन करके भावना करे।

पार्थिवानां द्विगुणितः प्रतिपत्रं विभावयेत्।
शब्दस्पर्शौ रूपरसौ गन्धस्तन्मातृ[त्रि ?]का इमे ॥७८॥

उपर्युक्त अट्ठाइस तत्त्वों में प्रति पत्र द्विगुणित पार्थिव आदि तत्त्व अर्थात् शब्द, स्पर्श, रूप, रस, और गन्ध तथा इनकी तन्मातृका अर्थात् शब्दतन्मात्रा, स्पर्शतन्मात्रा, रूपतन्मात्रा, रसतन्मात्रा, और गन्धतन्मात्रा ये दश तत्त्व भूत हैं।

भूतानि धीन्द्रियाणीति पञ्चकर्मेन्द्रियाणि तु।
मनोबुद्धिरहङ्कारश्चित्तञ्चेति चतुर्विधम् ॥७९॥

तथा पाँच ज्ञानेन्द्रियाँ, पाँच कर्मेन्द्रियाँ, मन-बुद्धि और अहंकार रूप चार अन्तःकरण हैं।

अन्तःकरणमेतद्वै कालः प्रकृतिपूरुषौ।
महत्तत्त्वमिति ज्ञेयमष्टाविंशतिसंख्यकम् ॥८०॥

ये उपर्युक्त अन्तःकरण काल, प्रकृति-पुरुष और महत्तत्व आदि अट्ठाइस संख्या में तत्त्व हैं।

उड्डीश्वरादयो ध्येयाः प्रतिपत्रं क्रमाच्छिवाः ।
उड्डीश्वरोड्डीश्वर्यौ जलेश्वरजलेश्वरी ॥८१॥
पूर्णेश्वरः पञ्चमः स्यात् षष्ठी पूर्णेश्वरी मताः ।
कामेश्वरः सप्तमः स्यात् तथा कामेश्वरी मता ॥८२॥
श्रीकण्ठो गगना चैवानन्तश्च सुरसातथा ।
शङ्करश्च मतिश्चैव तथा पिङ्गल ईरितः ॥८३॥
ईश्वर्यन्ता हि पातालदेवीति परिकीर्त्तिता ।
नादाख्यनादे चानन्दा डाकिनी परिकीर्त्तिता ॥८४॥
आलस्यो राकिनी प्रोक्ता महानन्दश्च लाकिनी ।
योग्यश्च काकिनी शक्तिः रतीतः शाकिनी स्मृता ॥८५॥
पारदो हाकिनी रक्ता आधारेशस्तथा स्मृतः ।
चक्रीशश्चैव चण्डी च कुरङ्गीशः करालिका ॥८६॥
महध्रीशो महोच्छ्वासा अनादिविमलस्तथा ।
मातङ्गि सर्वज्ञ विमला पुमिहा च तथा स्मृता ॥८७॥
योगविमदः शाम्भवी विद्धविमल ईरितः ।
वाचा परा च समयविमलश्च कुलालिका ॥८८॥
मित्रेश कुब्जो उड्डीशो मज्जा षष्ठीश ईरितः ।
कुलेश्वरी च कुब्जाचर्याविशस्तथा स्मृतः ॥८९॥

उपर्युक्त छप्पन दलों वाले चक्र में प्रति पत्र उड्डीश्वर आदि शिव और शक्तियों का ध्यान करना चाहिए। ये शिव शक्तियाँ निम्नलिखित हैं—१. उड्डीश्वर २. उड्डीश्वरी ३. जलेश्वर ४. जलेश्वरी ५. पूर्णेश्वर ६. पूर्णेश्वरी ७. कामेश्वर ८. कामेश्वरी ९. श्रीकण्ठ १०. गगना ११. अनन्त १२. सुरसा १३. शंकर १४ मति १५. पिङ्गल १६. ईश्वरपर्यन्त १७. पातालदेवी १८. नादनिवासी १९. नाद २०. आनन्दा-डाकिनी २१. आलस्य २२. राकिनी २३. महानन्द २४. लाकिनी २५. योग्य २६. काकिनी शक्ति २७. अतीत २८. शाकिनी २९. पारद ३०. हाकिनी ३१. आधारेश ३२. रक्ता ३३. चक्रीश ३४. चण्डी ३५. कुरङ्गीश ३६. करालिका ३७. महध्रीश ३८. महोच्छ्वासा ३९. अनादि विमल ४०. मातङ्गी ४१. सर्वज्ञ ४२. विमला ४३. पुं ४४. इहा ४५. योगविमद ४६. शाम्भवी ४७. विद्धविमल ४८. वाचापरा ४९. समयविमल ५०. कुलालिका ५१. मित्रेश ५२. कुब्जा ५३. उड्डीश ५४. मज्जा ५५. षष्टीश ५६. कुलेश्वरी तथा कुब्जाचार्यवेश माने गये हैं।

तेजोरूपाश्च ते[ता ?] ज्ञेया सर्वाः पार्थिवरश्मयः ।
षट्पञ्चाशद्दलस्थाश्च ध्येयास्ता शिवशक्तयः ॥६०॥

ये सभी तेजोरूप पार्थिव रश्मियाँ शिवशक्तियाँ हैं जो छप्पन दलचक्र के दलों पर स्थित हैं, इनका ध्यान करना चाहिए।

एवं क्रमेण जानाति मूलचक्रं मनोहरम् ।[1]
स एव योगी ब्रह्मज्ञो मोक्षभागी न संशयः ॥६१॥

जो व्यक्ति इस क्रम के साथ मनोहर मूलचक्र को जानता है वही योगी है, ब्रह्मज्ञ है और मोक्ष का भागी है, इसमें कोई सन्देह नहीं है।

इतिमैथिलश्रोत्रियश्रीबदरीनाथविरचितायां चक्रकौमुद्यां मूलाधारचक्रविवृतिर्नाम प्रथमः परिच्छेदः ॥१॥

मैथिल श्रोत्रिय श्री बदरीनाथ विरचित चक्रकौमुदी में मूलाधारचक्रविवृति नामक प्रथम परिच्छेद पूर्ण हुआ।

---

तुलनीयः—१. ध्यात्वैतन्मूलचक्रान्तरविवरलसत्कोटिसूर्यप्रकाशां
वाचामीशो नरेन्द्रः स भवति सहसा सर्वविद्याविनोदी ।
आरोग्यं तस्य नित्यं निरवधि च महानन्दचित्तान्तरात्मा
वाक्यैः काव्यप्रबन्धैः सकलसुरगुरून् सेवते शुद्धशीलः ॥
[श्रीतत्त्वचिन्तामणिः, षष्ठाध्यायः, आधारचक्रम्, श्लोक १४]

## [ द्वितीयः परिच्छेदः ]

### स्वाधिष्ठानचक्रम्

स्वाधिष्ठानमथो वक्ष्ये चक्रं ज्ञानप्रदं नृणाम् ।
यस्य स्मरणमात्रेण भेदज्ञानं विनश्यति ॥१॥

इसके अनन्तर स्वाधिष्ठान चक्र का वर्णन करूँगा जो मनुष्यों के लिये ज्ञानप्रद है तथा जिसके स्मरण मात्र से भेद बुद्धि नष्ट होती है।

लिङ्गमूले स्मरेत्पद्मं सिन्दूराभन्तु षड्दलम् ।
बादिलान्तयुतन्तस्मिन् मण्डलं ध्येयमम्भसः ॥२॥[1]

लिङ्गमूल में सिन्दूर की कान्ति वाले षट्दल कमल का स्मरण करे और उसमें बादिलान्त (ब, भ, म, य, र, ल) से युक्त अम्भोमण्डल का ध्यान करे।

अर्द्धचन्द्राकृतिं स्वच्छं पद्मयुग्मेन लाञ्छितम् ।
तस्मिन् चतुर्भुजं स्वच्छं वंबीजं वारुणं स्मरेत् ॥३॥[2]

जो कि अर्द्धचन्द्राकृति से स्वच्छ दो कमलों से युक्त है, उसमें स्वच्छ वारुण बीज 'व' का स्मरण करे।

---

तुलनीयः—१. सिन्दूरपूररुचिरारुणपद्ममन्यत्
सौषुम्ण मध्यघटितं ध्वजमूलदेशे ।
अङ्गच्छदैः परिवृतं तडिदाभवर्णै-
र्वाद्यैः सबिन्दुलसितैश्च पुरन्दरान्तैः ॥
[श्रीतत्त्वचिन्तामणिः, षष्ठाध्यायः, स्वाधिष्ठानचक्रम्, श्लोक १५]

२. तस्यान्तरे प्रविलसद्विशदप्रकाश-
मम्भोजमण्डलमथो वरुणस्य तस्य ।
अर्द्धेन्दुरूपलसितं शरदिन्दुशुभ्रं
वंकारबीजममलं मकराधिरूढं ॥
[श्रीतत्त्वचिन्तामणिः, षष्ठाध्यायः, स्वाधिष्ठानचक्रम्, श्लोक १६]

मकरारूढमुद्दीप्तं ततो विष्णुं चतुर्भुजम् ।
गदाब्जशङ्खखड्गञ्च धारयन्तं विभुं स्मरेत् ॥४॥[1]

उसके अनन्तर मकर पर आरूढ़ उद्दीप्त अर्थात् तेजः स्वरूप चार भुजाओं वाले गदा, कमल, शङ्ख तथा खड्ग को धारण किए हुए विभु भगवान (हरि) का स्मरण करे।

राकिनीं सव्यदेशे तु नीलाभां वेदबाहुकाम् ।
स्मरार्द्रचित्ताललितां दिव्यां योगप्रदर्शनीम् ॥५॥[2]

उनके बायीं ओर नील कान्ति वाली बाहु में वेद लिए हुए कामार्द्र चित्त दिव्य और योग प्रदर्शन करने वाली राकिनी को (स्मरण) करे।

तस्योपरि द्विपञ्चाशद्दलं शोभितपङ्कजम् ।
षड्विंशत्याप[पि ?]तत्त्वानि शिवशक्तिप्रभेदतः ॥६॥
द्विगुणं कल्पयित्वा तु प्रतिपत्रं स्मरेद्बुधः ।
द्विपञ्चाशन्मिते पत्रे शिवशक्तिवि[क्ति वि ?]भावयेत् ॥७॥

उसके ऊपर बावन दलों से सुशोभित पङ्कज को स्मरण करे, उस पर प्रति पत्र शिव और शक्ति के भेद से द्विगुण की कल्पना करे। छब्बीस आदिम तत्त्वों को स्मरण करे, इस प्रकार बावन पत्रों पर उतने ही संख्या में शिव और शक्ति की विभावना करे।

---

तुलनीयः —१. तस्याङ्कदेशकलितो हरिरेव पायात्
नीलप्रकाशरुचिरश्रियमादधानः ।
पीताम्बरः प्रथमयौवनगर्वधारी–
श्रीवत्सकौस्तुभधरो धृतवेदबाहुः ॥
[श्रीतत्त्वचिन्तामणिः, षष्ठाध्यायः स्वाधिष्ठानचक्रम्, श्लोक १७]

२. अत्रैव भाति सततं खलु राकिणी सा
नीलाम्बुजोदरसहोदरकान्तिशोभा ।
नानायुधोद्यतकरैर्लसिताङ्गलक्ष्मी–
दिव्याम्बराभरणभूषितमत्तचित्ता ॥
[श्रीतत्त्वचिन्तामणिः, षष्ठाध्यायः, स्वाधिष्ठानचक्रम्, श्लोक १८]

# स्वाधिष्ठानचक्रम्
## ( HYPOGASTRIC PLEXUS )
### षट्दलपद्म




चित्रसंख्या : २

आद्यतत्त्वानि कथ्यन्ते क्षित्यप्तेजोमरुन्नभः ।
पञ्चज्ञानेन्द्रियाणीति पञ्चकर्मेन्द्रियाणि च ॥८॥

आद्यतत्त्व निम्नलिखित हैं—पृथ्वी, जल, अग्नि, वायु, आकाश, पाँच ज्ञानेन्द्रियाँ (श्रोत्र, त्वचा, नासिका, चक्षु और रसना) तथा पाँच कर्मेन्द्रियाँ (वाणी, हाथ, पैर, पायु = मलमार्ग, उपस्थ = मूत्रमार्ग) आदि हैं।

तेषामर्था मनश्चेति षड्विंशतिरुदाहृताः ।
ज्ञानेन्द्रियाणि श्रोत्रं त्वग् दृग् जिह्वा नासिका विदुः ॥९॥

उन दशों इन्द्रियों के दश विषय और मन, इस प्रकार छब्बीस आदि तत्त्व कहे गये हैं तथा पाँच ज्ञानेन्द्रियाँ निम्नलिखित हैं—श्रोत्र, त्वचा, नेत्र, जिह्वा तथा नासिका।

ज्ञानेन्द्रियार्थाः शब्दाद्याः स्मृताः कर्मेन्द्रियाणि तु ।
वाक्पाणिपादपायुन्धू [?] संज्ञामाहुर्मनीषिणः ॥१०॥

ज्ञानेन्द्रियों के पाँच विषय शब्द इत्यादि अर्थात् शब्द, स्पर्श, रूप, रस और गन्ध कहे गये हैं। पाँच कर्मेन्द्रियाँ-वाणी, पाणि (हाथ) पैर, पायु और न्धू (उपस्थ) हैं।

वचनादानगतयो विसर्गानन्दसंज्ञकाः ।
कर्मेन्द्रियार्थाः सम्प्रोक्ता अर्थग्राह्या दिगादयः ॥११॥

इनके विषय क्रमशः बोलना, देना, चलना, विसर्जन करना और आनन्द करना है या कहे गये हैं। यहाँ अर्थ का तात्पर्य ग्रहण और दिशा अर्थात् अनुभव है।

इन्द्रियाणां प्रवृत्तौ तु विषये कारणम्मनः ।
अतो मनोयुतास्तत्स्था गृह्णन्ति विषयान्मुहुः ॥१२॥

इन्द्रियों की विषयों के प्रवृत्ति में कारण मन हुआ करता है इसलिये मन से युक्त इन्द्रियाँ ही संबद्ध विषयों को बारंबार ग्रहण करती है।

त्वगादिकरणैस्तेषां ज्ञानं स्यादात्मनि स्फुटम् ।
घटाकारा हि धीर्वृत्ति घटज्ञानं तदेव तु ॥१३॥

त्वचा आदि रूप करणों से आत्मा में उन विषयों का स्फुट ज्ञान होता है, विषयों का यह ज्ञान घट आदि के आकार में बुद्धि का व्यापार है।

सच्चिदानन्दरूपो यद् ज्ञानं तद्ब्रह्म रूपकम् ।
द्वैतज्ञानेन तज्ज्ञानं तज्ज्ञाने तन्निवर्त्तते ॥१४॥

सत्, चित्, आनन्द स्वरूप जो ज्ञान है, वह ब्रह्म रूप है। यह ज्ञान द्वैत ज्ञान पूर्वक होता है किन्तु ब्रह्म के ज्ञान हो जाने पर द्वैत बुद्धि दूर हो जाती है।

शिवशक्तिरथो वक्ष्ये सद्योजातादिकाः क्रमात् ।
सद्योजातश्च माया च वामदेवश्च श्रीस्तथा ॥१५॥
अघोरपद्मे तत्पुरुषोऽम्बिका निवृत्त्यनन्तकौ ।
अनाथश्च प्रतिष्ठा च विद्या जनाश्रितस्तथा ॥१६॥
अचित्यश्च तथा शान्ता उमा च शशिशेखरः ।
तीव्रो गङ्गा समाख्याता वणिवाहः सरस्वती ॥१७॥
अम्बुवाहश्च कमला तेजोधीशश्च पार्वती ।
विद्यावाणीश्वरश्छिन्ना कमला चतुर्विधेश्वरौ ॥१८॥
उमा गङ्गेश्वरः प्रोक्तो मन्मथा च प्रकीर्त्तिता ।
कृष्णेश्वरश्च श्रीपा च श्रीकण्ठश्च कलास्मृता ॥१९॥
आनन्दश्च सती प्रोक्ता शङ्करो रत्नमेखला ।
यशोवती पिङ्गलश्च हंसा साध्याख्य ईरितः ॥२०॥
परा दिव्यौघवार्मी च सारदिव्यौघ ईरितः ।
ज्येष्ठा पाठौघ रौद्र्यौ च सर्वेश्वर उदाहृतः ॥२१॥

उसके अनन्तर सद्योजात (तुरत उत्पन्न) आदि शिव शक्तियों का क्रमशः कथन करूँगा जो १. सद्योजात २. माया ३. वामदेव ४. श्री ५. अघोर ६. पद्म ७. तत्पुरुष ८. अम्बिका ९. निवृत्ति १०. अनन्तक ११. अनाथ १२. प्रतिष्ठा १३. विद्या १४. जनाश्रित १५. अचित्य १६. शान्ता १७. उमा १८. शशिशेखर १९. तीव्र २०. गंगा २१. वणिवाह २२. सरस्वती २३. अम्बुवाह २४. कमला २५. तेजोधीश २६. पार्वती २७. विद्या वाणीश्वर २८. छिन्ना २९. कमला ३०. चतुर्विधेश्वर ३१. उमा ३२. गंगेश्वर ३३. मन्मथा ३४. कृष्णेश्वर ३५. सृपा ३६. श्रीकण्ठ ३७. कला ३८. आनन्द ३९. सती ४०. शंकर ४१. रत्नमेखला ४२. यशोमती ४३. पिङ्गल ४४. हंसा ४५. साध्य ४६. परादिव्यौद्य ४७. वारुणी ४८. सारदिव्यौघ ४९. ज्येष्ठा ५०. पाठौघ ५१. रौद्री ५२. सर्वेश्वर इत्यादि हैं।

सर्वमयीति संज्ञेया आप्यरश्मय ईरिताः ।
द्विपञ्चाशद्दलस्थाश्च ध्येयास्तत्संख्यकाः शिवाः ॥२२॥

उपर्युक्त संख्यावाली सर्वमयी जल की रश्मियाँ कही जाती हैं जो कि बावन दलों पर स्थित हैं। इन बावन संख्या वाली शिवाओं (शिवशक्तियों) का ध्यान करना चाहिए।

ध्यातास्ता दर्शयन्तीहाभ्यासिनां ज्ञानमुत्तमम् ।
प्रज्ञानं ब्रह्म यत्प्रोक्तं तन्मयास्ते महीतले ॥२३॥

ध्यान की हुई ये शिव शक्तियाँ साधक जनों को उत्तम ज्ञान का दर्शन कराती हैं जिसे प्रज्ञान ब्रह्म कहा गया है। ये शिव शक्तियाँ पृथ्वी पर तद्‌रूप ही हैं।

स्वाधिष्ठानमिदं चक्रं क्रमेणानेन यो नरः ।[1]
जानाति लोके धन्यः स्यात् जीवन्मुक्तो भवेन्नरः ॥२४॥

जो मनुष्य इस स्वाधिष्ठानचक्र को इस क्रम से जानता है, वह संसार में धन्य है और वह मनुष्य जीवनमुक्त हो जाता है।

इति मैथिलश्रोत्रियश्रीबदरीनाथविरचितायां चक्रकौमुद्यां स्वाधिष्ठानचक्रविवृतिर्नाम द्वितीयः परिच्छेदः ॥२॥

मैथिलश्रोत्रियश्रीबदरीनाथ विरचित चक्रकौमुदी में स्वाधिष्ठान चक्र-विवृति नामक द्वितीय परिच्छेद समाप्त हुआ।

—:०:—

---

तुलनीयः—१. स्वाधिष्ठानाख्यमेतत् सरसिजममलं चिन्तयेद् यो मनुष्य-
तस्याहंकारदोषादिकसकलरिपुः क्षीयते तत्क्षणेन ॥
[श्रीतत्त्वचिन्तामणिः, षष्ठाध्यायः, स्वाधिष्ठानचक्रम्, श्लोक १९]

## [ तृतीयः परिच्छेदः ]

### मणिपूरचक्रम्

मणिपूरसुचक्रन्तु वक्ष्ये सर्वार्थसिद्धिदम् ।
यच्चिन्तनाच्चिदानन्दप्राप्तिर्भवति निश्चितम् ॥१॥

मणिपूरचक्र के सम्बन्ध में मैं वर्णन प्रस्तुत करूँगा जो सम्पूर्ण सिद्धियाँ प्रदान करने वाला है तथा जिसके चिन्तन से चिदानन्द स्वरूप (हरि) की प्राप्ति निश्चित ही होती है ।

नाभिमूले नीलपद्मं दशच्छदसमन्वितम् ।
डादिफान्तयुतं तस्मिन् वह्निमण्डलमीरितम् ॥२॥[1]

नाभिमूल में दश पत्रों से युक्त नील कमल है जो 'ड' मन्त्र से 'फ' मन्त्र (ड, ढ, ण, त, थ, द, ध, न, प, फ) पर्यन्त मन्त्रों से युक्त है । उसमें वह्निमण्डल है ऐसा कहा जाता है ।

नवीनभानुसदृशं त्रिकोणं स्वस्तिकान्वितम् ।
तस्मिन् ऋतुभुजं बीजं रं वह्ने रजवाहनम् ॥३॥

जो नवीन सूर्यमण्डल के सदृश है, त्रिकोण और स्वस्तिक से युक्त है उसमें छः भुजाओं वाला वह्नि के रज का वहन करने वाला 'रं' बीज है ।

---

तुलनीयः—१. तस्योर्ध्वे नाभिमूले दशदललसिते पूर्णमेघप्रकाशे
नीलाम्भोजप्रकाशैरुपहितजठरे डादिफान्तैः सचन्द्रैः ।
ध्यायेद्वैश्वानरस्यारुणमिहिरसमं मण्डलं तत् कोणं
तद्वाह्ये स्वस्तिकाख्यैस्त्रिभिरभिलसितं तत्र वह्नेः स्वबीजम् ॥
[श्रीतत्त्वचिन्तामणिः, षष्ठाध्यायः, मणिपूरचक्रम्, श्लोक २०]

## मणिपूरचक्रम्
## ( EPIGASTRIC PLEXUS )
### दशदलपद्म




चित्रसंख्या : ४

तत्र रुद्रं त्रिनेत्रन्तु वराभीतिलसत्करम् ।[1]
भानुकान्ति ततः शक्तिं लाकिनीं वेदबाहुकाम् ॥४॥

उसमें त्रिनेत्र रुद्र स्थित हैं जिनके दोनों बाहु वरदान तथा अभयदान के मुद्रा में है। साथ ही उस पद्म पर सूर्य की तरह कान्तिवाली लाकिनी वेदबाहुका शक्ति भी स्थित है।

वराभीतिं पद्मखड्गौ दधानौ श्यामलात्मिकाम् ।
द्विषष्टिपत्रसहितं पद्मं तस्योपरि स्मरेत् ॥५॥

जिसके चारो भुजाओं में से दो वरदान तथा अभयदान की मुद्रा में तथा दो कमल तथा खड्ग धारण किये हुए हैं। जिनका स्वरूप श्यामल है। उस पद्म से ऊपर बासठ पत्रों से युक्त पद्म का स्मरण करे।

एकत्रिंशत्संख्यकानि वह्नितत्त्वानि साधकः ।
शिवशक्तिप्रभेदेन द्विगुणानि प्रकल्पयेत् ॥६॥

उस पत्रों में साधक ३१ वह्नितत्त्वों की तथा उसमें शिवशक्ति के भेद से दुगुने की अर्थात् बासठ तत्त्वों की कल्पना करे।

द्विषष्टिदलमध्येषु तानि तत्त्वानि भावयेत् ।
द्विषष्टिसंख्यका ध्येयाः पत्रस्थाः शिवशक्तयः ॥७॥

उन बासठ पत्रों के मध्य उन तत्त्वों की भावना करे तथा बासठ संख्याओं वाली पद्मपत्रों पर स्थित बासठ शिवशक्तियों का ध्यान करे।

---

तुलनीयः—१. ध्यायेन्मेषाधिरूढं नवतपननिभं वेदबाहूज्वलाङ्गं
तत्क्रोडे रुद्रमूर्तिर्निवसति सततं शुद्धसिन्दूररागः ।
भस्मालिप्ताङ्गभूषाभरणसितवपुर्वृद्धरूपी त्रिनेत्रो
लोकानामिष्टदाताऽभयलसितकरः सृष्टिसंहारकारी ॥
अत्रास्ते लाकिनी सा सकलशुभकरी वेदबाहूज्वलाङ्गी
श्यामापीताम्बराद्यैर्विविधविरचनालंकृता मत्तचित्ता ।
ध्यात्वैतन्नाभिपद्मं प्रभवति नितरां संहृतौ पालने वा
वाणी तस्याननाब्जे निवसति सततं ज्ञानसन्दोहलक्ष्मीः ॥
[श्रीतत्त्वचिन्तामणिः, षष्ठाध्यायः, मणिपूरचक्रम्, श्लोक २१-२२]

पञ्चभूतानि तन्मात्राः पञ्चकर्मेन्द्रियाणि तु।
ज्ञानेन्द्रियाणि पञ्चैव तेषामर्था दश स्मृताः ॥८॥
मन इत्यग्नितत्त्वानि कथ्यते शिवशक्तयः।
परावरेशः परमः तत्परो पर एव च ॥९॥
चिदानन्दोऽप्यघोरश्च स्वच्छ-सामरसौ तथा।
भूतेश्वरश्च आनन्द आलस्यश्च तथा स्मृतः ॥१०॥
योगानन्दप्रभानन्दौ तथातीतः प्रकीर्त्तितः।
योगेश्वररसस्नादौ पाठेश्वरस्तथा स्मृतः ॥११॥
कुलकेश्वरः कुलेश्वरः श्रीकण्ठः शङ्करस्तथा।
अनन्तः पिङ्गलश्चैव सदाख्यश्च करालकः ॥१२॥
सिद्धगुरू रत्नगुरुः शान्तः शिवगुरुस्तथा।
सेनगुरुस्समयगुरुराग्नेयो रामयः स्मृताः ॥१३॥

पाँच महाभूत, पाँच तन्मात्राएँ, पाँच कर्मेन्द्रियाँ, पाँच ज्ञानेन्द्रियाँ तथा उनके दश विषय एवं मन ये अग्नि तत्त्व हैं और शिव एवं शक्ति के रूप में स्मरण किये जाते हैं। १. परावेश २. परम ३. तत्पर ४. पर ५. चिदानन्द ६. अघोर ७. स्वच्छ ८. सामरस ९. भूतेश्वर १०. आनन्द ११. आलस्य १२. योगानन्द १३. प्रभानन्द १४. अतीत १५. योगेश्वर १६. रसस्नाद १७. पाठेश्वर १८. कुल-केश्वर १९. कुलेश्वर २०. श्रीकण्ठ २१. शंकर २२. अनन्त २३. पिङ्गल २४. सदाख्य २५. करालक २६. सिद्धगुरु २७. रत्नगुरु २८. शान्त २९. शिवगुरु ३०. सेनगुरु ३१. समयगुरु ये आग्नेय **रामय** [?] कहे गये हैं।

चण्डेश्वरी चक्षुष्मती गुह्यकाली तथा स्मृता।
सम्वर्त्ता मूलकुब्जा च गङ्गा च ललिता स्मया ॥१४॥
स्पर्शा शब्दा डाकिनी रत्नडाकिन्यपि स्मृता।
चक्रडाकिनी पद्मडाकिनी कुब्जडाकिन्यपि स्मृता ॥१५॥

१. चण्डेश्वरी २. चक्षुष्मती ३. गुह्यकाली ४. सम्वर्त्ता ५. मूलकुब्जा ६. गङ्गा ७. ललिता ८. स्पर्शा ९. शब्दा १०. डाकिनी ११. रत्नडाकिनी १२. चक्रडाकिनी १३. पद्मडाकिनी १४. कुब्जडाकिनी १५. प्रचण्डडाकिनी

प्रचण्डडाकिनी चण्डकौशला पाविनी तथा ।
समया च तथा कामा रेवती ज्वाल इत्यपि ॥१६॥
करणा कुलिका रात्रिर्गुरुपारा तथा स्मृता ।
शान्त्यतीता च शान्ता च प्रतिष्ठा च क्रिया तथा ॥१७॥
निवृत्तिरिति सम्प्रोक्ताः शक्तयो वह्निरश्मयः ।
योगमार्गप्रदर्शिन्यो धा[ध्या ?]तव्या योगवर्त्मना ॥१८॥

१६. चण्ड कौशला १७. पाविनी (मालिनी ?) १८. समया १९. कामा २०. रेवती २१. ज्वाल २२. कर्णा २३. कुलिका २४. रात्रि २५. गुरुपारा २६. शान्ति २७. अतीता २८. शान्ता २९. प्रतिष्ठा ३०. क्रिया ३१. निवृत्ति ये वह्नि की रश्मियाँ, शक्तियाँ कही गयी है। ये योग मार्ग का प्रदर्शन करती हैं तथा योग मार्ग मे इसका ध्यान करना चाहिए।

चक्रन्तु मणिपूराख्यं यो जानाति विधानतः ।
स एव मुक्तः सर्वज्ञो हरिसायुज्यमाप्नुयात् ॥१९॥

उपर्युक्त मणिपूर नामक चक्र को जो विधिपूर्वक जानता है वही व्यक्ति सर्वज्ञ और मुक्त होता हुआ हरि के सायुज्य को प्राप्त करता है।

इति मैथिलश्रोत्रियश्रीबदरीनाथविरचितायां चक्रकौमुद्यां मणिपूरचक्रविवृतिर्नाम तृतीयः परिच्छेदः ॥३॥

मैथिल श्रोत्रिय श्रीबदरीनाथ रचित चक्रकौमुदी में मणिपूरचक्रविवृतिनामक तीसरा परिच्छेद समाप्त हुआ।

—:०:—

# चतुर्थः परिच्छेदः

## अनाहतचक्रम्

अनाहतचक्रन्तु वक्ष्ये जीवनसंयुतम् ।[1]
भावना यस्य विमलं ज्ञानं यच्छति देहिनाम् ॥१॥

इस परिच्छेद में मैं जीवन सहित अनाहतचक्र का वर्णन करूँगा जिसकी भावना मनुष्यों को निर्मल ज्ञान प्रदान करती है।

हृत्पद्मं भानुदलं कादिठान्तार्णसंयुतम् ।
बालार्कसदृशं तस्मिन् वायोः षट्कोणमण्डलम् ॥२॥

हृदय स्थल पर बारह दलों का कमल है जो 'क' से 'ठ' पर्यन्त (क, ख, ग, घ, ङ, च, छ, ज, झ, ञ, ट, ठ) वर्णों से युक्त है, इसका वर्ण बाल सूर्य (उदय होते हुए सूर्य) के सदृश है उसमें षट्कोण वायुमण्डल है।

---

तुलनीयः—१. तस्योर्ध्वे हृदि पङ्कजं सुललितं बन्धूककान्तिज्वलं
काद्यैर्द्वादशवर्णकैरुपहितं सिन्दूररागान्वितैः ।
नाम्नाऽनाहत संज्ञकं सुरतरुं वाञ्छातिरिक्तप्रदं
वायोर्मण्डलमत्र धूमसदृशं षट्कोणशोभान्वितम् ॥
[श्रीतत्त्वचिन्तामणिः, षष्ठाध्यायः, अनाहतचक्रम्, श्लोक २३]

# अनाहतचक्रम्
## ( CARDIAC PLEXUS )
### द्वादशदलपद्म




चित्रसंख्या : ५

षड्बिन्दुसंयुतं धूम्रवर्णं तस्मिन् मनोहरम् ।[1]
मृगाधिरूढं यं बीजं वेदबाहुं गदान्वितम् ॥३॥
तस्मिन् वराभीतिधरो वर्तते ईश्वरो विराट् ।[2]
तद्वामे काकिनी शक्तिः पीतवर्णा चतुर्भुजा ॥४॥

उसमें छह बिन्दुओं से युक्त धूम्रवर्ण मनोहर मृग पर बैठे हुए यं बीज वाले दो हाथों में वेद और गदा तथा दो अन्य हाथों में वरदान और अभयदान की मुद्रा से युक्त विराट ईश्वर विद्यमान हैं जिनके वायीं ओर पीतवर्णवाली और चार भुजाओं वाली काकिनी शक्ति विराजमान हैं।

वरशूलाभयं पाशं बिभ्रती कामरूपिणी ।
इयन्तु काकिनी शक्तिर्भवबन्धविनाशिनी ॥५॥

(ये काकिनी शक्ति) वरदान एवं अभयदान की मुद्रा वाले दो बाहु तथा शेष दो बाहुओं में शूल और पाश को धारण किए हुए रहती हैं और यह कामरूपिणी हैं। यह काकिनी शक्ति भवबन्धनों ( सांसारिक कष्टों को ) नष्ट करती हैं।

---

तुलनीयः—१. तन्मध्ये पवनाक्षरञ्च मधुरं धूमावलीधूसरं
ध्यायेत् पाणिचतुष्टयेन लसितं कृष्णाधिरूढं परम् ।
तन्मध्ये करुणानिधानममलं हंसाभमीशाभिधं
पाणिभ्यामभयं वरञ्च विदधल्लोकत्रयाणामपि ॥
[श्रीतत्त्वचिन्तामणिः, षष्ठाध्यायः, अनाहत्चक्रम्, श्लोक २४]

२. अत्रास्ते खलु काकिनी नवतडित्पीता त्रिनेत्राशुभा
सर्वालङ्करणान्विता हितकरी सम्यग् जनानां मुदा ।
हस्तैः पाशकपालशोभनवरान् संबिभ्रती चाभयं
मत्तापूर्णसुधारसार्द्रहृदया कङ्कालमालाधरा ॥
[श्रीतत्त्वचिन्तामणिः, षष्ठाध्यायः, अनाहत्चक्रम्, श्लोक २५]

ततः कर्णिकायां रवेर्मण्डलान्त-[1]
स्त्रिकोणं सदास्ते तडित्कोटितुल्यम् ।
तदन्तर्वराङ्गं ज्वलज्वाललिङ्गं
तदन्तर्हि हंसस्वरूपो हि जीवः ॥६॥

उसके बाद कर्णिका में त्रिकोण सूर्यमण्डल का निर्माण करे जो सदा ही विद्युत्कोटि के समान कान्तिमान रहता है। उसके अन्तर्गत सुन्दर अंगों वाला जलती हुई ज्योतिमय लिङ्ग स्थित रहता है और उसके अन्तर्गत हंस स्वरूप जीव स्थित रहता है।

अनाद्यविद्याव्यामोहहेतुब्रह्मसमन्विता ।
सत्त्वशुद्धिविशुद्धिभ्यां मायाबिम्बे च ते मते ॥७॥

ब्रह्म के व्यामोह का हेतु अनादि अविद्या से युक्त है। इस माया (अविद्या) के शुद्धि-सत्त्व और विशुद्धि-सत्त्व (सत्त्वशुद्धि और सत्त्वविशुद्धि) ये दो बिम्ब माने गये हैं।

विद्याविशिष्टसर्वज्ञ ईश्वरः परिकीर्त्तितः ।
अविद्यावशगो जीवस्तत्तद्भेदादनेकधा ॥८॥

विद्या से विशिष्ट सर्वज्ञ को ईश्वर कहते हैं तथा अविद्या के वशीभूत जीव कहा जाता है। वह विविध भेदों के आधार पर अनेक प्रकार का है।

स्यात्कारणं शरीरं सा तत्र प्राज्ञोऽभिमानवान् ।
प्रदीपकलिकाकारो जीवो कर्मवशे स्थितः ॥९॥

वह अविद्या कारण शरीर है जहाँ अभिमान (अहंकार) युक्त प्राज्ञजीव जो कि दीपकणिका के आकार का है, कर्मवश स्थित रहता है।

---

तुलनीयः—१. एतन्नीरजकर्णिकान्तरलसच्छक्तिस्त्रिकोणाभिधा
विद्युत्कोटिसमानकोमलवपुः सास्ते तदन्तर्गतः ।
वाणाख्यः शिवलिङ्गकोऽपि कनकाकाराङ्गरागोज्वलो
मौली सूक्ष्मविभेदयुङ्मणिरिव प्रोल्लासलक्ष्म्यालयः ॥
[श्रीतत्त्वचिन्तामणिः, अनाहतचक्रम्, षष्ठाध्यायः, श्लोक २६]

बाह्येन्द्रियैः शरीरार्थान् जीवो गृह्णाति यर्हि सः ।
तदा तु जागरावस्था जीवस्य परिकीर्त्तिताः ॥१०॥

जिस समय जीव बाह्य इन्द्रियों की सहायता से या माध्यम से शरीर के विषयों को ग्रहण करता है, तब जीव की जागर अवस्था कही जाती है।

श्रमादिविनिवृत्त्यर्थं लिङ्गदेहे विशत्यसौ ।
बहिर्हृष्टसमानार्थान् भुञ्जन् क्रीडन् विराजते ॥११॥

वह जीव श्रम आदि की निवृत्ति के लिए लिङ्गदेह में प्रवेश करता है और अन्यथा उसके बाहर सुखदायक विषयों का भोग करता हुआ और क्रीड़ा करता हुआ विराजता है।

बाह्येन्द्रियादिसञ्चारः स्वल्पावस्था तदा स्मृता ।
कारणे सत्त्वमानन्दमयो मोदादिवृत्तिभिः ॥
प्राप्ते कारणदेहन्तु लिङ्गदेहस्य लीनता ॥१२॥

बाह्य इन्द्रियों में जब उसका संचार होता है तब उस अवस्था को स्वल्पा अवस्था कहते हैं। कारण शरीर में जीव के विद्यमान रहने पर मोद आदि वृत्तियों के द्वारा सत्त्व आनन्दमय स्थित रहती है तथा कारण देह को प्राप्त करने पर लिङ्गदेह विलीन हो जाता है।

सुखदुःखज्ञता तस्याहमो यस्माद्विलीनता ।
जीवः संस्कारवान् द्रष्टा केवलन्तत्र तिष्ठति ॥१३॥
तस्मात्सुषुप्तियुक्तस्यास्वाप्सं सुखमहम्परम् ।
अवेदिषन्नैव किञ्चिदिति संस्मरणं भवेत् ॥१४॥

उस अवस्था में उसे सुख दुःख का ज्ञान तो रहता है किन्तु उसका अहंभाव विलीन हो जाता है। उस समय वहाँ केवल संस्कार युक्त जीव द्रष्टा के रूप में स्थित रहता है। इसीलिए सुषुप्ति अवस्था से युक्त होने के बाद अर्थात् जगने के अनन्तर 'मैं अत्यन्त सुखपूर्वक सोया' और उस समय अन्य किसी बात का अनुभव नहीं हुआ, ऐसा उसे स्मरण होता है।

अन्नप्राणमयौ कोषौ मनोबुद्धिमयौ तथा ।
आनन्दमय इत्यैते कोषाः पञ्च प्रकीर्त्तिताः ॥१५॥

अन्नमय, प्राणमय, मनोमय, बुद्धिमय और आनन्दमय ये पाँच कोश माने गये हैं ।

पञ्चीकृतेभ्यो भूतेभ्यो देहस्थूलोऽन्नसंज्ञकः ।
लिङ्गे कर्मेन्द्रियैः पञ्चप्राणैः प्राणमय स्मृतः ॥१६॥

पञ्चीकृत महाभूतों से बना हुआ स्थूल देह अन्नमय कोश कहा जाता है तथा कर्मेन्द्रिय एवं पञ्चप्राण युक्त लिङ्ग शरीर प्राणमय कोश कहलाता है ।

धीन्द्रियैःसात्त्विकैः सार्द्धं विमर्शात्मा मनोर्मयः ।
सार्द्धन्तैरेव विज्ञानमयो धीर्निश्चयात्मिका ॥१७॥

सत्त्व प्रधान ज्ञानेन्द्रिय एवं मन मिलकर मनोमय कोश कहलाते हैं । ज्ञानेन्द्रिय और मन के सहित निश्चयात्मक बुद्धि मिलकर विज्ञानमय कोश बनाते हैं ।

लिङ्गे कोषास्त्रयो ज्ञेया गुणभेदात् पृथक् पृथक् ।
आनन्दमय इत्येकोऽविद्यायां कारणे स्मृतः ॥१८॥

पृथक् पृथक् गुणभेद से प्राणमय, मनोमय और विज्ञानमय कोश लिङ्ग शरीर में स्थित रहते हैं तथा आनन्दमय कोश कारणभूत अविद्या में स्थित रहता है ।

तत्तत्कोषैस्तु तादात्म्यादात्मा तत्तन्मयो भवेत् ।
वासनासहितो जीवः पुनर्देहं विशत्यसौ ॥१९॥

भिन्न-भिन्न कोशों के साथ तादात्म्य होने से तत्तद रूप हो जाता है । वासना सहित वह जीव पुनः देह में प्रवेश करता है ।

पुनः स्याज्जागरावस्था गृह्णात्यर्थान् विमोहितः ।
मनस्तिष्ठति भ्रूमध्ये कण्ठे बुद्धिः प्रकीर्त्तिता ॥२०॥

और जागरावस्था (जागृति अवस्था) को प्राप्त करता है । कालान्तर में सुषुप्त अवस्था (विमोहित) में मन भ्रूमध्य में (दोनों भ्रूओं के मध्य में) स्थित रहता है । बुद्धि का स्थान कण्ठ में कहा गया है ।

हृदि चित्तं समाख्यातमहङ्कारश्च नाभिषु ।
य आत्मा सर्वगो नित्यो नानारूपेण भासते ॥२१॥

चित्त की स्थिति हृदय में बताई गयी है एवं अहंकार नाभि में स्थित रहता है। सर्वत्रगामी (सर्वव्यापक) आत्मा जो नित्य है, नाना रूपों में अवभासित होता है।

यन्मनाक् मननीशक्ति धत्ते तन्मन उच्यते ।
मयेदं कर्म कर्त्तव्यं भोक्तव्यं कर्मणः फलम् ॥२२॥
इति निश्चयबुद्धिर्या सा बुद्धिः परिकीर्त्तिता ।
धारणाख्येन या वृत्तिस्तच्चित्तं परिकीर्त्तितम् ॥२३॥

जो मनन शक्ति धारण करता है उसे मन कहते हैं मुझे यह कर्म करना है, मुझे इस कर्म फल का भोग करना है इत्यादि निश्चयात्मक ज्ञान को बुद्धि कहते हैं साथ ही धारणात्मक, जो व्यापार है उसे चित्त कहते हैं।

अभिमानतया वृत्तिरहङ्कारः प्रकीर्त्तितः ।
एतद्विशिष्टं चैतन्यं जीवशब्देन कथ्यते ॥२४॥

अभिमान रूप से विद्यमान वृत्ति को अहंकार कहते हैं। इन सबसे अर्थात् प्राण मन, बुद्धि, चित्त एवं अहंकार से विशिष्ट चैतन्य को जीव शब्द से अविहित किया जाता है।

अन्तर्वृत्तित्वमेतेषामिन्द्रियाणामपेक्षया ।
अतोऽन्तःकरणन्तेषामुच्यते योगवित्तमैः ॥२५॥

इन्द्रियों की अपेक्षा इनका व्यापार आन्तरिक हुआ करता है, अतः योगशास्त्र के विशिष्ठ विद्वानों द्वारा इन्हें अन्तःकरण कहा जाता है।

करणेनैव यस्तिष्ठेदन्तर्मध्ये निरन्तरम् ।
तदन्तःकरणं विद्यादिति तन्त्रविदो विदुः ॥२६॥

तन्त्रशास्त्र के विद्वानों के अनुसार जो अन्तः अर्थात शरीर के मध्य में करण के रूप में स्थित रहता है, उसे अन्तःकरण जानना चाहिए।

तस्योपरि दलं ध्यायेच्चतुःपञ्चाशसंख्यकम् ।
सप्तविंशतितत्त्वानि वायव्यानि प्रतिच्छदम् ॥२७॥

उस अन्तःकरण के ऊपर चौवन दल कमल (चौवन संख्यात्मक पत्रों से युक्त) का ध्यान करे। इस कमलदल पर प्रति पत्र वायव्य सत्ताइस तत्त्व विद्यमान रहते हैं।

द्विगुणं कल्पयित्वा तु शिवशक्तिप्रभेदतः ।
स्मरेत्तत्त्वानि कथ्यन्ते तन्मात्राः पञ्चसंख्यकाः ॥२८॥

भूतानि धीन्द्रियाणीति पञ्चकर्मेन्द्रियाणि तु ।
मनो बुद्धिरहङ्कारश्चित्तं काल इतीरितः ॥२९॥

प्रकृतिः पुरुषश्चेति सप्तविंशतिसंख्यकम् ।
शिवशक्तिरथो वक्ष्ये तत्तत्पत्रेषु या स्थिता ॥३०॥

इन सत्ताइस तत्त्वों को शिव और शक्ति के भेद से द्विगुणित रूप कल्पना करके अर्थात् चौवन संख्या में उसका ध्यान करे। इनके पाँच तन्मात्राएँ, पाँच भूत पाँच ज्ञानेन्द्रियाँ, और पाँच कर्मेन्द्रियाँ, मन, बुद्धि, अहङ्कार चित्त, काल, प्रकृति और पुरुष ये सत्ताइस संख्या में तत्त्व हैं। शिव और शक्ति के रूप में भिन्न-भिन्न पात्रों, जो स्थित है उनका वर्णन अग्रिम पंक्तियों में किया जा रहा है।

खगेश्वरश्च भद्रा च कूर्माधारे प्रकीर्त्तितः ।
मेषः शोकाश्च मीनश्च मल्लिका ज्ञान एव च ॥३१॥

विमला च सदानन्दः शर्वरी तीव्र एव च ।
लीला प्रियश्च कुमुदा मैनाकी कालिकस्तथा ॥३२॥

डामरो डामरी विष्णू राकिनी परिकीर्त्तिता ।
नामश्च लाकिनी ज्ञेया कामश्च काकिनी तथा ॥३३॥

सामयः शाकिनी शक्तिर्हाकिनी च निकामरः ।
धारेशराके चक्रीशो बिन्दुः कुरवकाकले ॥३४॥

समया श्रीशकुब्जिके हृदीशकामकले तथा ।
शिरसः कुलदीर्घिका शिखेशोऽम्वचरा तथा ॥३५॥

चर्मी च बहुरूपा च अस्त्रेशश्च महत्तरी ।
परमगुरुर्मङ्गला च पराधिगुरुकौशले ॥३६॥

पूज्यगुरुश्च वामा च एताः स्युर्त्रासुरश्मयः ।
अष्टौ सिद्धिः प्रयच्छन्ति चिन्तिता रश्मयः स्तुताः ॥३७॥

खगेश्वर और भद्रा कूर्माधार में कहे गये हैं तथा मेष और शोका, मीन और मल्लिका, ज्ञान और विमला, सदानन्द और शर्वरी, तीव्र और लीला, प्रिय और कुमुदा, कालिक और मैनाकी, डामर और डामरी, विष्णु और राकिनी, नाग और लाकिनी, काम और काकिनी, साम और शाकिनी शक्ति, निकामर और हाकिनी, धारेश और राका, चक्रीश और बिन्दु, कुरव और काकला, श्रीश और समया, हृदीश और कुब्जिका, काम और कला, शिरस (शिरसाईस ?) और कुल-दीर्घिका, शिखेश और अवचरा, चर्मी और बहुरूपा, अस्त्रेश और महत्तरी, परमगुरु और मङ्गला, पराधिगुरु और कौशला, पूज्यगुरु और वामा ये चौवन पत्रों में निवास करने वाली शिव और शक्ति की रश्मियाँ हैं। इन रश्मियों का चिंतन करने पर आठो सिद्धियाँ (अणिमा, लघिमा, गणिमा प्राप्ति, प्राकाम्य ईशित्व और वशित्व) प्राप्त होती है।

अनाहतमिदञ्चक्रं यो जानाति नरोत्तमः ।[1]
अणिमाद्यष्टसिद्धीनामधिपः कविराड् भवेत् ॥३८॥

इस अनाहत चक्र को जो (श्रेष्ठ) महापुरुष जानता है वह अणिमा आदि आठ सिद्धियों का स्वामी और कविराज हो जाता है।

इति मैथिलश्रोत्रियश्रीबदरीनाथविरचितायां चक्रकौमुद्यां अनाहत-चक्रविवृतिर्नाम चतुर्थः परिच्छेदः ।

इस प्रकार मैथिलश्रोत्रिय श्रीबदरीनाथ विरचित चक्रकौमुदी में अनाहत-चक्रविवृति नामक चौथा परिच्छेद समाप्त हुआ।

—:०:—

---

तुलनीयः—१ योगीशो भवति प्रियात् प्रियतमः कान्ताकुलस्यानिशं
ज्ञानीशोऽपि कृती जितेन्द्रियगणो ध्यानावधानक्षमः ।
गद्यैः पद्यपदादिभिश्च सततं काव्याम्बुधारावहो ।
लक्ष्मीरङ्गणदैवतः परपुरे शक्तः प्रवेष्टुं क्षणात् ॥
[श्रीतत्त्वचिन्तामणिः, षष्ठाध्यायः, अनाहतचक्रम्, श्लोक २८]

## [ पञ्चमः परिच्छेदः ]

### [विशुद्धचक्रम्]

अथ वक्ष्ये विशुद्धाख्यं चक्रं नृणां विमुक्तये ।[1]
कण्ठे पद्मं षोडशारं स्वरैः षोडशभिर्युतम् ॥१॥

इसके अनन्तर विशुद्ध नामक चक्र का वर्णन करूँगा जो मनुष्यों को मुक्ति देने वाला है, कण्ठ में षोडशदल कमल स्थित है, जिसमें सोलह स्वर विद्यमान रहते हैं।

नभसो मण्डलं तस्मिन् वृत्ताकारं विधुप्रभम् ।
गजारूढं नभोरूपं हंबीजं ऋतुबाहुकम् ॥२॥

उसके नभोमण्डल में वृत्ताकार चन्द्रमा की प्रभा से युक्त गज पर आरूढ नभोरूप ऋतुरूपी बाहुओं वाला हं बीज विद्यमान है।

पाशाङ्कुशौ वराभीती दधत्तत्रास्ति शङ्करः ।[2]
पञ्चवक्त्रस्त्रिनेत्रश्च तुषारसदृशच्छविः ॥३॥

उसके ऊपर पाश, अंकुश, वर और अभय मुद्रा युक्त शङ्कर विराजते हैं जो पञ्चमुख त्रिनेत्र तथा तुषार के सदृश कान्ति वाले हैं।

---

तुलनीयः—१. विशुद्धाख्यं कण्ठे सरसिजममलं धूमधूम्रावभासं
स्वरैः सर्वैः शोणैर्दलपरिलसितैर्दीपितं दीप्तबुद्धेः ।
समास्ते पूर्णेन्दुप्रथिततमनभोमण्डलं वृत्तरूपं
हिमच्छायानागोपरि लसिततनोः शुक्लवर्णाम्बरस्य ॥
[श्रीतत्त्वचिन्तामणिः, षष्ठाध्यायः, विशुद्धचक्रम्, श्लोक २९]

२. भुजैः पाशाभीत्यंकुशवरलसितैः शोभिताङ्गस्य तस्य
मनोरङ्के नित्यं निवसति गिरिजाभिन्नदेहो हिमाभः ।
त्रिनेत्रः पंचास्यो लसितदशभुजो व्याघ्रचर्माम्बराढ्यः
सदा पूर्वो देवः शिव इति च समाख्यानसिद्धप्रसिद्धः ॥
[श्रीतत्त्वचिन्तामणिः, षष्ठाध्यायः, विशुद्धचक्रम्, श्लोक ३०]

## विशुद्धचक्रम्

(CAROTID PLEXUS)

षोडशदलपद्म




चित्रसंख्या : ६

कृपाणञ्च कपालञ्च त्रिशूलं टङ्कमेव च ।
वज्रं दावानलं पाशमभीतिनागराजकम् ॥४॥

अङ्कुशं दिव्यघण्टाञ्च दधच्चर्मावृतः शिवः ।
एवं ध्येयो विश्वनाथो भुक्तिमुक्तिप्रदायकः ॥५॥

वे (शिव) कृपाण, कपाल, त्रिशूल, टङ्क, वज्र, दावानल, पाश, अभीति, नागराज, अंकुश और दिव्य घण्टा को धारण किए हुए, तथा चर्म से आवृत्त हैं। इस रूप में विश्वनाथ (शिव) का ध्यान करना चाहिए जिसके फलस्वरूप वे भोग और मोक्ष प्रदान करते हैं।

तद्वामे शाकिनीशक्तिः शूलपाशं शरं धनुः ।[1]
धारयन्ती तदा ध्येया सुधांशोर्मण्डलन्ततः ॥६॥

उनके वायीं ओर सदा ध्यान करने योग्य शाकिनी शक्ति शूल, पाश, वाण और धनुष धारण किये हुए विद्यमान रहती हैं और उसके अनन्तर चन्द्रमण्डल है।

कर्णिकायां सुनिर्वाणतत्त्वामृतसमुज्वलम् ।
निधाय चित्तमत्रैव प्रकाशात्मा ततो भवेत् ॥७॥

इस चक्र की कर्णिका में निर्वाण तत्त्वामृत से समुज्वल चित्त को संस्थापित करके प्रकाशात्म भाव को प्राप्त करे।

ततो द्विसप्ततिदलं ध्यायेत्तदुपरिस्थितम् ।
षट्त्रिंशद्व्योमतत्त्वानि शिवशक्तिप्रभेदतः ॥८॥

उसके ऊपर स्थित बहत्तर दलों वाले (कमल) का ध्यान करे जिसमें शिव और शक्ति के भेद से छत्तीस आकाश के तत्त्व स्थित रहते हैं।

---

तुलनीयः—१. सुधासिन्धोः शुद्धा निवसति कमले शाकिनी पीतवस्त्रा
शरं चापं पाशं सृणिमपि दधती हस्तपद्मैश्चतुर्भिः ।
सुधांशोः सम्पूर्णं शशपरिरहितं मण्डलं कर्णिकायां
महामोक्षद्वारं श्रियमभिमतशीलस्य शुद्धेन्द्रियस्य ॥
[श्रीतत्त्वचिन्तामणिः, षष्ठाध्यायः, विशुद्धचक्रम्, श्लोक ३१]

द्विगुणं कल्पयित्वा तु प्रतिपत्रं विभावयेत् ।
व्योमतत्त्वानथो वक्ष्ये शिवशक्तिशिवेश्वरान् ॥९॥

इन छत्तीस व्योम तत्त्वों को पूर्वोक्त शिव और शक्ति भेद से द्विगुणित करके प्रतिपत्र पर उनकी विभावना करे। इसके अनन्तर शिव-शक्ति और ईश्वर के सम्बन्ध में कथन करूँगा।

शुद्धविद्या च माया च कलाविद्या तथा स्मृता ।
रागः कालश्च नियतिः पुरुषः प्रकृतिस्तथा ॥१०॥
अहङ्कारश्च बुद्धिश्च मनो ज्ञानेन्द्रियाणि तु ।
कर्मेन्द्रियाणि शब्दश्च स्पर्शो रूपं रसस्तथा ॥११॥
गन्धो भूतानि पञ्चापि तत्त्वान्येतानि भावयेत् ।
शिवशक्तिरथो वक्ष्ये द्विसप्ततिदलस्थिता ॥१२॥

शुद्धविद्या, माया, कला-विद्या, राग, काल, नियति, पुरुष, प्रकृति, अहंकार, बुद्धि, मन, ज्ञानेन्द्रियाँ, कर्मेन्द्रियाँ शब्द, स्पर्श, रूप, रस, गंध, ये पाँच भूत इन तत्त्वों की कामना करे। इसके अनन्तर बहत्तर दलों में शिव और शक्ति का कथन करूँगा।

हृदयः कालिकी चैव धरः कान्ता प्रकीर्त्तिता ।
भोगः शिवेश्वरीश्चैव उभयो योगिनी तथा ॥१३॥
महश्च पद्मरागा च शर्वश्च शबरी तथा ।
द्रवश्च कालिका चैव रश (स?) श्च परिकीर्त्तितः ॥१४॥
जुष्टचाण्डाली मोहश्च अघोरास्या मनोभवः ।
हेला महाकुलश्चैव लाकिनी परिकीर्त्तिता ॥१५॥
ज्ञानगुह्यं कुब्जिका च खेचरो डाकिनी तथा ।
ज्वलनो राकिनी चैव महाकूलश्च लाकिनी ॥१६॥
भीयोज्वलः काकिनी च तैजसः शाकिनी तथा ।
मूर्द्धा च हाकिनी वायुः पापघ्निः कुल एव च ॥१७॥
सिंहा संहार इत्येव तथा चैव कुलाम्बिका ।
विश्वेश्वरश्च कामा च कोटिलः काममातृका ॥१८॥

गालवश्चैव काङ्काली व्योमो व्योम प्रकीर्त्तिता ।
श्वसनश्च तथानन्दा महादेवी च खेचरः ॥१९॥
महत्तरी बाहुलौ च तातः कुण्डलिनी तथा ।
कुलातीतः कुलेशी च अजश्च गन्धिका तथा ॥२०॥
मननः पीडिका ईशो रेचिका परिकीर्त्तिता ।
शिखश्च णेचिका चैव परमश्च तथा परा ॥२१॥
परश्च दितिप्रोक्ताश्च नाभसाः शिवशक्तयः ।
शुद्धस्फटिकसङ्काशा द्विसप्ततिदलस्थिताः ॥२२॥

हृदय कालिकी, घर, कान्ता, भोग, शिवेश्वरी, दोनों की योगिनियाँ, मह, पद्मरागा, शर्व, शबरी, द्रव, कालिका, रस, जुष्टचाण्डाली, मोह, अघोरा, मनोभव, हेला, महाकुल, लाकिनी, ज्ञानगुह्य, कुब्जिका, खेचर, डाकिनी, ज्वलन, राकिनी, महाकूल, लाकिनी, भीयोज्वल, काकिनी, तैजस, शाकिनी, मूर्धा, हाकिनी वायु, पापघ्नी, कुल, सिंहा, संहार, कुलाम्बिका, विश्वेश्वर, काभा, कोटिल, कामसात्रिका गालव, काङ्काली, व्योम, व्योमा, स्वशन, आनन्दा, खेचर, महादेवी, बाहुल, महत्तरी, तात, कुण्डलिनी, कुलालीत, कुलेशी, अज, गन्धिका, मनन, पीडिका, ईश, रेचिका, शिव, णेचिका, परम, परा, पर और दिति ये व्योम बहत्तर शिव शक्तियाँ हैं जो शुद्ध स्फटिक के सदृश बहत्तर दलों पर स्थित है।

यो भावयेद् विशुद्धाख्यं शिवशक्तिसमन्वितम् ।[1]
सोऽष्टसिद्धिपतिभूयादिति शङ्करभाषितम् ॥२३॥

जो व्यक्ति शिव और शक्ति से युक्त इस विशुद्ध नामक चक्र की भावना करता है वह आठो सिद्धियों का स्वामी हो जाता है ऐसा शंकर ने कहा है।

इति मैथिलश्रोत्रियश्रीबदरीनाथविरचितायां चक्रकौमुद्यां विशुद्धचक्रविवृतिर्नाम पञ्चमः परिच्छेदः ।

इस प्रकार मैथिलश्रोत्रिय श्रीबदरीनाथ विरचित चक्रकौमुदी में विशुद्धचक्र विवृति नामक पाँचवाँ परिच्छेद समाप्त हुआ।

---

तुलनीयः—१. इह स्थाने चित्तं निरवधि विनिधायात्मसम्पूर्णयोगः
कविर्वाग्मी ज्ञानी स भवति नितरां साधकः शान्तचेताः ।
त्रिकालानां दर्शी सकलहितकरो रोगशोकप्रमुक्तः
चिरञ्जीवी जीवी निरवधिविपदां ध्वंसहंसप्रकाशः ॥
[श्रीतत्त्वचिन्तामणिः, षष्ठाध्यायः विशुद्धचक्रम्, श्लोक ३२]

## षष्ठः परिच्छेदः

### [आज्ञाचक्रम्]

आज्ञाचक्रमथो वक्ष्ये हक्षयुक्तं दलद्वयम् ।[1]
भ्रुवोर्मध्ये शुभ्रवर्णं हाकिनी शक्ति संयुतम् ॥१॥
प्रदीप्तममृतस्राविं लात्मिका कर्णिकान्वितम् ।
ध्येया तु हाकिनीशक्तिश्चन्द्रकान्तिसमप्रभा ॥२॥

इसके अनन्तर मैं आज्ञाचक्र का कथन करूँगा जो ह् और क्ष अक्षरों से युक्त दो दलों वाला है। दोनों भ्रुवों के मध्य शुभ्रवर्ण हाकिनी शक्ति से युक्त प्रदीप्त अमृत का स्रवण करने वाले ल वर्ण से युक्त कर्णिका से युक्त है। चन्द्र के समान कान्ति से युक्त इस हाकिनी शक्ति का ध्यान करना चाहिए।

ज्ञानमुद्रां कपालञ्च डिण्डिमञ्च सृजं करैः ।
दधानाधोमुखी नित्या योगगम्यतिसुन्दरी ॥३॥

यह शक्ति ज्ञानमुद्रा, कपाल, डिण्डिम और माला को हाथ में धारण किये हुए नित्य अधोमुखी और अत्यन्य सुन्दरी योगगम्या हैं।

---

तुलनीयः—१. आज्ञानामाम्बुजतद्धिमकरसदृशं ध्यानधामप्रकाशं
हक्षाभ्यां वै कलाभ्यां परिलसितवपुर्नेत्रपत्रं सुशुभ्रम् ।
तन्मध्ये हाकिनी सा शशिसमधवला वक्त्रषट्कं दधाना
विद्यां मुद्रां कपालं डमरुजपवटीं बिभ्रती शुद्धचित्ता ॥
[श्रीतत्त्वचिन्तामणिः, षष्ठाध्यायः, आज्ञाचक्रम्, श्लोक ३३]

## आज्ञाचक्रम्
( MEDULLA )
द्विदलपद्म




चित्रसंख्या : ७

प्रदीपकलिकाकारं मनोऽत्रास्तेऽतिनिर्मलम् ।[1]
लिङ्गन्तत्कर्णिकान्तस्थं त्रिकोणमतिसुन्दरम् ॥४॥
सौदामिनीसमं तस्मिन् वेदादिं संस्मरेद् बुधः ।
तस्मिन् प्रदीपसदृशोऽप्यन्तरात्मा व्यवस्थितः ॥५॥
सच्चिदानन्दरूपोऽसौ योगिध्येयः सनातनः ।
अथ चक्रोपरि ध्यायेत् चतुःषष्टिदलानि तु ॥६॥
तेषु मानसतत्त्वानि द्वात्रिंशत्संख्यकानि च ।
द्विगुणं कल्पयित्वा तु शिवशक्तिप्रभेदतः ॥७॥

इसमें अत्यन्त निर्मल प्रदीप्तकलिका के आकृति वाला मन स्थित रहता है। इसकी कर्णिका के अन्दर स्थित अति सुन्दर त्रिकोण अति सुन्दर विद्युत के समान वेदों के आदिभूत लिङ्ग का स्मरण करे। उसमें ही प्रदीप के सदृश अन्तरात्मा व्यवस्थित है।

यह अन्तरात्मा सच्चिदानन्द रूप सनातन योगियों द्वारा ध्यान योग्य है।

इसके अनन्तर चक्र के ऊपर (६४) चौंसठ दलों का ध्यान करे। उन पर मानस तत्त्वों को शिव-शक्ति के भेद से द्विगुणित करके ध्यान करे

अथ मानसतत्त्वानि वक्ष्यन्ते क्रमशोऽधुना ।
आदौ परा चतुर्द्धा स्यात् द्वितीयेच्छा च पञ्चधा ॥८॥
त्रयी ज्ञानचतुर्द्धैव चतुर्थी सप्तधा क्रिया ।
पञ्चमी कुण्डली द्विर्द्विः षष्ठी स्यान्मातृकाऽष्टधा ॥९॥

इसके अनन्तर अब क्रमशः मानस तत्त्वों का कथन किया जायेगा। सर्व प्रथम चार प्रकार की पराशक्ति उसके अनन्तर पाँच प्रकार की इच्छाशक्ति, तीसरी चार प्रकार की ज्ञानशक्ति, चौथी सात प्रकार की क्रियाशक्ति, पाँचवी दो-दो प्रकार की कुण्डली शक्ति और छठी आठ प्रकार की मातृकाशक्ति (ये बत्तीस मानस तत्त्व हैं)।

---

तुलनीयः — १. एतत्पद्मान्तराले निवसति च मनः सूक्ष्मरूपं प्रसिद्धं
योनौ तत्कर्णिकायामितरशिवपदं लिङ्गचिह्नप्रकाशम् ।
विद्युन्मालाविलासं परमकुलपदं ब्रह्मसूत्रप्रबोधम्
वेदानामादिबीजं स्थिरतरहृदयश्चिन्तयेत्तत् क्रमेण ॥
[श्रीतत्त्वचिन्तामणिः, षष्ठाध्यायः, आज्ञाचक्रम्, श्लोक ३४]

परा पश्यन्ती मध्यमा च बैखरीति प्रभेदतः ।
चतुर्द्धैव पराशक्तिर्विज्ञेया योगिभिः सदा ॥१०॥
परा वाङ्मूलचक्रस्था पश्यन्ती नाभिमध्यगा ।
मध्यमा हृदयस्था च कण्ठस्था बैखरी मता ॥११॥

परा, पश्यन्ती, मध्यमा और बैखरी भेद से योगी लोग पराशक्ति को चार प्रकार की मानते हैं। इनमें से मूलवाणी परा है। नाभि चक्र में स्थित वाक्तत्त्व को पश्यन्ती, हृदयस्थ वाक्तत्त्व को मध्यमा तथा कण्ठस्थ वाक्तत्त्व को बैखरी कहते हैं।

उपकर्तुं प्रतिकर्तुं कर्तुं कारयितुं तथा ।
उदासितुञ्चेति भेदादिच्छाशक्तिस्तु पञ्चधा ॥१२॥

उपकार की इच्छा, प्रतिकार की इच्छा, करने की इच्छा, कराने की इच्छा और विरति की इच्छा भेदों से इच्छाशक्ति पाँच प्रकार की होती है।

ज्ञानशक्तिश्चतुर्द्धैव ज्ञानन्तु द्विविधं स्मृतम् ।
निरालम्बनं सालम्बनं चिद्रूपेणालम्बनं भवेत् ॥१३॥

ज्ञानशक्ति भी चार प्रकार की ही है। सर्वप्रथम ज्ञान दो प्रकार का है- निरालम्बन और स्वालम्बन। यहाँ आलम्बन चिद्रूप से हुआ करता है।

ज्ञातृज्ञेयज्ञप्तिभेदैः सालम्बं त्रिविधं स्मृतम् ।
अहं त्वं च मदीयञ्च त्वदीयमिति यद् भवेत् ॥१४॥
अहंकारास्पदत्वाच्च चिद्रूपं रहितं यतः ।
अतश्चतुष्टयं तत्तु निरालम्बमुदाहृतम् ॥१५॥

ज्ञात, ज्ञेय और ज्ञप्ति भेद से सालम्बन ज्ञान तीन प्रकार का है। मैं, तुम, मेरा और तुम्हारा इत्यादि प्रकार के जो ज्ञान हैं वह अहंकारास्पद है। अतः वह चिद्रूप रहित है। इन चारों प्रकार के ज्ञान को निरालम्बन ज्ञान कहते हैं।

एतच्चतुष्टयं विद्याद् निरालम्बञ्च पत्रगम् ।
इष्टापूर्त्तञ्च स्वाध्यायो जपः पूजा तपस्तथा ॥१६॥
दानञ्चेति प्रकारेण क्रियाशक्तिस्तु सप्तधा ।
उन्नयश्च लयश्चैव प्रत्यावृत्तिस्तथैव च ॥१७॥
विश्रान्तिरिति भेदेन चतुर्द्धा कुण्डली स्मृता ।
मातृका त्वष्टधा ज्ञेया वर्गाष्टकविभेदतः ॥१८॥
अवर्गः षोडशो वर्णः कवर्गः पञ्चवर्णकः ।
चवर्गः पञ्चवर्णः स्याट्टवर्गः पञ्चवर्णकः ॥१९॥
तवर्गः पञ्चवर्णः स्यात् पवर्गः पञ्चवर्णकः ।
यवर्गश्च चतुर्वर्णः शवर्गो रसवर्णकः ॥२०॥

चारों प्रकार का उपर्युक्त ज्ञान और निरालम्ब ज्ञान पत्र में स्थित रहता है। इष्टापूर्त (कुआँ, धर्मशाला इत्यादि बनाना) स्वाध्याय, जप, पूजा, तप और दान भेद से क्रियाशक्ति सात प्रकार की है।

उन्नय, लय, प्रत्यावृत्ति और विश्रान्ति भेद से कुण्डली चार प्रकार की मानी जाती है।

वर्गों में आठ भेद होने से मातृका आठ प्रकार की मानी जाती है, । अवर्ग जिसमें सोलह वर्ण हैं, कवर्ग में पाँच वर्ण हैं, चवर्ग में पाँच वर्ण हैं, टवर्ग में पाँच, वर्ण, तवर्ग में पाँच वर्ण हैं, पवर्ग में पाँच वर्ण हैं तथा यवर्ग में चार वर्ण तथा शवर्ग में रस अर्थात् ६ वर्ण हुआ करता है।

शिवशक्तीरथो वक्ष्ये चतुःषष्टिदलस्थिताः ।
भवः पराभवो भवेद्[1] यथा चित् चित्परा स्मृता ॥२१॥
महामाया तथा प्रोक्ता महामाया तथापरा ।
इच्छा इच्छापरा सृष्टिस्तथा सृष्टिपरा स्मृता ॥२२॥
सदसत् सदसत्परा क्रिया क्रियापरा स्मृता ।
आत्मा आत्मपरा चैव इन्द्रियाश्रय एव च ॥२३॥

---

—१. यज्ञः पराभव भवे (मूलपाठ)

इन्द्रियाश्रयपरा चैव गोचरो गोचरपरा।
लोकमुख्यो लोकमुख्यपरा वेदतत्त्वं वेदतत्त्वपरा ॥२४॥

संवित् संवित्परा चैव कुण्डली कुण्डलीपरा।
सौषुम्णः सौषुम्णपरा[1] प्राणसूत्रः प्राणसूत्रपरा ॥२५॥

स्पन्दः स्पन्दपरा चैव मातृका मातृकापरा।
स्वरोद्भवः स्वरोद्भवपरा वर्णजः वर्णजपरा ॥२६॥

शब्दजः शब्दजपरा वर्णजः वर्णजपरा।
वर्गजः वर्गजपरा संयोगः संयोगपरा ॥२७॥

मन्त्रविग्रहः मन्त्रविग्रहा चतुःषष्टिरुदाहृता।
एता इह रश्मयो ज्ञेया मानसाः पत्रसंस्थिताः ॥२८॥

इसके अनन्तर चौंसठ दलों में स्थित शिव और शक्तियों का वर्णन करूँगा। भव-पराभव, चित्-चित्परा, महामाया-महामायापरा, इच्छा-इच्छापरा, सृष्टि-सृष्टिपरा, सद-सदपरा, सत्-सत्परा, क्रिया-क्रियापरा, आत्मा-अत्मपरा, इन्द्रिय-इन्द्रियपरा, आश्रय-आश्रयपरा, गोचर-गोचरपरा, लोक-लोकपरा, मुख्य-मुख्यपरा, वेद-वेदपरा, तत्त्व-तत्त्वपरा, संवित्-संवित्परा, कुण्डली-कुण्डलीपरा, सौषुम्ण-सौषुम्णपरा, प्राण-प्राणपरा, सूत्र-सूत्रपरा, स्पन्द-स्पन्दपरा, मातृका-मातृकापरा, स्वर-स्वरपरा, उद्भव-उद्भवपरा, वर्णज-वर्णजपरा, शब्दज-शब्दजपरा, वर्णज-वर्णजपरा, वर्गज-वर्गजपरा, संयोग-संयोगपरा, मन्त्र-मन्त्रपरा, विग्रह-विग्रहपरा ये शिव और शक्ति के भेद से चौंसठ भेद होते हैं।

ये मानस-रश्मियाँ हैं जो प्रत्येक पत्र पर स्थित हैं।

परातो जायते चेच्छा सा च व्योमपतिः स्मृता।
षट्त्रिंशन्नायकाः प्रोक्ताः कण्ठस्थानं समाश्रिताः ॥२९॥

इच्छा की उत्पत्ति परा से होती है और उसे व्योम का स्वामी माना जाता है। इसके कण्ठस्थान में छत्तीस नायक हैं।

---

१. सौषुम्नः सौषुम्नपरा (मूलपाठ)

इच्छातो जायते ज्ञाना सा च वायोरधीश्वरी ।
षड्[1]विंशति रश्मीनां पतिः सानाहताश्रया ॥३०॥

इच्छा से ज्ञानशक्ति उत्पन्न होती है और वह शक्ति वायु की अधीश्वरी है। यह अनाहत आश्रित है तथा छब्बीस रश्मियों की स्वामी है।

ज्ञानातो भूतक्रिया व्यक्ता साम्यात्सलिलनायिका ।
षड्विंशतिरश्मीनां स्वाधिष्ठानं समाश्रिता ॥३१॥

ज्ञानशक्ति से भूतक्रिया व्यक्त होती है। यह जल के सदृश गतिशील होने से सलिल नायिका कहलाती है। स्वाधिष्ठानचक्र पर आश्रित यह शक्ति छब्बीस रश्मियों की स्वामिनी हैं।

कुण्डल्या मातृका जाता सा क्षितेरीश्वरी मता ।
अष्टाविंशतिरश्मीनामधिपाधारमाश्रिता ॥३२॥

कुण्डली से मातृका की उत्पत्ति होती है उसे क्षितेश्वरी माना जाता है। यह अट्ठाइस रश्मियों की स्वामिनी हैं तथा आधारचक्र पर आश्रित रहती हैं।

शिवशक्तिविभागेन द्विविधा सोभया[2] ज्ञेया[3] ।
षष्ठ्युत्तरञ्च त्रिशतमेवं शम्भुमरीचयः ॥३३॥

ये दोनों ही शक्तियाँ, शिव और शक्ति के भेद से दो-दो प्रकार की समझनी चाहिए। इस प्रकार शम्भु की रश्मियाँ तीन सौ साठ होती है।

तासां स्मरणमात्रेण जीवन्मुक्तो भवेन्नरः ।
सर्वासां स्मरणाशक्तस्तासामेकामपि स्मरेत् ॥३४॥

इसके स्मरण मात्र से मनुष्य जीवन मुक्त हो जाता है। इन सब के स्मरण में अशक्त होने की स्थिति में उनमें से किसी एक का भी स्मरण करे।

---

१. सप्त (मूलपाठ)
२. शोभया (मूलपाठ)
३. ज्ञया (मूलपाठ)

तासां पूजनतो नृणां ब्रह्महत्यादि नश्यति ।
लक्ष्मीवान् ध्यानतोऽवश्यं रश्मिसंघे वशेन्नरः ॥३५॥

उनके पूजन से मनुष्य के ब्रह्महत्या इत्यादि पाप नष्ट हो जात हैं । और वह लक्ष्मीवान हो जाता है । तथा उनके ध्यान से रश्मिसंघ में निवास करता है ।

हेमन्ताद्याश्च ऋतवः षट्चक्रे क्रमशः स्थिताः ।
संवत्सरात्मकं देहं खत्वाग्नि शिवशक्तिकम् ॥३६॥

यह संवत्सरात्मक षट्चक्र जिसमें हेमन्त आदि ऋतुएँ क्रमशः स्थित है, उसका शरीर है, उसमें आकाश और अग्नि शिव शक्ति के रूप में है ।

यदि साम्वत्सरीपूजामिच्छेत् साधकनन्दनः ।
षष्टित्रिशत्[1]पत्रस्थाः शिवशक्तीः प्रपूजयेत् ॥३७॥

यदि साधक साम्वत्सरी पूजा करना चाहे तो तीन सौ साठ पत्रों में स्थित शक्ति की पूजा करे ।

एतत्पूजनतो देव्याः पूजा साम्वत्सरी भवेत् ।
शान्तिवश्यस्तम्भनानि विद्वेषोच्चाटने ततः ॥३८॥
मारणान्तानि शंसन्ति षट्कर्माणि मनीषिणः ।
यदा समारभेद् भक्तः षट्कर्माणि सुसंयतः[2] ॥३९॥
मन आकृष्य विषयात्तत्तचक्रे चिरं नयेत् ।
षट्पञ्चाशद्दलं भूमौ द्विपञ्चाशद्दलं दले ॥४०॥
द्विषष्टिपत्रमनले चतुःषष्टिदलं परे ।
द्विसप्ततिदलं शून्ये चतुःषष्टिदलं परे ॥४१॥

इनकी पूजा से देवी की साम्वत्सरी पूजा होती है। शान्ति, वशीकरण, स्तम्भन, विद्वेषण, उच्चाटन, मारण ये छः कर्म भी मनुष्य को सिद्ध हो जाते हैं ।

---

१. त्रिशत् (मूलपाठ)
२. सुसंयुतः (मूलपाठ)

देवी का भक्त जब इन षट्चक्रों को प्रारम्भ से उस समय सुसंयत होकर विषयों से मन को आकृष्ट करके चिर काल तक प्रतिष्ठित करे।

इस चक्र में भूमि पर अर्थात् सबसे नीचे छप्पन दल, उससे ऊपर उन दलों पर बावन दल, उससे ऊपर अनल में बासठ दल, उससे ऊपर चौंसठ दल, उससे ऊपर शून्य में बहत्तर दल तथा उससे ऊपर चौंसठ दल होते हैं।

बहुभिः पुण्यसंघेन जागर्ति कुलकुण्डली।
नयेत् क्रमेण षट्चक्रं ततः षट्सिद्धिवाग्भवेत् ॥४२॥

इस प्रकार की कुलकुण्डली बहुत पुण्य समूह से जागृत होती है। इन षट्-चक्रों में कुण्डली को क्रमशः जागृत करे। इससे छओ सिद्धियाँ प्राप्त होती है।

आज्ञाचक्रमिदं प्रोक्तं शिवशक्तिसमन्वितम्।[1]
यो जानाति नरः सम्यक् ब्रह्मज्ञानी स उच्यते ॥४३॥

यह शिवशक्ति से युक्त आज्ञाचक्र है। इसे जो व्यक्ति भली भाँति जानता है, उसे ब्रह्मज्ञानी कहते हैं।

इतिमैथिलश्रोत्रियश्रीबदरीनाथविरचितायां चक्रकौमुद्यां आज्ञा-चक्रविवृतिर्नाम षष्ठः परिच्छेदः ॥६॥

इस प्रकार मैथिलश्रोत्रय श्री बदरीनाथ विरचित चक्रकौमुदी में आज्ञाचक्र विवृति नामक छठवाँ परिच्छेद समाप्त हुआ।

—:०:—

---

तुलनीयः—१. इह स्थाने विष्णोरतुलपरमामोदमधुरे
समारोप्य प्राणं प्रमुदितमनाः प्राणनिधने।
परं नित्यं देवं पुरुषमजमाद्यं त्रिजगतां
पुराणं योगीन्द्रः प्रविलसति वेदान्तविदितम् ॥
[श्रीतत्त्वचिन्तामणिः, षष्ठाध्यायः, आज्ञाचक्रम्, श्लोक ३६]

## सप्तमः परिच्छेदः

### [ सहस्रारचक्रम् ]

आज्ञाचक्राद्ध्वंभागेऽप्यर्द्धचन्द्रसितोज्ज्वलम् ।[1]
तत ऊर्ध्वं बिन्दुरूपं मकारशिवमन्दिरम् ॥१॥

आज्ञाचक्र से ऊपर के भाग में श्वेत, उज्वल अर्द्धचन्द्र स्थित है। उसके ऊपर बिन्दु रूप में मकार स्थित है जो कि शिव-मन्दिर कहा जाता है।

तत ऊर्ध्वं महासूक्ष्मं नादं विष्णुस्वरूपकम् ।[2]
अत ऊर्ध्वं सहस्रारपद्मं शिरसि संस्थितम् ॥२॥

उससे ऊपर अत्यन्त सूक्ष्म विश्व स्वरूप नाद स्थित है। उससे भी ऊपर शिर पर सहस्र दल कमल प्रतिष्ठित है।

---

तुलनीयः—१. लयस्थानं वायुस्तदुपरि च महानादरूपं शिवार्द्धं
शिवाकारं शान्तं वरदमभयं शुद्धबुद्धिप्रकाशम् ।
यदा योगी पश्येद् गुरुचरणयुगाम्भोजसेवासुशील-
स्तदा वाचां सिद्धिः करकमलतले तस्य भूयात् सदैव ॥
[श्रीतत्त्वचिन्तामणिः, षष्ठाध्यायः, सहस्रारचक्रम्, श्लोक ४०]

२. तदूर्ध्वे शंखिन्या निवसति शिखरे शून्यदेशे प्रकाशं
विसर्गाधः पद्मं दशशतदलं पूर्णचन्द्रातिशुभ्रम् ।
अधोवक्त्रं कान्तं तरुणरविकलाकान्तिकिञ्जल्कपुञ्जं
ललाटाद्यैर्वर्णैः प्रविलसितवपुः केवलानन्दरूपम् ॥
समास्ते तस्यान्तः शशपररहितः शुद्धसम्पूर्णचन्द्रः
स्फुरज्ज्योत्स्नाजालः परमरसचयस्निग्धसन्तानहासी ।
त्रिकोणं तस्यान्तः स्फुरति च सततं विद्युदाकाररूपं
तदन्तः शून्यं तत् सकलसुरगणैः सेवितश्चातिगुप्तम् ॥
[श्रीतत्त्वचिन्तामणिः, षष्ठाध्यायः, सहस्रारचक्रम्, श्लोक ४१-४२]

## सहस्रारचक्रम्
( BRAIN )
सहस्रदलपद्म



चित्रसंख्या : ८

रक्तवर्णं मातृकार्णें [?] विंशत्यावर्तकैर्युतम् ।
अधोमुखदलं तस्मिन् आस्ते पूर्णविधुः स्फुरन् ॥३॥

जो रक्तवर्ण मातृकावर्णों [?] तथा बीस आवंत्तकों से युक्त है। उसमें अधोमुख दल वाला पूर्ण चन्द्र स्फुरित होता है

अकथादित्रिरेखाभिस्त्रिकोणन्तत्र भावयेत् ।
त्रिषु कोणेषु त्रीन् हलधान्[1] चिन्तयेत्क्रमात् ॥४॥

उसमें अ, क और थ वर्णों से प्रारम्भ होने वाली तीन रेखाओं से युक्त त्रिकोण की भावना वर्णों ह, ल और ध का क्रमशः चिन्तन करे।

तन्मध्ये कन्दमेकन्तु रवीन्द्वग्निसमप्रभम् ।
तन्मध्ये गुरुमन्त्रञ्च द्वादशाक्षरसंख्यकम् ॥५॥

उसके मध्य में रवि और अग्नि के समान कान्तिमान एक कन्द का ध्यान करे। उसके मध्य में द्वादश अक्षर वाले गुरु मन्त्र का ध्यान करे।

वाग्भवं प्रथमं प्रोच्य मायां लक्ष्मीं ततः परम् ।
हसखफ्रें समुच्चार्य हसक्षमलवरयुं तथा ॥६॥

सर्व प्रथम वाग्भव अर्थात् प्रणव का उच्चारण करके माया अर्थात् लक्ष्मी का उच्चारण करे, उसके बाद हसखफ्रें का उच्चारण करे तदनन्तर ह स क्ष म ल व र युं का उच्चारण करे।

---

१. हलध्यान् (?)

द्वादशाक्षरमन्त्रोऽयं गुरोर्मोहान्धनाशकृत् ।[1]
अथवा स्त्रीगुरोर्मन्त्रं वाग्भवं तत्र संस्थितम् ॥७॥

तत्रैव मनसा पूज्य गुरुं सर्वार्थसिद्धिदम् ।
जपेद् गुरुमनुं प्रातरष्टोत्तरशतं सुधीः ॥८॥

स्वेष्टदेवीञ्च मनसा संपूज्य विधिवन्नरः ।
तत ऊर्ध्वं बुधो ध्यायेत् सूर्यमण्डलमुत्तमम् ॥९॥

यह द्वादशाक्षर मन्त्र है जो गुरु के मोह अन्धकार को दूर करता है। अथवा साधक स्त्री वहाँ पर स्थित गुरु का मन से पूजन करके सर्वार्थ सिद्धि देने वाले ओंकार सहित गुरु मन्त्र का जप करे। उसके अनन्तर प्रातः एक सौ आठ बार गुरु का, अपनी इष्ट देवी का मन से विधिवत् पूजन करके उत्तम सूर्यमण्डल का ध्यान करे।

ततश्च मण्डलं ध्यायेच्चन्द्रस्य मण्डलम्महत् ।
महावायुं ततो ध्यायेद् ब्रह्मरन्ध्रन्ततः परम् ॥१०॥

उसके अनन्तर चन्द्र के विशाल मण्डल का ध्यान करे, उसके अनन्तर महावायु का ध्यान करके तदनन्तर ब्रह्मरन्ध्र का ध्यान करे।

---

तुलनीयः—१. सुगुप्तं तद् यत्नादतिशयपरमामोदसन्तानराशेः
परं कन्दं सूक्ष्मं सकलशशिकलाशुद्धरूपप्रकाशम् ।
इह स्थाने देवः परमशिवसमाख्यानसिद्धः प्रसिद्धः
स्वरूपी सर्वात्मा रसविरसमितोऽज्ञानमोहान्धहंसः ॥
सुधाधारासारं निरवधि विमुञ्चन्नतितरां
यतेः स्वात्मज्ञानं दिशति भगवान् निर्मलमतेः ।
समास्ते सर्वेशः सकलसुखसन्तानलहरी
परीवाहो हंसः परम इति नाम्ना परिचितः ॥
[श्रीतत्त्वचिन्तामणिः, षष्ठाध्यायः, सहस्रारचक्रम्, श्लोक ४३-४४]

तत्कर्णिकायां हंसन्तु निर्मलं भावयेत्सुधीः ।
ततोऽतिसूक्ष्मा महती कला[१] चन्द्रस्य निर्मला ॥११।

उस सहस्र दल कमल की कर्णिका में निर्मल हंस की भावना करे। उसके बाद अत्यन्त सूक्ष्म महती चन्द्र की निर्मल कला की भावना करे।

अधोमुखा तु तन्मध्ये निर्वाणाख्यकला स्मृता ।[२]
अर्द्धचन्द्रसमानित्याऽप्यधो वक्षेति [?][३] सूक्ष्मिका ॥१२॥

उसके मध्य में अधोमुख निर्वाण नामक कला कही गई है। जो अर्द्धचन्द्र सदृश नित्य अधोवक्ष और अति सूक्ष्म है।

तन्मध्ये कोटिचन्द्रार्कविद्युत्कान्तिसमा स्मृता ।
निर्वाणशक्तिः परमा परमाणुसमा सती ॥१३॥

उसके मध्य में कोटि, चन्द्र, सूर्य और विद्युत की कान्ति के सदृश निर्वाण शक्ति कही गई है। जो परमाणु के समान सूक्ष्म होते हुए भी सबसे उत्कृष्ट है।

विश्वैकबीजं विबुधा महस्तत्प्रवदन्ति हि ।
निर्वाणशक्तिर्हंसाख्या सूक्ष्मात्सूक्ष्मतरा स्मृता ॥१४॥

देवगण उसके तेज को विश्व का एक मात्र बीज कहते हैं। इस निर्वाण शक्ति का नाम हंस है जो सूक्ष्म से भी सूक्ष्मतर है।

---

तुलनीयः—१. मती कथा (मूलपाठ)

२. शिवस्थानं शैवाः परमपुरुषं वैष्णवगणा ।
लपन्तीति प्रायो हरिहरपदं केचिदपरे ।
पदन्देव्या देवीचरणयुगलाम्भोजरसिका
मुनीन्द्रा अप्यन्ये प्रकृतिपुरुषस्थानममलम् ॥
[श्रीतत्त्वचिन्तामणिः, षष्ठाध्यायः, सहस्रारचक्रम्, श्लोक ४५]

३. त्रुटितं अस्ति ।

तन्मध्यबिन्दोर्म्मध्ये तु शून्यं ब्रह्म विभावयेत् ।[1]
सच्चिदानन्दरूपं तत् सर्वकारणकारणम् ॥१५॥

उसके मध्य बिन्दु के मध्य में शून्य ब्रह्म की भावना करे। जो सबका कारण सच्चिदानन्द स्वरूप हैं।

प्रज्ञानं ब्रह्म यद्वाक्यमहं ब्रह्मास्मि यत्पुनः ।
तत्त्वमसीति यद्वाक्यमयमात्मा ब्रह्म इत्यपि ॥१६॥
चतुष्टयमहावाक्यैरेतद् ब्रह्माभिधीयते ।
ब्रह्मविच्चापि लोकेषु ब्रह्मरूपेण वर्त्तते ॥१७॥

'प्रज्ञानं ब्रह्म' अर्थात ज्ञान ही ब्रह्म है। अहं ब्रह्मास्मि अर्थात् मैं ब्रह्म हूँ। तत्त्वमसि अर्थात वह ब्रह्म तुम हो। अयं आत्मा ब्रह्म अर्थात् यह आत्मा ब्रह्म है। इन चार महावाक्यों से उस ब्रह्म का कथन किया जाता है। इसके अतिरिक्त ब्रह्मज्ञानी भी संसार में ब्रह्म रूप में ही वर्तमान हैं।

एवं क्रमेण जानाति सहस्रारं शिरःस्थितम् ।[2]
पद्मं गुरूपदेशाद्वै स योगी मुक्तिभाग् नरः ॥१८॥

इस प्रकार जो व्यक्ति शिर में स्थित सहस्रदल कमल को गुरु के उपदेश से जान लेता है वह योगी मनुष्य मुक्ति का अधिकारी होता है।

---

तुलनीयः—१. एतस्या मध्यदेशे विलसति परमापूर्वनिर्वाणशक्तिः
कोट्यादित्यप्रकाशा त्रिभुवनजननी कोटिभागैकरूपा ।
केशाग्रस्यातिसूक्ष्मा निरवधि विगलत्प्रेमधाराधरा सा
सर्वेषां जीवभूता मुनिमनसि मुदा तत्त्वबोधं वहन्ती ॥
[श्रीतत्त्वचिन्तामणिः, षष्ठाध्यायः, सहस्रारचक्रम्, श्लोक ४९]

२. इह स्थानं ज्ञात्वा नियतनिजचित्तो नरवरो
न भूयात् संसारे पुनरपि न बद्धस्त्रिभुवने ।
समग्रा शक्तिः स्यान्नियतमनसस्तस्य कृतिनः
सदा कर्त्तुं खगतिरपि वाणी सुविमला ॥
[श्रीतत्त्वचिन्तामणिः, षष्ठाध्यायः सहस्रारचक्रम्, श्लोक ४६]

**बदरीनाथधीरेण** कृता सा **चक्रकौमुदी ।**
भूयात्प्रीत्यै भगवतो राधामाधवयोरियम् ॥१९॥

बदरीनाथ धीर द्वारा की गई यह चक्रकौमुदी भगवान राधामाधव की प्रीतिदायिनी होवे ।

इतिमैथिलश्रोत्रियश्रीबदरीनाथविरचितायां चक्रकौमुद्यां सहस्रार-चक्रविवृतिर्नाम सप्तमः परिच्छेदः ॥७॥

समाप्तश्चायं ग्रन्थः

इस प्रकार मैथिल श्रोत्रिय श्रीबदरीनाथ विरचित चक्रकौमुदी में सहस्रार-चक्र विवृति नामक सातवाँ परिछेद समाप्त हुआ ।

इति मैथिलश्रोत्रिय-बुधवारयगङ्गौराकुलोत्पन्नबिहारराज्यान्तर्गत-मधुबनीमण्डलान्तर्गतलालगञ्जग्रामवास्तव्य-वत्सगोत्रीय प० श्रीगोविन्द-देवझाशर्मात्मजश्रीजीवेश्वरझाशर्मनिर्मिता चक्रकौमुद्या 'मातङ्गी' नाम्नी हिन्दी टीका समाप्ता ।

# परिशिष्टम् (१)

## श्लोकानां वर्णानुक्रमसूची

## ( ब )



## ( भ )



## ( म )

# परिशिष्टम् (२)

## विशिष्टशब्दानां अकारादिवर्णानुक्रमसूची

| शब्दाः | परिच्छेदसंख्या | श्लोकसंख्या |
|---|---|---|
| प्राणमय | ४ | १६ |
| प्राणशक्ति | १ | ४० |
| प्राणसूत्र | ६ | २५ |
| प्राणसूत्रपरा | ६ | २५ |
| प्राणाख्य | १ | ४३ |
| प्राणि | १ | २७ |
| प्रातः | १ | ३७ |
| प्रिय | ४ | ३२ |

( ब )

| | | |
|---|---|---|
| बं | २ | ३ |
| बदरीनाथ | १; ७ | २; १९ |
| बन्धक | १ | ४८ |
| बहुरूपा | ४ | ३६ |
| बादिलान्त | २ | २ |
| बालार्क | ४ | २ |
| बाहुल | ५ | २० |
| बाह्येन्द्रिय | ४ | १०, १२ |
| बिन्दु | ४ | ३४ |
| बिन्दुरूप | ७ | १ |
| बिन्दुसर्ग | १ | ३० |
| बिम्ब | ४ | ७ |
| बीज | १; २; ४; ५; ७ | ७; ३; ३, २; १४ |
| बुद्धि | १; ४ | ७९; २०, २३, २९; ११ |
| बुद्धिमय | ४ | १५ |
| बुध | ६; ७ | ५; ९ |
| बैखरी | १; ६ | ५६; ११ |
| ब्रह्म | १; २; ७ | २३, ३५; १४, २३; १५, १६, १७ |

---

## चक्रकौमुदी हस्तलेख मतानुसार स्थान-दलतत्त्व-वर्णादि स्वरूप

| चक्रनाम | स्थान | दलसंख्या | दलवर्णगणना-वर्ण | तत्त्व-तत्त्वगुण | तत्त्ववर्ण | मण्डल-आकार | बीज-बीजवाहन | देवता-वाहन | शक्ति-वर्ण | लिङ्ग |
|---|---|---|---|---|---|---|---|---|---|---|
| मूलाधार (प्रथमः परिच्छेदः) | गुदलिङ्गान्तर | ४ | व श ष स स्वर्णाभ | पृथ्वी-गन्ध | पीत | चतुष्कोण | लँ-गज (ऐरावत ?) | ब्रह्मा-हंस | डाकिनी — | स्वयम्भू (त्रिकोणस्थ |
| स्वाधिष्ठान (द्वितीयः परिच्छेदः) | लिङ्गमूल | ६ | ब भ म य र ल सिन्दूराभ | जल-रस | श्वेत | अर्द्धचन्द्राकार पद्मद्वयलांछित | वँ - मकर | विष्णु-गरुड | राकिनी नीलवर्ण | — |
| मणिपूर (तृतीयः परिच्छेदः) | नाभिमूल | १० | ड ढ ण त थ द ध न प फ नील | वह्नि-रूप | रक्त (नवीन भानुवत्) | त्रिकोण (स्वस्तिकान्वित) | रँ - अज (मेष ?) | रुद्र-वृषभ | लाकिनी सूर्यवत् | — |
| अनाहत (चतुर्थः परिच्छेदः) | हृदय | १२ | क ख ग घ ङ च छ ज झ ञ ट ठ वालार्कवत् | वायु-स्पर्श | धूम्र | षट्कोण | यँ - मृग | ईश्वर-(विराट्) | काकिनी पीतवर्णा | ज्वालालिङ्ग (बाण ?) |
| विशुद्ध (पञ्चमः परिच्छेदः) | कण्ठ | १६ | अ आ इ ई उ ऊ ऋ ॠ लृ ॡ ए ऐ ओ औ अं अः — | आकाश-शब्द | श्वेत (विद्युप्रभ) | वृत्ताकार | हँ - गज | शङ्कर-(विश्वनाथ) | शाकिनी — | — |
| आज्ञा (षष्ठः परिच्छेदः) | भ्रुवोर्मध्य | २ | ह क्ष | मनस् | शुभ्र | त्रिकोण | — | सच्चिदानन्द | हाकिनी चन्द्रकान्तिवर्ण | — |
| सहस्रार (सप्तमः परिच्छेदः) | शिरस् | १००० एक सहस्र | — | — | रक्त | शून्य | — | परब्रह्म | — | — |

—:o:—

# परिशिष्टम् (३)

## ( षट्चक्रस्य विशिष्टं विवरणम् )

### मूलाधारचक्रस्थ पद्मदलतत्त्व

(२८ पृथ्वीतत्त्व • २८ शिवशक्तितत्त्व)

१. महाभूत
(क) पृथ्वी
(ख) जल
(ग) तेज
(घ) वायु
(ङ) आकाश

२. तन्मात्रा
(क) गन्धतन्मात्रा
(ख) रसतन्मात्रा
(ग) रूपतन्मात्रा
(घ) स्पर्शतन्मात्रा
(ङ) शब्दतन्मात्रा

३. ज्ञानेन्द्रिय
(क) त्वक्
(ख) चक्षु
(ग) श्रोत्र
(घ) घ्राण
(ङ) जिह्वा

४. कर्मेन्द्रिय
(क) वाक्
(ख) पाणि
(ग) पाद
(घ) पायु
(ङ) उपस्थ

५. अन्तःकरण
(क) मन
(ख) बुद्धि
(ग) चित्त
(घ) अहङ्कार

६. काल
७. प्रकृति
८. पुरुष
९. महत्

### शरीरस्थ १० अग्निस्थान

| नाम | स्थान | नाम | स्थान |
|---|---|---|---|
| १—बाभ्राजक — | त्वचा | ६—बन्धक — | मज्जा |
| २—रञ्जक — | असृक् | ७—द्रावक — | शुक्र |

## चक्रकौमुदी हस्तलेख मतानुसार स्थान-दलतत्त्व-वर्णादि स्वरूप

| चक्रनाम | स्थान | दलसंख्या | दलवर्णगणना-वर्ण | तत्त्व-तत्त्वगुण | तत्त्ववर्ण | मण्डल-आकार | बीज-बीजवाहन | देवता-वाहन | शक्ति-वर्ण | लिङ्ग |
|---|---|---|---|---|---|---|---|---|---|---|
| मूलाधार (प्रथमः परिच्छेदः) | गुदलिङ्गान्तर | ४ | व श ष स स्वर्णाभ | पृथ्वी-गन्ध | पीत | चतुष्कोण | लँ-गज (ऐरावत ?) | ब्रह्मा-हंस | डाकिनी — | स्वयम्भू (त्रिकोणस्थ) |
| स्वाधिष्ठान (द्वितीयः परिच्छेदः) | लिङ्गमूल | ६ | ब भ म य र ल सिन्दूराभ | जल-रस | श्वेत | अर्द्धचन्द्राकार पद्मद्वयलांछित | वँ - मकर | विष्णु-गरुड | राकिनी नीलवर्ण | — |
| मणिपूर (तृतीयः परिच्छेदः) | नाभिमूल | १० | ड ढ ण त थ द ध न प फ नील | वह्नि-रूप | रक्त (नवीन भानुवत्) | त्रिकोण (स्वस्तिकान्वित) | रँ - अज (मेष ?) | रुद्र-वृषभ | लाकिनी सूर्यवत् | — |
| अनाहत (चतुर्थः परिच्छेदः) | हृदय | १२ | क ख ग घ ङ च छ ज झ ञ ट ठ वालार्कवत् | वायु-स्पर्श | धूम्र | षट्कोण | यँ - मृग | ईश्वर-(विराट्) | काकिनी पीतवर्णा | ज्वालालिङ्ग (वाण ?) |
| विशुद्ध (पञ्चमः परिच्छेदः) | कण्ठ | १६ | अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ अं अः — | आकाश-शब्द | श्वेत (विद्युप्रभ) | वृत्ताकार | हँ - गज | शङ्कर-(विश्वनाथ) | शाकिनी — | — |
| आज्ञा (षष्ठः परिच्छेदः) | भ्रुवोर्मध्य | २ | ह क्ष | मनस् | शुभ्र | त्रिकोण | — | सच्चिदानन्द | हाकिनी चन्द्रकान्तिवर्ण | — |
| सहस्रार (सप्तमः परिच्छेदः) | शिरस् | १००० एक सहस्र | — | — | रक्त | शून्य | — | परब्रह्म | — | — |

—:o:—

# परिशिष्टम् (३)

## ( षट्चक्रस्य विशिष्टं विवरणम् )

### मूलाधारचक्रस्थ पद्मदलतत्त्व

(२८ पृथ्वीतत्त्व • २८ शिवशक्तितत्त्व)

१. महाभूत
- (क) पृथ्वी
- (ख) जल
- (ग) तेज
- (घ) वायु
- (ङ) आकाश

२. तन्मात्रा
- (क) गन्धतन्मात्रा
- (ख) रसतन्मात्रा
- (ग) रूपतन्मात्रा
- (घ) स्पर्शतन्मात्रा
- (ङ) शब्दतन्मात्रा

३. ज्ञानेन्द्रिय
- (क) त्वक्
- (ख) चक्षु
- (ग) श्रोत्र
- (घ) घ्राण
- (ङ) जिह्वा

४. कर्मेन्द्रिय
- (क) वाक्
- (ख) पाणि
- (ग) पाद
- (घ) पायु
- (ङ) उपस्थ

५. अन्तःकरण
- (क) मन
- (ख) बुद्धि
- (ग) चित्त
- (घ) अहङ्कार

६. काल

७. प्रकृति

८. पुरुष

९. महत्

### शरीरस्थ १० अग्निस्थान

| नाम | | स्थान | नाम | | स्थान |
|---|---|---|---|---|---|
| १—बाभ्राजक | — | त्वचा | ६—बन्धक | — | मज्जा |
| २—रञ्जक | — | असृक् | ७—द्रावक | — | शुक्र |

| | | | | | |
|---|---|---|---|---|---|
| ३—क्लेदक | — | माँस | ८—व्यापक | — | वायु |
| ४—निस्नेहक | — | मेद | ९—पावक | — | पित्त |
| ५—धावक | — | अस्थि | १०—श्लेष्मक | — | कफ |

## मूलाधारचक्र निस्सरित

### १० प्रधान नाड़ी

| नाम | | गन्तव्य अङ्ग | नाम | | गन्तव्य अङ्ग |
|---|---|---|---|---|---|
| १—इडा | — | मेरुमूल से शून्य चक्र पर्यन्त | ६—सुपूषा | — | दक्षिण कर्ण |
| २—पिङ्गला | — | ,, ,, | ७—यशस्विनी | — | वाम ,, |
| ३—सुषुम्णा | — | ,, ,, | ८—अलम्बुषा | — | मुख |
| ४—गान्धारी | — | वाम नेत्र | ९—शंखिनी | — | मूल देश |
| ५—हस्तिजिह्वा | — | दक्षिण नेत्र | १०—कुहू | — | लिङ्ग |

### शरीरस्थ १० वायु

| नाम | | स्थान | नाम | | स्थान |
|---|---|---|---|---|---|
| १—प्राण | — | नासाग्र | ६—नाग | — | उद्गिरण |
| २—अपान | — | अध: स्थान | ७—कूर्म | — | उन्मीलन |
| ३—समान | — | मध्यदेह | ८—कृकल | — | क्षुधा |
| ४—उदान | — | कण्ठदेश | ९—देवदत्त | — | विजृम्भण |
| ५—व्यान | — | सम्पूर्णदेह | १०—धनञ्जय | — | पोषण |

## मूलाधारचक्रस्थ शिवशक्ति

| शिवस्वरूप | शक्तिस्वरूप |
|---|---|
| १. उड्डीश्वर | उड्डीश्वरी |
| २. जलेश्वर | जलेश्वरी |
| ३. कामेश्वर | कामेश्वरी |
| ४. पूर्णेश्वर | पूर्णेश्वरी |
| ५. श्रीकण्ठ | गगना |
| ६. अनन्त | सुरसा |

| | | |
|---|---|---|
| ७. | शङ्कर | मति |
| ८. | पिङ्गल | ईश्वरपर्यन्ता |
| ९. | नाद | डाकिनी |
| १०. | आलस्य | राकिनी |
| ११. | महानन्द | लाकिनी |
| १२. | योग | शाकिनी |
| १३. | अतीत | शाकिनी |
| १४. | पारद | हाकिनी |
| १५. | आधारेश | रक्ता |
| १६. | चक्रेश | चण्डी |
| १७. | कुरङ्गीश | करालिका |
| १८. | महध्नीश | महोच्छ्वासा |
| १९. | अनादि | विमला |
| २०. | सर्वज्ञ | मातङ्गी |
| २१. | पुमिहा | विमला |
| २२. | योगविमद | शाम्भवी |
| २३. | विद्धविमल | परा |
| २४. | समयविमल | कुलालिका |
| २५. | मित्रेश | कुलेश्वरी |
| २६. | कुब्ज | कुब्जा |
| २७. | उड्डीश | नयना ? |
| २८. | अवेश | चर्या |

## स्वाधिष्ठानचक्रस्थ पद्मदलतत्त्व

( २६ जलतत्त्व • २६ शिवशक्तितत्त्व )

१. महाभूत
   (क) पृथ्वी
   (ख) जल
   (ग) तेज
   (घ) वायु

४. कर्मेन्द्रिय
   (क) वाक्
   (ख) पाणि
   (ग) पाद
   (घ) पायु

[ आधारपद्मस्थ-डाकिनीशक्तिस्वरूपम् ]

**वसेदत्र देवी च डाकिन्यभिख्या लसद्वेदबाहूज्ज्वला रक्तनेत्रा।**
**समानोदितानेकसूर्यप्रकाशा प्रकाशं वहन्ती सदा शुद्धबुद्धेः ॥७**

---

तदङ्के च चतुर्बाहुं रक्तवर्णं शिशुं शिवे।
चतुर्वक्त्रं हंसपृष्ठे ब्रह्माणं विद्धि पार्वति ॥

इति। **मुखाम्भोजलक्ष्मीश्चतुर्भागभेद** इति। अस्य ब्रह्मणश्चतुर्भिर्भागैर्यो भेदोऽवयवेषु विशेषः, सैव मुखाम्भोजलक्ष्मीरित्यर्थाद् ब्रह्मणश्चतुर्मुखत्वमायातम्। यद्वा—मुखे अम्भोजलक्ष्मीर्यस्य, तथा चतुर्भिर्भागैरर्थान् मुखावच्छेदे भेदो यस्येति विशेषणद्वयम्। "चतुर्भागवेद" इति पदेऽभेदरूपेण पूर्वप्रकारार्थः।

अत्र [ केचिद् ] ब्रह्मणो हस्तेऽस्त्रानभिधानेऽपि—

दण्ड-कमण्डलु-धरामक्षसूत्राभयं तथा।
ध्यायेत् तां रक्तवर्णाञ्च ब्राह्मीं कृष्णाजिनोज्ज्वलाम् ॥ इति

**विश्वसारतन्त्रोक्तब्राह्मीध्याने** ब्रह्मशक्तिहस्ते दण्डकमण्डल्वक्षसूत्राभयदर्शनादत्रापि तथा कल्प्यते, 'यस्य देवस्य यद्रूपमि'त्यादिना सप्तशतीस्तोत्रे शिवशक्त्योरेकास्त्रदर्शनादिति वदन्ति।

वस्तुतस्तु—अभय-वरद-हस्तं कुण्डिकामक्षमालाम्।
दधतममलभूषं चिन्तयेदादिमूर्त्तिम् ॥

इति **यामलोक्तकर्मान्तरीयध्यानप्राप्ताभयवरादीनि** ध्येयानि। स्पष्टमन्यत् ॥ ६ ॥

**आधारपद्मे** डाकिनीशक्तिस्थितिमाह—वसेदिति। अत्र पद्मे डाकिनी नाम्नी **देवी वसेदित्यन्वयः**। सा किम्भूता? **सदा** सर्वस्मिन् काले **शुद्धबुद्धे**-स्तत्त्वज्ञानस्य **प्रकाशं वहन्ती** तत्त्वज्ञानसम्पादयित्रीत्यर्थः। तथाच योगाङ्गत्वेनाऽत्र तां ध्यात्वा तत्त्वज्ञानमाप्नोतीति भावः। इयं देवी चक्राधिष्ठात्री। तदुक्तम्—

वक्त्रं व-श-ष-सोपेतं डाकिन्या समधिष्ठितम् ॥

इति। तथा—डाकिनी राकिणी चैव लाकिनी काकिनी तथा।
शाकिनी हाकिनी चैव क्रमात् षट्पङ्कजाधिपाः ॥

---

वसेदत्रेति। अत्रैव चक्रे डाकिन्यभिख्या नाम यस्याः, सा वसेत्। "अभिख्या नामशोभयो"रित्यमरः। लसद्भिः प्रकाशद्भिश्चतुर्बाहुभिरुज्ज्वला रक्ताकारनेत्रा च सा देवी। समानोदितेति। एककालीनोदितानामनेकसूर्याणामिव प्रकाश उदयो यस्याः सा तथा। सर्वदा शुद्धबुद्धीनां प्रकाशं वहन्ती, परमार्थविषयीभूतां सदृशं विभावयन्ती तद्भावान्वितानां ज्ञाननेत्रं ददातीत्यर्थः ॥७

[ मूलचक्रकर्णिकास्थ-त्रिकोणस्वरूपम् ]

**वज्राख्या-वक्त्रदेशे विलसति सततं कर्णिकामध्यसंस्थं**
**कोणं तत् त्रैपुराख्यं तड़िदिव विलसत्कोमलं कामरूपम् ।**

इति । अस्या ध्यानविशेषमाहाऽन्यत्र—

रक्ताक्षीं रक्तवर्णां पशुजन-भयकृच्छूलखट्वाङ्गहस्तां
वामे खड्गं दधानां चषकमपि सुधापूरितं चैकवक्त्राम् ।
अत्युग्रामुग्रदंष्ट्रामरिकुलमथनीं पायसान्ने प्रसक्तां
मूलाधारेऽमृतार्थे परिवृतवपुषं डाकिनीं चिन्तयेत् ताम् ॥ इति ॥

तथा—सिन्दूरतिलकोद्दीप्तामञ्जनाञ्चितलोचनाम् ।
कृष्णाम्बरपरीधानां नानाभरणभूषिताम् ॥ इत्यादि—

कर्मान्तरोक्त-डाकिनीध्यान-प्राप्त-कृष्णाम्बरं ध्येयमिति । अत्र ब्रह्मादीनां षट्चक्रस्थसकल-देवानां भावभेदेनोर्ध्वाधोवक्त्रेण स्थितिचिन्तनमाह शाक्तानन्दतरङ्गिणीधृतमायातन्त्रे—

पार्वत्युवाच—

अधोवक्त्रस्थितिस्तत्र अधोभागे कथं भवेत् ।

इति प्रश्ने— महादेव उवाच—

तत् सर्वं पङ्कजं देवि सर्वतोमुखमेव च ।
प्रवृत्तिभावचिन्तायामधोवक्त्राणि चिन्तयेत् ।
निवृत्तिभावमार्गेषु सदैवोर्ध्वमुखानि च ॥ इति ॥

अन्यत् सुगमम् ॥ ७ ॥

मूलचक्रकर्णिकायां त्रिकोणं निरूप्यते—वज्राख्या-वक्त्रदेश इति । सुषुम्णाया आस्याद् द्व्यङ्गुलोर्ध्वे लिङ्गमूलादधो वज्रावक्त्रम् । तत् तु मूलाधारकमलकर्णिकामध्यस्थ-गह्वरान्तर्वर्त्ति, तत्र त्रिकोणं विलसतीत्यन्वयः । त्रिकोणं कीदृशम् ? त्रैपुराख्यमिति । त्रिकोणगर्भस्थ-कामबीजघटक-ककारमध्ये त्रिपुरसुन्दर्यधिष्ठानात् त्रैपुराख्यमिति तात्पर्यम् । तदुक्तं शाक्तानन्दतरङ्गिण्यां ककारतत्त्वकथनमुपक्रम्य—

तेषां मध्ये स्थिता देवी सुन्दरी परदेवता । इति ।

---

वज्राख्येति । अस्यैव पद्मस्य कर्णिकामध्यस्थं त्रैपुराख्यं त्रिपुरासम्बन्धीदं त्रैपुरं, तदेवाख्या नाम यस्य । चतुष्कोणं वज्राख्यनाड्याः समदेशे प्रकाशते । सर्वदैव विद्युदिव प्रकाशते कोमलं

**कन्दर्पो नाम वायुर्निवसति सततं तस्य मध्ये समन्ता-**
**ज्जीवेशो बन्धुजीवप्रकरमभिहसन् कोटिसूर्यप्रकाशः ॥ ८**

कोमलं सुस्निग्धम्। तथा कामरूपं कामं निरूप्यतेऽनुभूयते येन तादृशं, मदनागारात्मक-मित्यर्थः। अत एव—

त्रिकोणं तत् तु विज्ञेयं शक्तिपीठं मनोहरम्।

इत्युक्तम्। एतत् त्रिकोणं धराबीजस्योर्ध्वे। तदुक्तं सम्मोहने धराबीजमधिकृत्य—

वामा ज्येष्ठा तथा रौद्री त्रिरेखा च तदूर्ध्वतः। इति।

तत्त्रिकोणमध्ये कन्दर्पवायुस्थितिमाह—कन्दर्प इति। समन्तात् त्रिकोणव्यापकरूपेणे-त्यर्थः। जीवेश इति। अस्य जीवधारकत्वाज्जीवेश इत्युक्तम्। तथा हि—

कन्ददेशे वसेत् प्राणो ह्यपानो गुदमण्डले।

इत्यादि-वचने गुदमण्डलस्थ-वायोरपानत्वाभिधानात् तादृशगुदमण्डलस्थ-कन्दर्पवायोरप्य-पानांशः। ततश्च—

अपानः कर्षति प्राणं प्राणोऽपानञ्च कर्षति।
रज्जुबद्धो यथा श्येनो गतोऽप्याकृष्यते पुनः।
तथा चैतौ विसंवादे संवादे संत्यजेदिमम्॥ इति।

'विसंवादे' परस्परवैपरीत्यगमने 'एतौ' प्राणापानवायू 'तथा' कर्षाकर्षिणौ 'संवादे' अविरोधि-गमने 'इमं' देहं 'सन्त्यजेदि'त्यर्थक-तद्वचने कन्दर्पावान्तरनामकापानवायोः प्राणाकर्षकत्वेन देहधारणत्वाज्जीवधारकत्वं प्रतीयते। अतो जीवेश इत्युक्तिरिति भावः। अत एव ग्रन्थकृता दशमश्लोके * "श्वासोच्छ्वासविभञ्जनेन जगतां जीवो यया धार्यते" इत्यनेन श्वासोच्छ्वास-रूपयोः प्राणापानयोर्जीवधारकत्वं स्वयमेवोक्तम्। स्पष्टमन्यत्॥ ८॥

कामरूपपीठम्। यद्वा भक्ताभिलाषस्वरूपम्। तस्य कोणस्य मध्ये समन्ताच्चतुर्दिक्षु सर्वदैव कन्दर्पो नाम वायुर्विलसति। काम एव वायुभूतोऽत्राऽस्तीति गुरुचरणाः। तेनैव हेतुना जीवात्म-नाविर्भवतीत्याह—जीवेश इति। किम्भूतः? बन्धूकपुष्पसमूहमत्यर्थमुपहसन्निव। ततोऽप्य-त्यर्थरक्ताकारः। अतो वायू रूपवानित्यादि-सांख्यसिद्धान्तोऽपि संगच्छते। पुनः कीदृशः? कोटि-सूर्याणामिव प्रकाशो दीप्तिर्यस्येति॥ ८॥

* आदितो गणनायामस्य श्लोकस्य द्वादशसंख्यकत्वं सम्पद्यते। एवमन्यत्रापि संख्या-वैषम्यं परिलक्ष्यते। सम्भाव्यते तत्तत्स्थाने पाठादिविकृतिर्जातेति।

[ त्रिकोणमध्यस्थ-स्वयम्भुलिङ्गस्वरूपम् ]

**तन्मध्ये लिङ्गरूपी द्रुत-कनककला-कोमलः पश्चिमास्यो
ज्ञानध्यानप्रकाशः प्रथमकिसलयाकाररूपः स्वयम्भुः ।
विद्युत्-पूर्णेन्दुबिम्ब-प्रकरकर-चय-स्निग्धसन्तान-हासी
काशीवासी विलासी विलसति सरिदावर्त्तरूपप्रकारः ॥ ९**

त्रिकोणमध्ये स्वयम्भुलिङ्गस्थितिमाह—तन्मध्य इति। त्रिकोणमध्ये लिङ्गरूपो स्वयम्भुः स्वयम्भुनामकशिवलिङ्गं विलसतीत्यन्वयः। द्रुतकनककला-कोमलस्तप्तकाञ्चनावयव इव स्निग्धभाव इत्यर्थः। पश्चिमास्योऽधोमुखः। तदुक्तं कालीकुलामृते—

तत्र स्थितो महालिङ्गः स्वयम्भुः सर्वदा सुखी ।
अधोमुखः क्रियावांश्च कामबीजेन चालितः ॥ इति ॥

ज्ञानध्यानप्रकाश इति। ज्ञानध्यानाभ्यां प्रकाशो यस्य तादृश इत्यर्थः। तथा च ज्ञानेन निर्गुणरूपप्रकाशो ध्यानेन च सगुणरूपप्रकाशो यस्य स एवायं स्वयम्भुरिति भावः। दृष्टान्तेन विशेषयति—प्रथमकिसलयाकाररूप इति। अचिरोत्पन्नपत्राङ्कुरवदाकारो रूपं यस्य। तेन स्थूलमूलात् सूक्ष्माग्रपर्यन्तं चम्पककुसुममध्यस्थितशलाकावदुन्नतः श्यामवर्णश्चेत्यर्थः। तदुक्तं शाक्तानन्दतरङ्गिण्याम्—

स्वयम्भुलिङ्गं तन्मध्ये सरन्ध्रं पश्चिमाननम् ।
ध्यायेच्च परमेशानि शिवं श्यामलसुन्दरम् ॥ इति ।

यत् तु—मूलाधारे स्मरेद् दिव्यं त्रिकोणमतिसुन्दरम् ।
तस्यास्त्रिरेखामानीय अधऊर्ध्वव्यवस्थिताम् ॥
नीलतोयद-मध्यस्थां तडित्कोटि-समप्रभाम् ।

इति यामलवचने कुण्डलिन्या नीलतोयदमध्यस्थविशेषणेन स्वयम्भुलिङ्गस्य नीलवर्णत्वमायातम्। तन् नीलश्यामयोरेकपर्यायत्वान्न विरुद्धम्। विद्युत्पूर्णेन्दुबिम्ब-प्रकरकर-चय-स्निग्धसन्तानहासीति। विद्युत्-पूर्णचन्द्रबिम्बयोर्यः प्रकृष्टकर उत्तापरहितकिरणः

तन्मध्ये इति। तत्कोणस्य किञ्चिदुपरि लिङ्गरूपी स्वयम्भुर्भावरूपेण तिष्ठति। कीदृशः? द्रुता या कनककला वह्निस्थीभूता तस्या इव कोमलः। पश्चिमास्योऽधोमुखः। ज्ञानध्यानास्ययोगाभ्यां प्रकाश उदयो यस्य। नवीनपल्लवाकारस्येव रूपं यस्य। विद्युत्पूर्णेन्दुबिम्बसमूहानां करवृन्दस्निग्धसमूहस्येव हास्यं सविशेषो यस्य। तत्स्थानमपि काशी। विलासी विलसितुं शीलमस्य। सरिदावर्त्तरूपः प्रकार आकृतिर्यस्य, अतिचञ्चलत्वात्। एवम्भूतः सन् विलसति ॥ ९

[ स्वयम्भुलिङ्गस्थ-कुण्डलिनीशक्तिस्वरूपम् ]

तस्योर्ध्वे बिसतन्तुसोदरलसत्सूक्ष्मा जगन्मोहिनी
ब्रह्मद्वारमुखं मुखेन मधुरं संछादयन्ती स्वयम्।
शङ्खावर्त्तनिभा नवीनचपलामालाविलासास्पदा
सुप्ता सर्पसमा शिवोपरि लसत्सार्द्धत्रिवृत्ताकृतिः ॥ १०

---

तत्तुल्यकिरणसमूहेन मृदुप्रवाहविशिष्टप्रकाशोऽस्याऽस्तीत्यर्थः। काशीवासो विलासीति। अत्र काशीवासतुल्यवासविशिष्टः सन् विलासीत्यर्थः। तेन यथा काशीवासे सुखं भुनक्ति तद्वदत्रापीति भावः। अथवा विलास उल्लासः कामप्रफुल्लभाव इति यावत्, तद्विशिष्ट इत्यर्थः। "कामबीजेन चालित" इति वचनात्। अयं स्वयम्भुः काशीवासी। एतेनास्य विश्वेश्वरत्वं सूचितमिति। सरिदावर्त्तरूपप्रकार इति सरिदावर्त्ते यद्रूपं तत्प्रकारः। ततश्च यथा भ्राम्यमाणनदीजलं मध्यनिम्नं तन्मध्ये किञ्चिदुन्नतं शङ्खमध्योन्नतवदिति भावः। अयं स्वयम्भुः कामबीजोपरिस्थितः। तदाह कालीकुलामृते—

किञ्जल्कोपरि शृङ्गाटः सरन्ध्रः सुमनोहरः।
तत्र स्थितो महालिङ्गः स्वयम्भुः सर्वदा सुखी।
अधोमुखः क्रियावांश्च कामबीजेन चालितः॥ इति॥

तथान्यत्र—पूर्वोक्ता डाकिनी तत्र कर्णिकायां त्रिकोणकम्।
यन्मध्ये विवरं सूक्ष्मं रक्ताभं कामबीजकम्।
तत्र स्वयम्भुलिङ्गञ्चाधोमुखालक्तकप्रभम्॥

इति मतान्तरम् ॥ ९ ॥

स्वयम्भुलिङ्गे कुण्डलिनीशक्तिस्थितिमाह—तस्योर्ध्वे इति द्वाभ्याम्। अनयोरर्थः— यया कुण्डलिन्या श्वासोच्छ्वासविभञ्जनेन प्रवर्त्तनेन जगतां जीवो जीवात्मा धार्यते देहावच्छेदे स्थाप्यते सा देवी मत्तालिमालास्फुटं यथा स्यात् तथाकृतिरेवं वक्ष्यमाणक्रमै-

---

तस्योर्ध्वे इति। तस्य शिवस्योर्ध्वेऽध इत्यर्थः। मृणालतन्तुसदृशी शरीरकला यस्याः, एवम्भूता सा कूजन्ती कुलकुण्डलिनीति वक्ष्यमाणश्लोकेनान्वयः। यतो बिसतन्तुसदृशी, अतः सूक्ष्मा। जगतां मोहिनी महामायारूपेणेत्यर्थः। ब्रह्मद्वारमुखं मुखेन मुखकमलेन स्वयमेव सञ्छादयन्ती, सम्यक् प्रकारेणाच्छादयन्तीत्यर्थः। एतेन अमृतवर्त्मसञ्छादनं कृत्वा अमृतं पिबतीत्यर्थः। अस्तदमृतसंयोगेन तन्मुखं मधुरम्। शङ्खस्य वेष्टनाकारतुल्या। नवीनविद्युच्छ्रेणीप्रकाश एव स्थानं यस्यास्तत्सदृशीति यावत्। सुप्ता अतः सर्पतुल्या। सर्पो हि सुप्तः कुण्डलाकारो भवति। शिवस्योपरि लसन्ती प्रकाशमाना सार्द्धत्रिवृत्ता आकृतिः शरीरं यस्याः ॥ १० ॥

कूजन्ती कुलकुण्डली च मधुरं मत्तालिमालास्फुटं
वाचं कोमलकाव्य-बन्ध-रचना-भेदातिभेद-क्रमैः ।
श्वासोच्छ्वासविभञ्जनेन जगतां जीवो यया धार्यते
सा मूलाम्बुजगह्वरे विलसति प्रोद्दामदीप्तावलिः ॥ ११

वाचमर्थाज् जनयन्ती सती अम्बुजगह्वरे मूलाधारकमलकर्णिकामध्यत्रिकोणगह्वरे तस्य स्वयम्भुलिङ्गस्योर्ध्वभागे विलसतीति श्लोकद्वयस्य विशिष्टान्वितार्थः। बिसतन्तुसोदरलसत्सूक्ष्मा मृणालसूत्रतुल्यसूक्ष्मेत्यर्थः। जगन्मोहिनी जगतां मायारूपिणीत्यर्थः। ब्रह्मद्वारमुखं स्वयम्भुलिङ्गच्छिद्रं मधुरं मृदु यथा स्यात् तथा स्वमुखेन संछादयन्तीत्यर्थः। नवीनचपलामालाविलासास्पदेति। सर्वेषां नवीनत्वे प्रकाशाधिक्यदर्शनादत्र नवीनोत्कीर्त्तनमधिकप्रकाशप्राप्त्यर्थम्। ततश्चातिप्रकाशितविद्युन्मालानां विलासस्य स्थिरतरकौतूहलवासस्यास्पद इत्यर्थात् स्थिरतरातिप्रकाशितविद्युत्समूहप्रकाशतुल्य-प्रकाशवतीति पर्यवसितम्। वाक्यजननक्रममाह—कोमलकाव्यबन्धरचनाभेदातिभेदक्रमैरिति। कोमलकाव्यं मृदुशब्दघटित-रूपगुणरसादि-वर्णनात्मक-वाक्यम्। बन्धः पद्मबन्धाश्वबन्धादि-चित्रकाव्यम्। रचना तदतिरिक्तगद्यपद्यात्मक-वाक्यम्। भेदस्तेषां विशेषः। अतिभेदस्तदितरसंस्कृतवाक्यसमुदायः। तयोर्यः क्रमः शास्त्रव्यवहारानुरूपरीतिः। तादृशीभी रीतिभिर्वाचं जनयन्तीति परिष्कृतार्थः, कुण्डलिन्याः संस्कृतप्राकृतविशेषाविशेषयावद्वाक्यजनयित्रीत्वात्। तदाह शारदायाम्—

भिद्यमानात् पराद् बिन्दोरव्यक्तात्मा रवोऽभवत्।
तत् प्राप्य कुण्डलीरूपं प्राणिनां देहमध्यगम्।
वर्णात्मनाविर्भवति गद्यपद्यादिभेदतः ॥ इति ॥

"गद्यपद्यादी"त्यादिपदाद् यावद् वाक्यं गृह्यते। व्यक्तमाह कादिमते—

स्वात्मेच्छाशक्तिघातेन प्राणवायुस्वरूपतः।
मूलाधारे समुत्पन्नः पराख्यो नाद उत्तमः ॥
स एव चोर्ध्वतां नीतः स्वाधिष्ठानविजृम्भितः।
पश्यन्त्याख्यामवाप्नोति तथैवोर्ध्वं शनैः शनैः ॥

कूजन्तीति। सा कुण्डलिनी मधुरं यथा स्यात् तथा शब्दं कुर्वन्तीत्यर्थः। एतेन लब्धध्वन्यात्मकः शब्दो भवति। तत्र स एव शब्दः कण्ठताल्वाद्यभिघातेन वर्णात्मकत्वेन परिगण्यते

अनाहते बुद्धितत्त्वसमेतो मध्यमाभिधः ।
तथा तयोरूर्ध्वगतो विशुद्धौ कण्ठदेशतः ॥
वैखर्याख्यस्ततः कण्ठशीर्षताल्वोष्ठदन्तगः ।
जिह्वामूलाग्रपृष्ठस्थस्तथा नासाग्रतः क्रमात् ॥
कण्ठताल्वोष्ठकण्ठस्थः कण्ठौष्ठद्वयतस्तथा ।
समुत्पन्नान्यक्षराणि क्रमादादिक्षकावधि ॥ इति ॥

अलं विस्तरेण । कुण्डलिनीध्यानान्तरमाहाऽन्यत्र—

ध्यायेत् कुण्डलिनीं देवीं स्वयम्भुलिङ्गवेष्टिनीम् ।
श्यामां सूक्ष्मां सृष्टिरूपां सृष्टिस्थितिलयात्मिकाम् ।
विश्वातीतां ज्ञानरूपां चिन्तयेदूर्ध्ववाहिनीम् ॥

तथा—ध्यायेत् कुण्डलिनीं देवीमिष्टदेवस्वरूपिणीम् ।
सदा षोड़शवर्षीयां पीनोन्नतपयोधराम् ॥
नवयौवनसम्पन्नां सर्वाभरणभूषिताम् ।
पूर्णचन्द्रप्रभां रक्तां सदा चञ्चललोचनाम् ॥ इति ॥

"रक्तामि"ति सुन्दरीविषये ज्ञेयमिति शाक्तानन्दतरङ्गिणीकारः । वस्तुतस्तु सर्वदेवताविषये एव कुण्डलिनी रक्तवर्णत्वेन ध्येया न तु श्यामवर्णत्वेन, प्रायः सर्वतन्त्रे सर्वसंग्रहे च कुण्डलिन्यास्तड़िदाकारत्वकथनात् । "श्यामामि"त्यनेन—

शीतकाले भवेदुष्णा चोष्णकाले च शीतला ।
प्रतप्तकाञ्चनाभा सा श्यामा स्त्री परिकीर्त्तिता ॥

इत्येतद्वचनाक्रान्तत्वं ज्ञापितम् । न तु श्यामवर्णत्वमतः सर्वशास्त्रसामञ्जस्यमिति । चक्रभेदनात् पूर्वं ब्रह्मद्वारमध्ये कुण्डलीध्यानमाह कङ्कालमालिन्याम्—

कोटिचन्द्रप्रतीकाशां परंब्रह्मस्वरूपिणीम् ।
चतुर्भुजां त्रिनेत्राञ्च वराभयकरां तथा ॥
तथा पुस्तकवीणाञ्च धारिणीं सिंहवाहिनीम् ।
गच्छन्तीं स्वासनं भीमां नानारूपधरात्मिकाम् ॥ इति ॥ १०—११ ॥

---

इत्याह । कोमलकाव्यबन्धग्रथनाथा यो भेदो नानाप्रबन्धो गौड़ी वैदर्भी पाञ्चाली कवितारीतिक्रमस्तस्य भेदस्य शृङ्गारादिनवरसबन्धेन योऽतिभेदस्तत्क्रमैः । मत्तभृङ्गमालेव स्फुटं यथा स्यात्तथा वाचश्च कूजन्ती तस्या एव वैखरीत्वमायातमिति । यया देव्या च श्वासोच्छ्वासविभञ्जनेन जगतां जीवो धार्यते सा मूलाधारपद्मकुहरे प्रकाशते । प्रोद्दामदीप्ता बलिर्यस्याः, दीप्तमिति भावे क्तः ॥११

[ कुण्डलिनीमध्यस्थ-परशक्तिस्वरूपम् ]

तन्मध्ये परमा कलाऽतिकुशला सूक्ष्मातिसूक्ष्मा परा
नित्यानन्द-परम्परातिविगलत्-पीयूषधारा-धरा ।
ब्रह्माण्डादिकटाहमेव सकलं यद्भासया भासते
सेयं श्रीपरमेश्वरी विजयते नित्यप्रबोधोदया ॥ १२ ॥

स्वयम्भुलिङ्गवेष्टितकुण्डलिन्यूर्ध्वे समसूत्रपातन्यायेन दण्डाकारेण लिङ्गाग्रपर्यन्तस्थितां परशक्तिमाह—तन्मध्य इति । अस्यार्थः—यद्भासया यस्याः शक्त्या दीप्त्या ब्रह्माण्डादि तत्कटाहश्च भासते प्रकाशते, सेयं श्रीपरमेश्वरी तन्मध्ये स्वयम्भुलिङ्गे कुण्डलिनीवेष्टनोर्ध्वे विजयते, सर्वान् वशवर्त्तिनः कृत्वा तिष्ठतीत्यर्थः । सा किम्भूता ? परमाऽघटनघटनपटीयसी माया । कला नादशक्तिरूपा कुण्डलिन्यभेदशरीरिणी । तदुक्तं शाक्तानन्दतरङ्गिण्याम्—कला कुण्डलिनी सैव नादशक्तिः शिवोदिता । इति ।

तथान्यत्र— तस्योपरि मनो ध्यायेच्चित्कलामी-समाश्रिताम् ।
प्रदीपकलिकाकारां कुण्डल्यभेदरूपिणीम् ॥

इति । तथा कालिकाश्रुतौ—

तस्याः शिखाया मध्ये तु अध ऊर्ध्वे[1] व्यवस्थिताम् ।
स ब्रह्मा स शिवः शूरः स एव परमेश्वरः ॥
स एव विष्णुः स प्राणः स कालाग्निः स चन्द्रमाः ।
इति कुण्डलिनीं ध्यात्वा सर्वपापैः प्रमुच्यते ॥

इति । तस्याः शिखाया मध्ये त्रिवलयस्योर्ध्वे व्यवस्थितां परमां कलां नादरूपामित्यर्थ इति ललितारहस्यकारः । अतिकुशला सृष्टिसम्पादनयोग्यतारूपकौशलवतीत्यर्थः । नित्या-

तन्मध्य इति । तस्याः कुण्डलिन्या मध्ये परमा कला आस्ते । परं परमात्मानं मीयतेऽनयेति परमा । अत्यर्थं कुशलं यतः साऽतिकुशला । सूक्ष्मा, यतस्तस्या मध्ये परा पश्यन्ती मध्यमा वैखरी । समाधिरूपा नित्यमानन्दपरम्परा यस्याः सा तथा । अत्यर्थविद्युन्मालेव लसन्ती प्रकाशमाना दीधितिस्तेजो यस्याः । ब्रह्माण्डस्य आदिकटाहपर्यन्तं यस्याः कलाया भासया सकलं भासते । यद्वा शरीरस्यापि ब्रह्माण्डसंज्ञा, "ब्रह्माण्डे ये गुणाः सन्ति ते हि सन्ति कलेवरे" इति प्रामाणिकोक्तत्वात् । सेयं श्रीपरमेश्वरी विजयते जयतीत्यर्थः । नित्यज्ञानस्योदयो यतः ॥ १२

[1] परमोर्ध्वं इति पाठान्तरम् ।

[ मूलाधारे कुण्डलिनीशक्तिचिन्तनफलम् ]

**ध्यात्वैतन्मूलचक्रान्तर-विवर-लसत्-कोटिसूर्य-प्रकाशां**
**वाचामीशो नरेन्द्रः स भवति सहसा सर्वविद्याविनोदी।**
**आरोग्यं तस्य नित्यं निरवधि च महानन्दचित्तान्तरात्मा**
**वाक्यैः काव्यप्रबन्धैः सकलसुरगुरून् सेवते शुद्धशीलः ॥१३**

---

नन्दपरम्परेति। नित्यानन्दात् परम्परा परपरक्रमसम्बन्धो यस्या इत्यर्थः। ततश्च नित्यानन्दो निर्गुणं ब्रह्म, तस्मात् सगुणाविर्भावः, सगुणाच्छक्तिः, शक्तेर्नादो, नादाद् बिन्दु- बिन्दोः कुण्डलिनी कुण्डलिन्यवान्तररूपेयं चित्कलेत्येवंप्रकारेण नित्यानन्दपरम्परेति भावः। यद्वा नित्यानन्दपरम्परातिविगलत्पीयूषधाराधरेत्येकविशेषणम्। नित्यानन्दात् परम्परया नित्या- नन्दात् परं बिन्दुः, तत्परमाज्ञाचक्रं, तत्परं विशुद्धचक्रमेवंक्रमेण मूलाधारपर्यन्तमतिविगलन्ती या पीयूषधारा सा ध्रियते गृह्यते यया सेत्यर्थः। स्पष्टमन्यत् ॥ १२ ॥

मूलाधारे कुण्डलिनीचिन्तनफलमाह—ध्यात्वैतदिति। मूलचक्रेति। "मूलमाधार- षट्कानां मूलाधारं ततो विदुरि"ति वचनान् मूलाधारचक्रं, तस्यान्तरे मध्ये यद् विवरं गह्वरं, तस्मिन् लसत्कोटिसूर्यप्रकाशामित्यर्थः। सकलसुरगुरूनिति। "सिंहशार्दूलनागाद्याः पंसि श्रेष्ठार्थवाचका" इत्यमरोक्त्या सुरगुरुवर्त्तिना गुरुशब्देन सुरश्रेष्ठा ब्रह्मविष्णुशिवादयः प्रतीयन्ते। ततश्च तदादिदेवान् सेवते स्तवादिवाक्यैस्तोषयतीत्यर्थः। स्पष्टमन्यत्।

तदयं महावाक्यार्थनिर्णयः। मूलाधारचक्रं चतुर्दलं रक्तवर्णम्। व-श-ष-सेति स्वर्णाभचतुर्वर्णयुक्तदलकर्णिकायां धरामण्डलं चतुष्कोणमष्टशूलावृतं पीतवर्णम्। तन्मध्याधो धराबीजं चतुर्भुजमैरावतारूढं पीतवर्णं वज्रहस्तम्। धराबीजबिन्दुमध्ये शिशुरूपो ब्रह्मा रक्तवर्णश्चतुर्भुजो दण्ड-कमण्डल्वक्षसूत्राभयहस्तश्चतुर्मुखः। तत्कर्णिकायां रक्तपद्मोपरि चक्राधिष्ठात्री डाकिनीशक्ती रक्तवर्णा चतुर्भुजा शूल-खट्वाङ्ग-खड्ग-चषक-हस्ता। कर्णिका- मध्ये विद्युदाकारत्रिकोणम्। तन्मध्ये कामवायुः कामबीजञ्च रक्तवर्णम्। तदुपरि

---

ध्यात्वैतदिति। एतत् मूलाधारस्थं सर्वं ध्यात्वा नर एवमेवं भवति। तत्क्रमेणाह— वाचामीशो नराणामिन्द्रतुल्यः सहसा सर्वविद्याविनोदी च भवति। तस्य नित्यमेवारोग्यम्। निरवधि अहर्निशमेव। महानन्द ईश्वरस्तच्चिन्ताविशिष्टोऽन्तरात्मा यस्य, एवं भवतीत्यर्थः। एतत् कीदृशं ? मूलाधारमध्यप्रकाशम्। कोटिसूर्याणां प्रकाशो यस्य तत्तथा। स जनः काव्यप्रबन्धैर्वाक्यैः सकलसुरगुरुं शुद्धशीलः सन् सेवते, वाक्पतिसदृशो भवतीत्यर्थः ॥ १३ ॥ [ अस्मिन् पद्ये सूर्य- प्रकाशमिति गुरुमिति च पाठः ]

[ स्वाधिष्ठानचक्रस्वरूपम् ]

सिन्दूर-पूर-रुचिरारुण-पद्ममन्यत्
सौषुम्णमध्यघटितं ध्वजमूलदेशे ।
अङ्गच्छदैः परिवृतं तड़िदाभवर्ण-
र्वाद्यैः सबिन्दुलसितैश्च पुरन्दरान्तैः ॥ १४

[ अम्भोजमण्डलस्थितिवर्णनम् ]

तस्यान्तरे प्रविलसद् विशद-प्रकाश-
मम्भोजमण्डलमथो वरुणस्य तस्य ।

---

स्वयम्भुलिङ्गः श्यामवर्णः । तस्योर्ध्वे कुण्डलिनीशक्तिः सार्द्धत्रिवलयाकारा । तदूर्ध्वे लिङ्गाग्रे चित्कला दण्डाकारेण स्थितेति प्रथमप्रकरणम् ॥ १३ ॥

मूलाधारचक्रं निरूप्य स्वाधिष्ठानचक्रं निरूपयति—सिन्दूरपूरेत्यादि-पञ्चभिः । प्रथमस्यायमर्थः—ध्वजमूलदेशे लिङ्गमूलस्थाने अन्यदाधारचक्रभिन्नं सिन्दूरपूररुचिरारुणपद्मं सिन्दूरस्य पूरणेन यथा मनोहररक्तवर्णं तद्वद् रक्तवर्णपद्मम् । आस्ते इति क्रियासमाहारेणाऽन्वयः । पद्मं विशेषयति—सौषुम्णमध्यघटितमिति । सुषुम्णानाड़ीमध्ये निर्मितम् । तथा अङ्गच्छदैः परिवृतं षट्पत्रयुक्तम् । पुरन्दरान्तैरिति । पुरन्दरो लकारस्तदन्तैर्वाद्यैस्तेन व-भ-म-य-र-लेति षड्भिस्तड़िदाभवर्णैर्दलवत् परिवृतस्तेन दलावच्छेदे वर्णयोगः प्रतीतः । वर्णान् विशेषयति—सबिन्दुलसितैरिति । बिन्दुना सह वर्त्तमानाः सबिन्दवः, लसिताः प्रकाशिताः । सबिन्दवश्च ते लसिताश्चेति तैरित्यर्थः । ततश्चात्र विशेष्य-विशेषणभावकल्पने विशेषणीभूतबिन्दौ लसितत्वकारणत्वं प्रतीयते । "सुरापः पतती"त्यत्र कर्तृविशेषण-सुरापाने पतनकर्तृत्ववदिति । यद्वा बिन्दूनां लसितं बिन्दुलसितं बिन्दुप्रकाशस्तेन सह वर्त्तमानैर्वाद्यैरित्यर्थः ॥ १४ ॥

एतत्पद्मकर्णिकायामम्भोजमण्डलस्थितिमाह—तस्यान्तर इति । तस्य पद्मस्याऽन्तरे मध्येऽम्भोजमण्डलम् अम्भोजाकारमण्डलं प्रविलसत् प्रकाशमानम् । तत्

---

सिन्दूरेति । अन्यत् स्वाधिष्ठानाख्यं लिङ्गमूलसमदेशे आस्ते । सुषुम्णामध्यघटकीभूतम् । सुषुम्णाशब्दात् स्वार्थे अणिति केचित् । तद् दूष्यन् । वस्तुतस्तु सुषुम्णाया इदं ब्रह्मनाड्यादि तन्मध्यभूतं पद्मं, तस्येदमित्यर्थे अण् । कीदृशम् ? सिन्दूररुचिरतयाऽरुणवर्णम् । पुनः कीदृशम् ? अङ्गच्छदैः षड्दलैरावृतम् । कीदृशैः ? तड़िदिवाभा वर्णो येषां तथोक्तैः । पुरन्दरो लकारस्तदन्तैर्बिन्दुना परिलसितैरेवम्भूतैर्दलैरित्यर्थः । एतेन वर्णानां सर्वपद्मेषु दलमध्यवर्त्तित्वमायातम् ॥ १४

तस्यान्तर इति । तस्य पद्मस्य मध्ये अम्भसि जातं वरुणस्य मण्डलमास्ते । अथो

अर्द्धेन्दुरूपलसितं शरदिन्दुशुभ्रं
वङ्कारबीजममलं मकराधिरूढम् ॥ १५

[ वरुणबीजबिन्दुमध्यस्थ-विष्णुस्वरूपम् ]

तस्याङ्कदेश-कलितो हरिरेव पायात्
नील-प्रकाश-रुचिर-श्रियमादधानः ।
पीताम्बरः प्रथम-यौवन-गर्वधारी
श्रीवत्स-कौस्तुभ-धरो धृतवेदबाहुः ॥ १६

---

किम्भूतम् ? विशदप्रकाशं शुक्लवर्णम् । पुनः किम्भूतम् ? अर्द्धेन्दुरूपलसितमर्द्धचन्द्र-युक्तमित्यर्थः । इदं जलमण्डलम् । तदाह शारदायाम्—

अम्भोजमम्भसो भूमेश्चतुरस्रं सवज्रकम् । इत्यादि ।

एतन्मण्डललक्षणमाह राघवभट्टः—"अर्द्धचन्द्रं कृत्वा तदुभयभागे सरोजद्वयं कुर्यादि"ति । तदुक्तमाचार्यैः—"अब्जोपेतार्द्धेन्दुमद्बिम्बमाप्यमि"ति । मण्डलमध्ये वरुणबीजस्थितिमाह—अथो इति । तस्येति । जलाधिष्ठातृत्वेन प्रसिद्धस्येत्यर्थः । मकराधिरूढमिति । पाश-हस्तश्च । तदाह—तदन्तर्वारुणं बीजं श्वेतं मकरवाहनम् ।

पाशहस्तं तदङ्के च हरिं श्यामं चतुर्भुजम् ॥

इति । अयं वरुणबीजस्वरूपो वकारो यवर्गीयः, कुलाकुलचक्रे भूतलिपिमन्त्रे च तद्-वकारस्यैव जलबीजत्वेनाऽभिधानात् । स्पष्टमन्यत् ॥ १५ ॥

वरुणबीजस्याङ्क विष्णुस्थितिमाह—तस्याङ्क इति । अङ्के बीजमस्तकस्थबिन्दु-मध्ये । धराबीजबिन्दौ ब्रह्मणः स्थितिदर्शनादत्रापि तथा, दृष्टपरिकल्पनान्यायात् । एवं वक्ष्यमाणं सर्वत्र बोध्यम् । कलितः स्थित इत्यर्थः । नीलप्रकाशरुचिरश्रियमादधान इति । नीलज्योतिषां या मनोज्ञा शोभा तां दधान इत्यर्थः । तेन नीलतेजःपुञ्जशरीरीति यावत् । श्रीवत्स-कौस्तुभ-धर इति । तद्ध्यानमाह गौतमीये—

---

शब्दः सम्भावनायाम् । कीदृशम् ? प्रकर्षेण विलसन् निर्मलप्रकाशो यस्य तत् तथा । तस्यैव वरुणस्य । अर्द्धेन्दुरूपेण लसितं मनोज्ञम् । अत एव वङ्कारबीजम् अमलं निर्मलशरच्चन्द्र इव शुभ्रम् । मकराधिरूढं मकरो जन्तुविशेष ओङ्कार इति ख्यातस्तदधिरूढम्, कर्त्तरि क्तः । अत एवाऽम्भोज-मण्डलदर्शनात् "कमपि मणिपूरे" इति शङ्कराचार्यश्लोकस्य "मही मूलाधारे" इत्यत्र चानुपपत्तिः, तत् तु तद्व्यवसायिभिः प्रतिव्याख्यातव्यम् । वयन्तु तत्र व्यस्तसमस्ततया व्याख्यां ब्रूमः ॥ १५

तस्याङ्क इति । तस्य बीजस्य क्रोडदेशलसितो हरिर्विष्णुस्त्रिभुवनं पायात् । कीदृशः ?

[ स्वाधिष्ठानचक्रस्थ-राकिणीशक्तिस्वरूपम् ]

अत्रैव भाति सततं खलु राकिणी सा
नीलाम्बुजोदर-सहोदर-कान्तिशोभा ।
नानायुधोद्यत-करैर्लसिताङ्ग-लक्ष्मी-
र्दिव्याम्बराभरणभूषितमत्तचित्ता ॥ १७ ॥

---

कौस्तुभं हृदये रत्नं सूर्यायुतसमप्रभम् ।
तदधो वनमालाञ्च चन्द्रायुतसमप्रभाम् ॥
कौस्तुभोर्ध्वे च श्रीवत्सं चन्द्रायुतसमप्रभम् ॥ इति ॥

हरिहस्तेऽस्त्रमाह तन्त्रान्तरे—

पाशहस्तं तदङ्के च हरिं श्यामं चतुर्भुजम् ।
शङ्ख-चक्र-गदा-पद्म-धारिणं पीतवाससम् ॥ इति ॥

"पाशहस्तं" वरुणमिति पूर्वेणाऽन्वयः । अन्यत्र—"पीताम्बरं शान्तमूर्त्तिं वनमालाविभूषितम्" । इति । मूलाधारे हंसपृष्ठे ब्रह्मणः स्थितिदर्शनादत्र गरुड़ोपरि विष्णुश्चिन्तनीयः ॥ १६ ॥

एतत्पद्मे राकिणीशक्तिस्थितिमाह—अत्रैवेति स्पष्टम् । राकिणीध्यानविशेषमाह—

श्यामां शूलाब्जहस्तां डमरुकरयुतां तीक्ष्णटङ्कं वहन्ती-
मुग्रां रक्तत्रिणेत्रां कुटिलसविलसद्दन्तदंष्ट्रा१प्रभाभिः ।
दीप्तां तां२ देवदेवीं द्वितयकमलगां रक्तधारैकनासां३
शुक्लान्ने सक्तचित्तामभिमतफलदां४ राकिणीं चिन्तयेत् ताम् ॥

अत्र पद्मान्तरे राकिण्याः स्थितिदर्शनात् सर्वत्र रक्तपद्मान्तरोपरि षट्शक्तीनां स्थितिरिति बोध्यम् ॥ १७ ॥

---

नीलप्रकाशां मनोज्ञां कान्तिमाधत्ते । पीतवस्त्रः । प्रथमयौवनगर्वोद्रेकं धर्त्तुं शीलमस्य तथोक्तः । श्रीवत्सचिह्नं कौस्तुभञ्च दधातीत्यर्थः । धृताश्चत्वारो बाहवो येन स तथा ॥ १६ ॥

अत्रैवेति । अत्रैव पद्मे खलु निश्चितं सर्वदैवस्य प्रसिद्धा राकिणी आस्ते । नीलपद्म-स्योदरतुल्या शोभा यस्याः । नानास्त्रेणोद्यतकरैः प्रकाशमानाऽङ्गशोभा यस्याः सा तथा । दिव्याम्बरालङ्काराभ्यां भूषिता च मत्तं चित्तं यस्याः सा चेति तथा ॥ १७ ॥

---

१ बलिलसद्दष्टदन्त, २ दीप्तास्यां, ३ रक्तधात्वेकनाथां, ४ वित्तां मधुमदमुदितां

[ स्वाधिष्ठानचक्रचिन्तनफलम् ]

**स्वाधिष्ठानाख्यमेतत् सरसिजममलं चिन्तयेद् यो मनुष्य-**
**स्तस्याऽहङ्कार-दोषादिक-सकलरिपुः क्षीयते तत्क्षणेन ।**
**योगीशः सोऽपि मोहाद्भुत-तिमिरचये भानुतुल्यप्रकाशो**
**गद्यैः पद्यैः प्रबन्धैर्विरचयति सुधावाक्यसन्दोहलक्ष्मीः ॥ १८**

[ मणिपूरचक्रस्वरूपम् ]

**तस्योर्ध्वे नाभिमूले दशदल-लसिते पूर्णमेघ-प्रकाशे**
**नीलाम्भोजप्रकाशैरुपहितजठरे डादिफान्तैः सचन्द्रैः ।**

---

स्वाधिष्ठानपद्मादिचिन्तनफलमाह—स्वाधिष्ठानाख्यमिति । तदुक्तं—

स्वशब्देन परं लिङ्गं स्वाधिष्ठानं ततो विदुः ॥

इति । अहङ्कारदोषादीत्यादिना कामक्रोधादयो गृह्यन्ते । तेन कामादिषड्रिपवः क्षीयन्त इत्यर्थः । मोहाद्भुत-तिमिरचय इति । दुर्निवार्य-मोहान्धकार-समूहे इत्यर्थः । ततश्च मायामोहरूपान्धकारनाशाय ज्ञानरूप-सूर्यमाप्नोतीति भावः । स्पष्टमन्यत् ।

तदयं महावाक्यार्थनिर्णयः । स्वाधिष्ठानचक्रं सिन्दूरवर्णषड्दलम् । तद्दलं च तडिदाभ-सबिन्दु-ब-भ-म-य-र-लेति-षड्वर्णयुक्तम् । तत्कर्णिकायां मध्यस्थलेऽर्द्धचन्द्रयुक्ताष्टदलपद्माकारमम्भोजमण्डलं शुक्लवर्णम् । तन्मध्ये वँ इति वरुणबीजं मकराधिरूढं पाशहस्तम् । तत्क्रोडे विष्णुर्गरुडोपरिस्थितश्चतुर्भुजः शङ्ख-चक्र-गदा-पद्म-धारी पीताम्बरो वनमाला-श्रीवत्स-कौस्तुभ-धारी युवरूपः । पद्मकर्णिकायां रक्तपद्मोपरि राकिणी शक्तिः श्यामवर्णा चतुर्भुजा शूलाब्ज-डमरु-टङ्क-धरा त्रिनेत्रा कुटिलदंष्ट्रा भयङ्करी शुक्लान्नरक्तधाराभिलाषिणीति द्वितीयप्रकरणम् ॥ १८ ॥

मणिपूरचक्रं निरूपयति—तस्योर्ध्वे इत्यादि-त्रिभिः । तस्य स्वाधिष्ठानस्येत्यर्थः । **दशदललसित** इति दशदलैर्लसिते प्रकाशिते । पद्मे इति शेषः । पद्मे किम्भूते ? पूर्णमेघ-

---

स्वाधिष्ठानेति । एतत् स्वाधिष्ठानाख्यं सरसिजं यो मुनीन्द्रश्चिन्तयेत् तस्याऽहङ्कारादिदोषरूपसकलरिपवो ज्ञानप्रतिबन्धकत्वात् शुद्धज्ञानपरिपन्थिनस्तत्क्षणेनैव क्षीणा भवन्तीति । पद्मं कीदृशम् ? अमलं निर्मलम् । स योगीशश्च भवति । मोहाद्भुतान्धकारचये भानुतुल्यप्रकाशश्च भवति । स च गद्यैः संस्कृतया वाचा पद्यैः श्लोकप्रबन्धैर्नानाबन्धादिभिरमृतायमानकाव्यसमूहं श्रिये विरचयति ॥ १८ ॥

तस्योर्ध्व इति । तस्य पद्मस्योर्ध्वे नाभिमूले दशदलकमले ललिते मनोज्ञे पूर्णमेघ इव

ध्यायेद् वैश्वानरस्याऽरुणमिहिरसमं मण्डलं तत् त्रिकोणं
तद्बाह्ये स्वस्तिकाख्यैस्त्रिभिरभिलसितं तत्र वह्नेः स्वबीजम् ॥१९

[ मणिपूरचक्रस्थ-वह्निबीजवर्त्ति-रुद्रस्वरूपम् ]

ध्यायेन् मेषाधिरूढं नवतपननिभं वेदबाहूज्ज्वलाङ्गं
तत्क्रोड़े रुद्रमूर्त्तिर्निवसति सततं शुद्ध-सिन्दूर-रागः ।
भस्मालिप्ताङ्गभूषा-भरण-सितवपु-र्वृद्धरूपी त्रिनेत्रो
लोकानामिष्टदाताऽभयलसितकरः सृष्टिसंहारकारी ॥ २०

---

प्रकाशे कृष्णवर्णे । तथा डादिफान्तैः ड-ढ-ण-त-थ-द-ध-न-प-फेति-दशवर्णैरुपहितं युक्तं जठरं मध्यं यस्य तद्रूपे इत्यर्थः । सचन्द्रैरिति । चन्द्रोऽर्द्धचन्द्रो युगलाख्यवाहित्वाद् बिन्दुश्च ताभ्यां सह वर्त्तमानैर्वर्णैरित्यर्थः । वैश्वानरस्य वह्नेः । अरूणमिहिरसमं बालार्क-सदृशमित्यर्थः । स्वस्तिकाख्यैरिति । "स्वस्तिकं नाम परस्परसम्बद्धं विदिग्गतचतुर्वक्त्रं रेखाद्वयमि"ति राघवभट्टोक्तं, तत्प्रकारैस्त्रिभिः स्वस्तिकैस्त्रिकोणावच्छेदेऽभिलसितं-मित्यर्थः । अत्र वह्निमण्डले वह्निबीजं रँ ॥ १९ ॥

ध्यायेदिति । भस्मालिप्ताङ्गभूषाभरणसितवपुरिति । भस्मलेपनाङ्गभूषा-भरणाभ्यां शुक्लीकृतदेह इत्यर्थः । ध्यायेन् मेषेति । ध्याने विशेषमाहाऽन्यत्र—

मेषस्थं साक्षसूत्रञ्च शक्तिहस्तं स्मरेत् ततः ॥ इति ॥

विशेषानभिधानादन्यहस्तद्वये वराभयौ चिन्तनीयौ, ध्यानान्तरे तथा दर्शनात् । लोकानामिष्टदाता वरदातेत्यर्थः । अभयलसितकरस्तेन वराभयधारीति भावः । अत्र वृषोपरि रुद्रो ध्येयः । स्पष्टमन्यत् ॥ २० ॥

---

प्रकाशो यस्य एवम्भूते पद्मे वैश्वानरस्य वह्नेः त्रिकोणं मण्डलं ध्यायेत् । कीदृशम् ? अरुण-सूर्ययोस्तुल्यम् । पुनः कीदृशम् ? तद्बाह्ये त्रिकोणस्य बहिस्त्रिभिः स्वस्तिकाख्यैरभिलसितम् । तत्रैव वह्निमण्डले वह्नेः स्वबीजमास्ते सानुस्वारो रेफ इति । पद्मे किम्भूते ? नीलाम्भोजस्य प्रकाशो येषाम्, एवम्भूतैः सचन्द्रैर्डकारादिफकारान्तैरुपहितजठरे एतैर्वर्णैरुपशोभितजठरे, उपस्थित-मध्ये इत्यर्थः ॥ १९ ॥ [ शङ्करमते "दशदल-ललिते" इति पाठः ]

ध्यायेदिति । वह्निबीजं ध्यायेदिति पूर्वश्लोकेनाऽन्वयः । कीदृशम् ? मेषमधिरूढम् । प्रातःकालीनसूर्यतुल्यम् । चतुर्बाहुभिरुज्ज्वलाङ्गम् । तस्य बीजकोशस्याऽङ्के रुद्रमूर्त्तिर्निवसति सततमेव । कीदृशः ? शुद्धसिन्दूरस्येव रक्ताकारो यस्य । भस्मलिप्तमेवाऽङ्गभूषाभरणं तेन सितं शुभ्रं वपुर्यस्य । वृद्धाकारः । त्रीणि नेत्राणि यस्य स तथा । त्रिलोकवासिनामभीष्टदाता । अभयलसितकरः । सृष्टेः संहारकारी ॥ २० ॥

[ मणिपूरचक्रस्थ-लाकिनीशक्तिस्वरूपम् ]

**अत्रास्ते लाकिनी सा सकलशुभकरी वेदबाहूज्ज्वलाङ्गी**
**श्यामा पीताम्बराद्यैर्विविधविरचनालङ्कृता मत्तचित्ता ।**

[ नाभिपद्मचिन्तनफलम् ]

**ध्यात्वैतन् नाभिपद्मं प्रभवति नितरां संहृतौ पालने वा**
**वाणी तस्याननाब्जे निवसति सततं ज्ञानसन्दोहलक्ष्मीः ॥ २१**

---

अत्रास्त इति । विविधविरचनेति । विविधेन मणिमुक्तादियोगेन चित्रविचित्र-घटनेन विरचना यत्र तादृशमलङ्कृतं यस्या इत्यर्थः । यद्वा विविधविरचनया अलङ्-कृतमलङ्कारो धार्यते यत्रेत्यर्थः । अत्र लाकिनीध्यानविशेषमाह—

नीलां देवीं त्रिवक्त्रां त्रिनयनलसितां दंष्ट्रिणीमुग्ररूपां
वज्रं शक्तिं दधानामभय-वर-करां दक्षवामे क्रमेण ।
ध्यात्वा नाभिस्थपद्मे दशदलविलसत्कर्णिके लाकिनीं तां
मांसस्थां१ गौरभक्तोत्सुकहृदयवतीं चिन्तयेत् साधकेन्द्रः ॥

नाभिपद्मचिन्तनफलमाह—ध्यात्वैतदित्यादि । नाभिपद्मं मणिपूराख्यम् । "तत्पद्मं मणिवद् भिन्नं मणिपूरं तथोच्यते" इति गौतमीयात् । अन्यत् स्पष्टम् ।

तदयं महावाक्यार्थनिर्णयः नाभिपद्मं मेघवर्णदशदलम् । तद्दलं च नीलाभ-सबिन्दु-ड-ढ-ण-त-थ-द-ध-न-प-फेति दशवर्णयुक्तम् । तत्कर्णिकायां त्रिकोणाकारम् । त्रिकोणबहिः स्वस्तिकायुक्तं रक्तवर्णं वह्निमण्डलम् । तन्मध्ये रँ इति वह्निबीजं रक्तवर्णं मेषाधिरूढं चतुर्भुजं वज्रशक्तिवराभयधरम् । तत्क्रोडे रुद्रो वृषारूढो रक्तवर्णो द्विभुजो वराभयधारी भस्मलेपनशुक्लाभरणाभ्यां शुक्लीकृतदेहो वृद्धरूपः । पद्मकर्णिकायां रक्तपद्मोपरि लाकिनीशक्तिर्नीलवर्णा त्रिवक्त्रा त्रिनेत्रा चतुर्भुजा वज्रशक्त्यभयवरकरा घोरदंष्ट्रा रक्त-युक्तखेचरान्नमांसाभिलाषिणीति तृतीयप्रकरणम् ॥ २१ ॥

---

अत्रास्त इति । अत्रैव पद्मे सा प्रसिद्धा लाकिनी आस्ते । कीदृशी ? सर्वेषामेव शुभकरी । चतुर्भिर्बाहुभिरुज्ज्वलाङ्गी । श्यामवर्णा । पीतवस्त्राद्यैर्या नाना विरचना तया अलङ्कृता । मत्तं चित्तं यस्याः सा तथा । एतन्नाभिपद्मं मणिपूराख्यं ध्यात्वेत्यर्थः । संहारे पालने च प्रभवति समर्थो भवति । तस्याननाब्जे सततमेव वाणी विलसति । कीदृशी ? ज्ञानसमूहस्य प्राप्तिर्यतः । एतेन ब्रह्मविष्णुशिवतुल्यो भवतीत्यर्थः ॥ २१ ॥ [ अस्मिन्मते 'ज्ञानसन्दोहप्राप्ति' रिति पाठः ]

[ अनाहतपद्मस्वरूपम् ]

तस्योर्ध्वे हृदि पङ्कजं सुललितं बन्धूककान्त्युज्ज्वलं
काद्यैर्द्वादश वर्णकैरुपहितं सिन्दूररागान्वितैः ।
नाम्नाऽनाहतसंज्ञकं सुरतरुं वाञ्छातिरिक्तप्रदं
वायोर्मण्डलमत्र धूमसदृशं षट्कोणशोभान्वितम् ॥ २२

[ वायुमण्डलमध्यस्थ-वायुबीज-स्वरूपम् ]

तन्मध्ये पवनाक्षरञ्च मधुरं धूमावली-धूसरं
ध्यायेत् पाणिचतुष्टयेन लसितं कृष्णाधिरूढं परम् ।

---

हृदि पङ्कजं निरूपयति—तस्योर्ध्वे इत्यादि-षड्भिः । हृदि पङ्कजमिति । एवम्भूतं पङ्कजं हृदि ध्यायेदिति क्रियाध्याहारेणाऽन्वयः । सुललितं सुस्निग्धमित्यर्थः । काद्यैरिति । क-ख-ग-घ-ङ-च-छ-ज-झ-ञ-ट-ठेति द्वादशवर्णकैरिति बोध्यम् । तैरुपहितं युक्तमित्यर्थः । नाम्नाऽनाहतसंज्ञकमिति ।

शब्दब्रह्ममयः शब्दोऽनाहतस्तत्र दृश्यते ।
अनाहताख्यं पद्मं तन्मुनिभिः परिकीर्त्तितम् ॥

इति वचनादनाहतनामपद्ममिति तात्पर्यम् । यतः सुरतरुं कल्पतरुस्वरूपमतो वाञ्छातिरिक्तफलप्रदमिति हेतुगर्भविशेषणमिति भावः । तत्पद्मकर्णिकायां वायुमण्डलस्थितिमाह—वायोरिति ॥ २२ ॥

वायुमण्डलमध्ये वायुबीजमाह—तन्मध्य इति । पवनाक्षरं यँ इति बीजम् । मधुरं मनोहरम् । धूमावलीधूसरमिति । धूमश्रेण्यावृतदेहत्वाद् धूमधूम्रवर्णमिति भावः ।

---

तस्योर्ध्व इति । तस्य पद्मस्योर्ध्वे हृदि सुललितं मनोरमं नाम्नाऽनाहतसंज्ञकं पद्ममास्ते । कीदृशम् ? बन्धूककान्तिवदुज्ज्वलम् । सिन्दूरराग इवाञ्चितैः प्राप्तैः । ककाराद्यैः ठकारान्तैर्द्वादशसंख्यकवर्णैर्दलमध्यवर्त्तिभिरुपशोभितम् । पुनः कीदृशम् ? सुरतरुः कल्पवृक्षस्तत्तुल्यम्, अतो वाञ्छातिरिक्तप्रदं वाञ्छितस्याप्यतिददातीति तत् तथा । अयम्भावः—कल्पवृक्षाः पूर्णवाञ्छितफलदातारः, अयन्तु तदतिरिक्तं मोक्षफलञ्च ददातीत्यर्थः । अत्रैव मण्डले वायोर्मण्डलं विद्यते । कीदृशम् ? धूमसदृशम् । पुनः कीदृशम् ? षट्कोणस्य या शोभा तया अन्वितम् ॥ २२ ॥
[ एतन्मते "सिन्दूररागाञ्चितै"रिति पाठः । ]

तन्मध्य इति । तस्य मण्डलस्य मध्ये पवनाक्षरं वायुबीजम् । अक्षरपदेन बीजमुच्यते । एततुप्रकारं यस्य मण्डलं तस्यैव बीजमिति दृष्टत्वात् । कीदृशम् ? मधुरं हृदयङ्गमम् । पुनः

तन्मध्ये करुणा-निधानममलं हंसाभमीशाभिधं
पाणिभ्यामभयं वरञ्च विदधल्लोकत्रयाणामपि ॥ २३

[ पद्मकर्णिकास्थ-काकिनीशक्ति-स्वरूपम् ]

अत्रास्ते खलु काकिनी नवतडित्पीता त्रिनेत्रा शुभा
सर्वालङ्करणान्विता हितकरी सम्यग् जनानां मुदा ।
हस्तैः पाश-कपाल-शोभन-वरान् संबिभ्रती चाभयं
मत्ता पूर्णसुधारसार्द्रहृदया कङ्कालमालाधरा ॥ २४ ॥

---

कृष्णाधिरूढमिति । कृष्णसाराधिरूढमित्यर्थः । वरुणहस्ते पाशदर्शनादत्र वायुहस्तेऽङ्कुशो ध्येयः । वायुबीजमध्ये ईशस्थितिमाह—तन्मध्य इति । स्पष्टम् । सर्वत्र शिवस्य त्रिनेत्रम् । शिवस्य त्रिनेत्रत्वादयं त्रिनेत्रः । एवं "ग्रैवेयाङ्गदहारनूपुरयुतं क्षौमाम्बरं चिन्तयेदि"त्यादि कर्मान्तरोक्त-ध्यानप्राप्त-क्षौमाम्बरत्वमीशस्य । एवं "कान्तं कान्तशशाङ्ककोटिकिरणं प्रोद्यत्-कपर्दोज्ज्वलमि"ति ॥ २३ ॥

अत्र कर्णिकायां काकिनीशक्तिस्थितिमाह—अत्रास्त इति । मत्ताऽस्वभावस्था स्खलितभावा । पूर्णसुधारसार्द्रहृदयेति । पूर्णः सम्पूर्णस्तृप्तिजनको यः सुधारस-स्तेनार्द्रं परोपकाराभिमतकोमलं हृदयं चित्तं यस्या इत्यर्थः । यद्वा पूर्णः पूर्णानन्दजनको यः सहस्रदलकमलान्तर्विगलितपरमामृतरसस्तेनार्द्रं परमानन्दोत्फुल्लशिथिलं हृदयं यस्या इत्यर्थः । अन्यत् स्पष्टम् ।

कृष्णाम्बर-परीधानां नानाभरण-भूषिताम् ।
ध्यायेच्छशिमुखीं नित्यां काकिनीं मन्त्रसिद्धये ॥

इति ध्यानप्राप्त-कृष्णाम्बरत्वमस्या बोध्यम् ॥ २४ ॥

---

कीदृशम् ? दीपकलिकाकारजीवात्मसम्बन्धिनी या धूमावली तया धूसरम् । पाणिचतुष्टयेन लसितम् । कृष्णाजिनाधिरूढम् । परं प्रकृष्टञ्च । एवम्भूतं बीजं ध्यायेत् । तत्र वायुमण्डले । ईश एवाभिधा नाम यस्य, एवम्भूतं शूलपाणेर्वपुरास्ते । कीदृशम् ? करुणावारिधिस्वरूपम् । अमलं निर्मलम् । हंसाभं सूर्य इव शोभा यस्य । पुनः कीदृशम् ? पाणिभ्यां कराभ्यामभयं वरञ्च लोकत्रयाणामपि विदधत् । एतेनेयं मूर्त्तिर्हस्तपादादिविशिष्टेति ॥ २३ ॥

अत्रास्त इति । अत्रैव पद्मे खलु निश्चितं काकिनी देवी आस्ते । नूतनविद्युदिव पीतवर्णा । त्रीणि नेत्राणि यस्याः सा । शुभा शुभदायिका । सर्वालङ्कारैरावृता । मुदा हर्षेण । जनानां सम्यक्प्रकारेण हितकरी । चतुर्भिर्हस्तैः कपाल-शूल-शोभनवराभयान् संबिभ्रती । मत्ता उन्मत्ता । कङ्कालमालाधरा अस्थिमाल्यधरा ॥ २४ ॥

[ पद्मकर्णिकामध्यस्थ-त्रिकोणस्वरूपम् ]

**एतन्नीरज-कर्णिकान्तर-लसच्छक्तिस्त्रिकोणाभिधा**
**विद्युत्कोटिसमानकोमलवपुः सास्ते तदन्तर्गतः।**
**बाणाख्यः शिवलिङ्गकोऽपि कनकाकाराङ्गरागोज्ज्वलो**
**मौलौ सूक्ष्मविभेदयुङ् मणिरिव प्रोल्लासलक्ष्म्यालयः ॥२५**

एतत्पद्मकर्णिकामध्ये त्रिकोणं निरूपयति—एतदिति। त्रिकोणाभिधा त्रिकोणाकारा। शक्तिरित्यनेन त्रिकोणस्याऽधोमुखत्वं ज्ञापितम्। सा आस्ते इत्यन्वयः। एतत् त्रिकोणं वायुबीजस्याऽधोदेशे। तदाहान्यत्र—

तत्क्रोडे ईशं तदधस्त्रिकोणे बाणलिङ्गकम्।

इति। बाणाख्यलिङ्गं विशेषयति—मौलौ सूक्ष्मविभेदयुगिति। शिवलिङ्गमस्तकेऽर्द्धचन्द्रबिन्दुयोगात् तद्बिन्दुमध्ये शून्यरूपो विभेदश्छिद्रं, तेन युक्त इत्यर्थः। तदाह—

त्रिकोणान्तर्बाणलिङ्गं कनकाभरणैर्युतम्।
चन्द्रार्द्धमस्तकं देवं मध्ये रक्ताम्बुजं परम् ॥

इति। "मध्ये रक्ताम्बुजमि"ति हृत्पद्मस्य कर्णिकाधोदेशे ऊर्ध्वमुखरक्तवर्णाष्टदलपद्ममित्यर्थः। एतत्पद्मोपरि मानसपूजा कार्या। तदुक्तं यथा—

तन्मध्येऽष्टदलं रक्तं तत्र कल्पतरुं तथा।
इष्टदेवासनं चारु चन्द्रातपविराजितम् ॥
तथा—नानापुष्पफलैर्युक्तं मञ्जुवाक्पक्षिशोभितम्।
इत्याद्यभिधाय—तत्र ध्यायेदिष्टदेवं तत्तत्कल्पोक्तमार्गतः ॥

इति। अलं विस्तरेण प्रकृतमनुसरामः। बाणलिङ्गमस्तके बिन्दुप्रकाशदृष्टान्तमाह—मणिरिवेति। यथा सरन्ध्रमणिप्रकाशस्तथा शिवलिङ्गोपरि बिन्दुप्रकाश इति भावः। प्रोल्लासलक्ष्म्यालय इति। प्रोल्लासः कामोद्गमस्तच्छोभायुक्त इत्यर्थः ॥ २५ ॥

---

एतन्नीरज इति। एतत्पद्मकर्णिकान्तरप्रकाशा त्रिकोणाभिधा शक्तिरास्ते। प्रसिद्धत्वात् सेति। तदन्तर्गता सती आस्ते इति सम्बन्धः। यद्वा स एव शिवोऽन्तर्गतो यस्याः सा तथा। तस्याः शक्तेर्मौलावुपरि बाणाख्यः शिवलिङ्गकः समास्ते। स्वर्णाकारेणाऽङ्गरागेणोज्ज्वलः। सूक्ष्मरूपेण विशेषभेदं युनक्तीति। एवम्भूतो मणिरिव। पुनः कीदृशः? प्रोद्दामलक्ष्म्यालयः। सूक्ष्मभेदकत्वात् तस्याः शक्तेरेव प्रकृष्टोद्दामश्रियस्तत्रालय इति ॥२५॥ [ अस्मिन् पद्ये 'तदन्तर्गते'ति 'प्रोद्दामलक्ष्म्यालय' इति च पाठः ]।

[ हृत्पद्म-चिन्तन-फलम् ]

ध्यायेद् यो हृदि पङ्कजं सुरतरुं शर्वस्य पीठालयं
देवस्याऽनिलहीनदीपकलिकाहंसेन संशोभितम् ।
भानोर्मण्डलमण्डितान्तरलसत्किञ्जल्कशोभाधरं
वाचामीश्वर ईश्वरोऽपि जगतां रक्षाविनाशे क्षमः ॥ २६

हृत्पद्मचिन्तनफलमाह—ध्यायेदित्यादि-द्वाभ्याम् । अस्यार्थः—यो जनो हृदि पङ्कजं ध्यायेत् स जनो वाचामीश्वरो बृहस्पतिसमो भवति। एवं सर्वत्र। ईश्वर इत्यादि-प्रथमान्तेन भवति-क्रियान्वयो बोध्यः। अत्र पद्मकर्णिकायां हंसरूपजीवात्मस्थितिमाह—अनिलहीनदीपकलिकाहंसेन संशोभितमिति। वायुरहिता या दीपकलिका तत्सदृश-हंसेन संशोभितमित्यर्थः। ततश्च पद्मकर्णिकायां वाताहतिरहितस्थिरतर-दीपशिखाकार-हंसरूपो जीवात्मा वर्त्तत इति भावः। एतत्कर्णिकायां सूर्यमण्डलस्थितिं ज्ञापयति—भानो-र्मण्डलमण्डितान्तरलसत्किञ्जल्कशोभाधरमिति। भानोर्मण्डलेन मण्डिता भूषिता ये अन्तरलसन्तः कर्णिकामध्ये प्रकाशमानाः किञ्जल्काः केसरा अथवा याः किञ्जल्कशोभास्ता धारयतीत्यर्थः।

अत्र भानुमण्डलमण्डितत्वं किञ्जल्कविशेषणं, नत्वन्तरविशेषणम्। तथात्वे सर्व-स्मिन् पद्मे किञ्जल्कशोभाधरत्वादत्र विशेषोपादानं व्यर्थं स्यात्। भानोर्मण्डलमण्डितत्व-विशेषणविशिष्टत्वे तादृशविशिष्टकिञ्जल्कानामन्यत्रासत्त्वात् तदुपादानं सार्थकमिति। एवञ्च भानोर्मण्डलस्य कर्णिकारूपकत्वे तत्तेजसा सर्वेषां किञ्जल्कानां शोभाधिक्यरूपमण्डितत्वं सम्भवति, नत्वेकदेशस्थितत्वे। ततश्च तत्कर्णिकायामादौ कर्णिकाव्यापकं वायुमण्डलं, तदुपरि तथा सूर्यमण्डलम्, तदुपरि वायुबीजत्रिकोणादिकं ध्येयम्। युक्तञ्चैतत्, मानसा-ऽर्चनायां "मं वह्निमण्डलाय दशकलात्मने नम" इत्यादिना पूजायामुपर्युपरिक्रमेण वह्न्यर्कचन्द्रमण्डलस्थितिदर्शनाद् दृष्टपरिकल्पनान्यायावतारात्। अलमतिविस्तरेण।

ईश्वर इति। सृष्टिकर्त्ता इत्यर्थः। रक्षाविनाशे क्षमः स्थितिप्रलयकर्त्ता इत्यर्थः। तेन स जनः सृष्टिस्थितिप्रलयकर्त्तेति तात्पर्यार्थः॥ २६॥

ध्यायेदिति। य एतत् पद्मं कल्पवृक्षतुल्यं हृदि ध्यायेत् सः एवमेवं भवति। वाचा-मीश्वरो बृहस्पतितुल्यः। जगतामीश्वरः। रक्षाविनाशक्षमश्च अर्थाज् जगताम्। पद्मं कीदृशम्? शार्वस्य देवस्य पीठालयम्। पुनः कीदृशम्? अनिलहीनदीपकलिकारूपहंसेनाऽऽत्मना संशोभितम्। भानोर्मण्डलेन मण्डितेऽन्तरे लसन्ती प्रकाशमाना केशरशोभा भावो यस्य तत्तथा॥ २६॥

योगीशो भवति प्रियात् प्रियतमः कान्ताकुलस्याऽनिशं
ज्ञानीशोऽपि कृती जितेन्द्रियगणो ध्यानावधानक्षमः।
गद्यैः पद्यपदादिभिश्च सततं काव्याम्बुधारावहो
लक्ष्मीरङ्गणदैवतः परपुरे शक्तः प्रवेष्टुं क्षणात् ॥ २७

योगीश इति। प्रियात् प्रितमः कान्ताकुलस्येति योषिद्वर्गस्य कर्मकुशलः। जितेन्द्रियगण इति। जितेन्द्रियाणां मध्ये गण्यते तुल्यत्वेन गृह्यतेऽसावित्यर्थः। ध्यानावधानक्षमो ध्याने ब्रह्मचिन्तनेऽवधानाय स्थिरमनोऽभिनिवेशं कर्तुं क्षमः समर्थ इत्यर्थः। काव्याम्बुधारावह इति। काव्यरूपाम्बूनां धारा अविच्छेदनिःसरणमूह्यते धार्यते येन, तादृशो भवतीति। लक्ष्मीरङ्गणदैवतो विष्णुसदृश इत्यर्थः। यद्वा लक्ष्मीः सम्पत्तिः रङ्गणमानन्दानुभवो दैवमदृष्टं तत्समूहो दैवता जनतावत्, ततश्च लक्ष्मीभी रङ्गणाय दैवता यस्येति बहुव्रीह्यर्थे णप्रत्ययेन तत्पदं सिद्धम्। अत एवोक्तम्—

इह भुक्त्वा वरान् भोगानन्ते मुक्तिपदं व्रजेत् ॥

इति। परपुरे शक्तः प्रवेष्टुं क्षणादिति। दुर्गद्वारपालादिना दुर्गमीकृतायामपि परपूर्यां प्रवेष्टुं शक्तः प्रवेशाकारणभूतादर्शनाकाशगमनादियोग्यतापन्नो भवतीत्यर्थः।

अत्र केचिद् 'दैवतमि'ति बिन्द्वन्तं पठित्वा यद्यपि जनविशेषणतया दवतमित्यस्य पुंस्त्वं भवितुं पार्यते, तथाप्यजहल्लिङ्गत्वान्नपुंसकत्वमिति वदन्ति। तन्न। "वृन्दारका दैवतानि पुंसि वा देवता स्त्रियामि"त्यमरकोशे दैवतशब्दस्य पुंनपुंसकत्वकथनाद् दैवत इति विसर्गान्तपाठोऽपि साधुः। प्रदर्शितार्थे तु सुतरां तथेति। स्पष्टमन्यत्।

तदयं महावाक्यार्थनिर्णयः। हृत्पद्मं बन्धूकाभं सिन्दूराभ-सबिन्दु-क-ख-ग-घ-ङ-च-छ-ज-झ-ञ-ट-ठेति द्वादशवर्णयुक्त-द्वादशदलम्। तदुपरि सूर्यमण्डलम्। तन्मध्ये विद्युत्कोटिनिभ-त्रिकोणम्। तदूर्ध्वे वायुबीजं कृष्णसाराधिरूढं धूमधूम्राभं चतुर्भुज-

योगीश इति। एतत्पङ्कजध्यानपरो जन एवं भवति। योगीशः कान्ताकुलस्य सर्वस्त्रीणां प्रियात् स्वामिनोऽपि प्रियतमो भवति। ज्ञानीशः कृती च भवति। जितमिन्द्रियं मनो येन स तथा। ध्यानेनाऽवधाने क्षमो भवति। गद्यैः संस्कृतवाक्यैः पद्यपदादिभिः श्लोकादिप्रबन्धैर्गद्यपद्यरूपाम्बुधारावहो भवति। अत्यन्तवर्षणशीलो मेघरूपो भवतीति यावत्। लक्ष्मीतत्कुलदैवतमिति प्रशस्तलक्ष्म्याश्रयः कुलश्रेष्ठश्च भवतीत्यर्थः। यद्वा लक्ष्मीविशिष्टा कुलदेवता यस्य स तथा, स सत्कुलीनो भवतीति यावत्। दैवतमिति स्वार्थे अण्। एवं सः क्षणादेव परपुरे अन्यशरीरे प्रवेष्टुं समर्थो भवति। कुमारीतन्त्रे परपुरप्रवेशस्याप्येतत्पद्मध्यानफलत्वेनाभिधानात् ॥ २७ ॥ [ एतन्मते "जितेन्द्रियमन" इति "लक्ष्मीतत्कुलदैवतम्" इति च पाठः ]

[ कण्ठस्थ-विशुद्धचक्र-स्वरूपम् ]

**विशुद्धाख्यं कण्ठे सरसिजममलं धूमधूम्रावभासं**
**स्वरैः सर्वैः शोणैर्दलपरिलसितैर्दीपितं दीप्तबुद्धेः।**
**समास्ते पूर्णेन्दुप्रथिततम-नभोमण्डलं वृत्तरूपं**
**हिमच्छायानागोपरि लसिततनोः शुक्लवर्णाम्बरस्य ॥ २८**

---

मङ्कुशहस्तम्। तत्क्रोड़े हंसाभ ईशो द्विभुजो वराभयकरस्त्रिनेत्रः। अत्र कर्णिकायां रक्तपद्मोपरि काकिनीशक्तिः पीतवर्णा चतुर्भुजा पाश-कपाल-वराभयकरा पीतवस्त्रा सर्वालङ्करणान्विता सुधार्द्रहृदया कङ्कालमालाधरा। मध्यत्रिकोणे बाणलिङ्गशिवोऽर्द्धचन्द्रबिन्दुरूपमस्तकः स्वर्णवर्णः कामोद्गमोल्लसितः। तदधः स्थिरतरदीपकलिकाकारहंसरूपी जीवात्मा। एतत्कर्णिकाधोरक्तवर्णोर्ध्व-मुखाष्टदलपद्मम्। तत्र कल्पवृक्ष-रत्नवेदी-चन्द्रातप-पताकाद्यलङ्कृतं मानसपूजास्थानमिति चतुर्थप्रकरणम्॥ २७॥

इदानीं कण्ठदेशे विशुद्धचक्रं निरूपयति—विशुद्धाख्यमित्यादि-चतुर्भिः। विशुद्धाख्यमिति।

विशुद्धिं तनुते यस्माज्जीवस्य हंसलोकनात्।
विशुद्धं पद्ममाख्यातमाकाशाख्यं महत् परम्॥ इति॥

अस्यार्थः—कण्ठे विशुद्धाख्यं विशुद्धनामकं सरसिजं समास्ते इत्यन्वयः। पद्मं विशेषयति—अमलमिति। तेजोमयत्वान् मलरहितमित्यर्थः। स्वरैः सर्वैरकारादिविसर्गान्तैः षोड़शस्वरैर्दीप्तबुद्धेर्निरन्तरयोगाभ्यासेन विषयानुरागरूपमलरहितत्वेन प्रकाशितबुद्धेः साधकस्य सम्बन्धे दीपितं प्रकाशितमित्यर्थः। स्वरैः किद्दशैः? दलपरिलसितैरिति। एतेन स्वराणां षोड़शत्वादेतत् पद्मं षोड़शदलमिति सूचितम्। व्यक्तमाहाऽन्यत्र—

तदूर्ध्वे षोड़शदलं पङ्कजं धूम्रवर्णकम्।
युक्तं शोणैः षोड़शभिः स्वरैर्बिन्दुविभूषितैः।
आरक्तकिञ्जल्कयुतं व्योममण्डलमण्डितम्॥

---

विशुद्धाख्यमिति। अन्यन् निर्मलं विशुद्धाख्यं पद्मं कण्ठे आस्ते। किम्भूतम्? धूमेन या धूम्राभा तस्या इव द्युतिर्यस्य तत्तथा। पुनः कीदृशम्? सर्वैः षोड़शस्वरै रक्ताकारैर्दलैः परिलसितैर्दीपितं प्रकाशितम्। दीप्तबुद्धेर्दीपाकारबुद्धेर्जनस्य ज्ञानविषयो भवतीत्यर्थः। तत्रैव पद्मे शुक्लवर्णाम्बरधरस्य विष्णोः पूर्णेन्दुरिव प्रथिततमं ख्यातं नभोमण्डलं समास्ते। यद्वा पूर्णेन्दुना ख्याततमम्। "वियद्विष्णुपदो"त्यमरः। विष्णोः किम्भूतस्य? हिमवर्णाभकान्तिर्विभा यस्य, एवम्भूतस्य नागस्योपरि लसिता तनुर्यस्य॥ २८॥

[ नभोबीजमध्यस्थ-सदाशिव-स्वरूपम् ]

**भुजैः पाशाभीत्यङ्कुशवरलसितैः शोभिताङ्गस्य तस्य**
**मनोरङ्के नित्यं निवसति गिरिजाभिन्नदेहो हिमाभः ।**

इति । तथा **पूर्णेन्दुप्रथिततमनभोमण्डलं** पूर्णचन्द्रमण्डलवत् सम्पूर्णं शुक्लवर्णञ्च, अत एव "तत्तद्भूतसमाभानि मण्डलानि विदुर्बुधा" इति शारदोक्तवचनेन मण्डलानां तत्तद्दैवतभूत-समानवर्णविधानान् नभसः शुक्लवर्णत्वात् तन्मण्डलस्यापि शुक्लवर्णत्वं प्रतीयते । **नभो-मण्डलं वृत्तरूपं समास्ते** एतत्पद्मकर्णिकायामिति शेषः । **शुक्लवर्णाम्बरस्येति** । नभो-मण्डलस्य मध्ये शुक्लवर्णस्याऽम्बरस्याकाशस्याऽङ्के "सदापूर्वो देवः शिव इति च समाख्यान-सिद्धः" सदाशिवनाम्ना ख्यातो देवः सततं निवसतीति द्वितीयश्लोकेनाऽन्वयः । अम्बरस्य कीदृशस्य ? हिमच्छायानागोपरि लसिततनोः हिमच्छायया नागो हिमच्छायानाग इति तृतीयान्ततत्पुरुषेण हिमोपमाविशिष्टनाग इत्यर्थः । यद्वा हिमच्छायातुल्यो नाग इति शाकपार्थिवादित्वान् मध्यपदलोपे तत्पदसिद्धया शुक्लवर्णनाग इत्यर्थः । अत्र नागो हस्ती । व्यक्तमाह भूतशुद्धौ—तदन्तर्व्योमबीजञ्च शुक्लं हैमगजस्थितम् । इति । 'हैमे'ति हिमस्याय-मिति इदमर्थतद्धितप्रत्ययेन हैमगजः शुक्लहस्ती इत्यर्थः । ततश्च शुक्लहस्त्युपरि परिलसिता प्रकाशमाना तनुर्यस्य तादृशस्येत्यर्थः ॥ २८ ॥

**भुजैरिति** । पुनः कीदृशस्य ? **भुजैः पाशाभीत्यङ्कुशवरलसितैः शोभिताङ्ग-स्येति** । पाशाङ्कुश-वराभय-हस्तस्येति फलितार्थः । पुनः कीदृशस्य ? **मनोरिति** । हँ इत्याकाशबीजं तदात्मकस्येत्यर्थः । तेनाऽत्र कर्णिकान्तरे नभोबीजं स्थितम् । तत् तूक्तरूपेण चिन्तनीयमिति तात्पर्यम् ।

सदाशिवं विशेषयति—**गिरिजाभिन्नदेह** इति । अर्द्धनारीश्वर इत्यर्थः । **हिमाभः** शुक्लवर्णः । ततश्चार्द्धनारीश्वरत्वाद् वामार्द्धदेहं सुवर्णाभं दक्षिणार्द्धं शुक्लमिति । व्यक्तमाह—

शुक्लाम्बरेण संवीतं तत्र देवं सदाशिवम् ।
गिरिजाभिन्नदेहार्द्धं रौप्यहैमशरीरकम् ॥

इति । 'तत्र' नभोबीजक्रोडे इत्यर्थः । तथा सदा सुधास्राविचन्द्रमसः कलाधोमुखान्वित-मिति । निर्वाणतन्त्रे विशुद्धचक्राधिकारे—

---

भुजैरिति । तस्य विष्णोर्मनोरङ्के बीजाकारमूर्त्तेरङ्के पञ्चास्यः शिवो निवसति नित्यमेव । तस्य किम्भूतस्य ? पाशाभित्यङ्कुशवरपरिलसितभुजैः शोभिताङ्गस्य । शिवः किम्भूतः ? गिरिजया पार्वत्याऽभिन्नो देहो यस्य, हरगौरीमूर्त्तिरित्यर्थः । पुनः कीदृशः ? हिमस्येव शोभा यस्य ।

**त्रिनेत्रः पञ्चास्यो ललितदशभुजो व्याघ्रचर्माम्बराढ्यः**
**सदापूर्वो देवः शिव इति च समाख्यानसिद्धः प्रसिद्धः ॥२९**

[ पद्मकर्णिकास्थ-शाकिनीशक्ति-स्वरूपम् ]

**सुधासिन्धोः शुद्धा निवसति कमले शाकिनी पीतवस्त्रा**
**शरं चापं पाशं सृणिमपि दधती हस्तपद्मैश्चतुर्भिः ।**

---

यन्त्रमध्ये च वृषभं महासिंहासनं ततः १ ।
तस्योपरि सदा गौरी दक्षभागे सदाशिवः ॥
त्रिनेत्रः पञ्चवक्त्रश्च प्रतिवक्त्रे त्रिलोचनम् ।
विभूतिभूषिताङ्गश्च रजताचलसोदरः ।
व्याघ्रचर्मधरो देवः फणिमालाविभूषितः ॥

इत्यादि । "तस्योपरि सदागौरी"ति शिवस्याऽर्द्धाङ्गरूपेण स्थितेति । व्यक्तमाह तत्रैव—

या गौरी लोकमाता च शम्भोरर्द्धाङ्गहारिणी ॥

इति । ललितदशभुज इति । लावण्येन प्रशंसितदशहस्तयुक्त इत्यर्थः । अत्र देवस्य दशभुजेष्वस्त्रविशेषानभिधानात्—

शूलं टङ्क-कृपाण-वज्र-दहनान् नागेन्द्र-घण्टाङ्कुशान् ।
पाशाभीतिकरं दधानममिताकल्पोज्ज्वलाङ्गं भजे ॥

इति ध्यानान्तरे यान्यस्त्राण्युक्तानि तान्यस्य भुजेषु चिन्तनीयानीति ध्येयम् । प्रसिद्ध इति । प्राधान्येन ख्यात इत्यर्थः । अन्यत् सुगमम् ॥ २९ ॥

एतत्पद्मकर्णिकायां शाकिनीशक्तिस्थितिमाह—सुधासिन्धोरित्यादि । कमले विशुद्धचक्रकर्णिकायां शाकिनीनाम्नी शक्तिर्निवसतीत्यन्वयः । तां विशेषयति—सुधासिन्धोः शुद्धेति । सुधासमुद्रसदृश-शुक्लवर्णा । तथाच यथा सुधासिन्धोरमृतमयसुशीतल-

---

त्रिनेत्रः । मनोज्ञा दश भुजा यस्य स तथा । व्याघ्रचर्माम्बरैर्युक्तः । यद्वा व्याघ्रचर्मणा साम्बरेण च युक्तः, हरगौर्यात्मकत्वात् । सदाशिव इति समाख्यानसिद्धः नित्यस्वरूपप्रसिद्धः । योगिनां मनसि प्रकाशः ॥ २९ ॥

सुधासिन्धोरिति । तत्र कमले पीतवस्त्रा शाकिनी निवसति । कीदृशी ? सुधासिन्धोश्चन्द्राच् शुद्धसम्बन्धीययाऽमृतधारया शुद्धा इति यावत् । चतुर्भिर्हस्तपद्मैः शरं चापं पाशं

---

१ 'सिंहार्द्धदेहकम्' इति वा पाठः ।

**सुधांशोः सम्पूर्णं शशपरिरहितं मण्डलं कर्णिकायां**
**महामोक्षद्वारं श्रियमभिमतशीलस्य शुद्धेन्द्रियस्य ॥ ३०**

शक्लत्वं तथा ज्योतिःस्वरूपायाः शाकिन्या उत्तापरहित-शक्लकिरण इति भावः। ध्यानान्तरे शाकिनीं विशेषयति—

देवीं ज्योतिःस्वरूपां त्रिनयनलसितां पञ्चवक्त्राभिरामां
हस्तैः पद्मैश्च पाशं सृणिमपि दधतीं पुस्तकं ज्ञानमुद्राम्।
ध्यायेत् कण्ठस्थपद्मे निखिलपशुजनोन्मादिनीमस्थिसंस्थां
दुग्धान्ने * प्रीतियुक्तां मधुमदमुदितां शाकिनीं साधकेन्द्रः ॥

इति। "ज्योतिःस्वरूपां" ज्योतिषां स्वभावतः शुक्लवर्णत्वेनेयं शुक्लवर्णा। अत्र ध्यानद्वये द्विविधास्त्रदर्शनादिच्छया विकल्पः। इयं देवी कर्णिकान्तश्चन्द्रमण्डले वर्त्तते। तदाह प्रेमयोगतरङ्गिण्याम्—

तत्रास्ते शाकिनी शक्तिः सुधांशोर्मण्डले शुभे ॥

इति। एतत्कर्णिकायां सुधांशोश्चन्द्रस्य शशपरिरहितं निष्कलङ्कं सम्पूर्णं मण्डलमपि विलसतीति पूर्वक्रियायामन्वयः। मण्डलं विशेषणेन प्रशंसति—महामोक्षेत्यादि। एतन्मण्डलं शुद्धेन्द्रियस्य जितेन्द्रियस्य महामोक्षद्वारं निर्वाणमुक्तिमाहुः। एतच्चिन्तनादियोगमार्गमवलम्ब्य मुक्तिमाप्नोतीति भावः। श्रियमभिमतशीलस्येति। श्रियं योगलक्ष्मीमभिमन्यते आकाङ्क्षतीति श्रियमभिमतम्, तादृशं शीलं स्वभावो यस्य, तद्रूपस्य शुद्धेन्द्रियस्येति विशिष्टार्थः। अत्र कर्णिकायां चन्द्रमण्डलादिस्थितिप्रकारस्तु—आदौ कर्णिकान्तर्नभोमण्डलं, तन्मध्ये त्रिकोणं, तदन्तश्चन्द्रमण्डलं, तन्मध्ये नभोबीजादिकमिति। तद्यथा—

कर्णिकायां त्रिकोणस्थं पूर्णचन्द्रं तु चिन्तयेत्।
हैमाभं गजमारूढमाकाशं तत्र चिन्तयेत् ॥
शुक्लाम्बरेण संवीतं तत्र देवः सदाशिवः ॥

इति। 'शुक्लाम्बरेण संवीत'माकाशमिति ॥ ३० ॥

सृणिमपि दधती। तस्य पद्मस्य कर्णिकायां सुधांशोश्चन्द्रस्य शशपरिरहितं सम्पूर्णमण्डलमास्ते। कीदृशम्? महामोक्षद्वारं निर्वाणमुक्तिद्वारम्। पुनः कीदृशम्? उल्वणबुद्धिशीलस्य जितेन्द्रियस्य श्रियं दधदित्यर्थः ॥ ३० ॥

* 'मुद्गान्ने' इति पाठान्तरम्।

[ विशुद्धचक्र-चिन्तन-फलम् ]

**इह स्थाने चित्तं निरवधि विनिधायाऽऽत्मसम्पूर्णयोगः
कविर्वाग्मी ज्ञानी स भवति नितरां साधकः शान्तचेताः।
त्रिकालानां दर्शी सकलहितकरो रोगशोकप्रमुक्त-
श्चिरञ्जीवी जीवी निरवधिविपदां ध्वंसहंसप्रकाशः ॥ ३१**

---

विशुद्धचक्रचिन्तनफलमाह—इह स्थान इति। आत्मसम्पूर्णयोग इति। आत्मनि ब्रह्मणि सम्पूर्णः सर्वव्यापकत्वेन परिपूर्णो योगो ज्ञानं यस्य तादृशः। आत्तसम्पूर्णयोग इति पाठे—आत्तः प्राप्तः सम्पूर्णयोगो येनेत्यर्थः। अत एवोक्तं श्रीमदाचार्येण—"पूर्णबोधात्मना तिष्ठेत् पूर्णाचलसमुद्रवदि"ति। ततश्च यः साधक इह स्थाने निरवधि चित्तं विनिधायाऽऽत्मसम्पूर्णयोगो भवति, स ज्ञानी उपदेशं विना सर्वशास्त्रार्थवेत्ता शान्तचेताः शान्तिगुणावलम्बिचित्तः—

दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम्।
तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ॥

इत्यादि-गुणोपहितचित्त इति यावत्। त्रिकालानां दर्शीति। अत्र केचिज् ज्ञानलक्षणात्मकालौकिकसन्निकर्षरूप-योगधर्मेण सर्वं पश्यन्तीति। अन्ये तु तादृशजनस्यात्मप्रत्यक्षे तत्र भासमानसर्वप्रमेयवस्तूनां प्रत्यक्षो भवतीति वदन्ति। रोगशोकप्रमुक्तः सिद्धमन्त्रत्वाद् रोगमुक्तश्चिरञ्जीवी छिन्नमायापाशत्वाच्छोकरहित इत्यर्थः। स जीवी जनो नितरामतिशयकविर्भवति। एवं सर्वत्र भवति-क्रियान्वयः। निरवधिविपदां ध्वंसेति। अवधिः सीमा तद्रहितविपन् निरवधिविपत्। आदिना पापपुण्यरूपकर्मबन्धे नानाविपत्तिरिति यावत्। तेषां ध्वंसाय विपत्तिप्रागभावासमानकालीनविपत्तिनाशाय फलतो मोक्षाय। हंसस्य सहस्रदलकमलकर्णिकान्तर्गतहंसरूपान्तरात्मनः प्रकाशो यस्य तादृशो भवतीति। स्पष्टमन्यत्।

तदयं महावाक्यार्थनिर्णयः—कण्ठमूले विशुद्धचक्रं षोड़शदलं धूमधूम्ररूपमारक्तकेसरं रक्तवर्ण-सबिन्दुक-षोड़शस्वरयुक्तम्। कर्णिकायां नभोमण्डलं वृत्तरूपं शुक्लवर्णम्। तन्मध्ये त्रिकोणम्। तत्र चन्द्रमण्डलम्। तदुपरि हँ इति नभोबीजं शुक्लवर्णं शुक्लाम्बरपरीधानं शुक्लगजारूढं चतुर्भुजं पाशाङ्कुश-वराभय-धरम्। तत्क्रोड़े वृषभोपरि स्थितमहा-

---

इह स्थान इति। इह विशुद्धे पद्मे चित्तं यो निदध्यात् तस्य सम्पूर्णयोगविषये ज्ञानं भवतीत्यर्थः। अथवा तत् सर्वमेव सम्पूर्णयोगत्वेनोपदिष्टम्। तदेवाह क्रमेण—कविर्वाग्मीत्यादि। स जनो निरवधि नित्यमेव विपत्प्राप्तानां त्राणे सूर्य इव तेजस्वी भवति ॥ ३१ ॥

[ भ्रूमध्यस्थिताऽऽज्ञाचक्र-स्वरूपम् ]

**आज्ञानामाऽम्बुजं तद्धिमकरसदृशं ध्यानधामप्रकाशं**
**हक्षाभ्यां वै कलाभ्यां परिलसितवपुर्नेत्रपत्रं सुशुभ्रम् ।**
**तन्मध्ये हाकिनी सा शशिसमधवला वक्त्रषट्कं दधाना**
**विद्यां मुद्रां कपालं डमरु जपवटीं बिभ्रती शुद्धचित्ता ॥ ३२**

---

सिंहासने सदाशिवोऽर्द्धनारीश्वरत्वादर्द्धाङ्गसुवर्णाभार्द्धाङ्गशुक्लाभः पञ्चवक्त्रस्त्रिनेत्रः (दशभुजः) शूल-टङ्क-खड्ग-वज्र-दहन-नागेन्द्र-घण्टाङ्कुश-पाशाभययुक्त-दशहस्तो व्याघ्रचर्माम्बरो भस्मलिप्तसर्वाङ्गो नागहारशोभितः सुधास्राव्यधोमुखार्द्धचन्द्रशेखरः । एतत्कर्णिकायां चन्द्रमण्डलमध्ये अस्थ्युपरि स्थिता शाकिनीशक्तिः शुक्लवर्णा चतुर्भुजा पाशाङ्कुशधनुःशरकरा पीताम्बरा पञ्चवक्त्रा त्रिनेत्रेति पञ्चमप्रकरणम् ॥ ३१ ॥

इदानीं भ्रूमध्यस्थिताज्ञाचक्रं निरूपयति—आज्ञानामाऽम्बुजमित्यादि-सप्तभिः । "आज्ञासंक्रमणं तत्र गुरोराज्ञेति कीर्त्तितमि"ति गुरोराज्ञासंक्रमणादाज्ञानाम । ततश्च तन्नामकं तत् प्रसिद्धमम्बुजमास्ते इति क्रियाध्याहारेणाऽन्वयः । एतत् पद्मं भ्रूमध्ये स्थितम् । तद्यथा—

तालुकण्ठं प्रविश्योर्ध्वं भ्रूयुगान्ते सितं शुभम् ।
द्विदलं ह-क्ष-वर्णाभ्यां मनोऽधिष्ठितमम्बुजम् ॥

इति । पद्मं विशेषयति—हिमकरसदृशमिति । चन्द्रवच्छुक्लवर्णमित्यर्थः । तथा ध्यानधामप्रकाशं ध्यानस्य धाम्ना तेजसा तेजोरूपशक्त्या प्रकाशो यस्येत्यर्थः । अत्र ध्यानशक्त्या धामवत् प्रकाशितावयवमित्यर्थः । वर्णानां कलाबीजत्वात् तत्र कलापदप्रयोगः । नेत्रपत्रं द्विदलम् । सुशुभ्रमिति । हक्षाभ्यां सुशुभ्रमित्यर्थः । तथाच स्वभावशुभ्र-हक्ष-वर्णयोगेनाऽतिशुभ्रमिति भावः । एतेन ह-क्ष-वर्णयोरपि शुक्लत्वं सूचितं, शुक्लयोगेनैव शुक्लस्यातिशयत्वसम्भवात् । यद्वा—आज्ञाचक्रं हिमकरसदृशं चन्द्रस्यामृतमयशीतकिरणवच्छीतकिरणं तथा सुशुभ्रञ्च हक्षाभ्यां कर्बूरवर्णाभ्यामिति बोद्धव्यम् । तदाह ईश्वरकार्त्तिकेयसम्बादे—

---

आज्ञेति । तत् प्रसिद्धं भ्रूमध्ये आज्ञानाम पद्ममास्ते । कीदृशम् ? हिमकररूदृशम् । अतः प्रशस्तशुभ्रम् । ध्यानधामनि प्रकाशो यस्य तत् । हकार-क्षकारोपलक्षित-दलाभ्यां परिलसितं वपुर्यस्य । कलाभ्यामिति केचित् पठन्ति । तन्मते हकारक्षकाररूपकलाभ्यां स्वरविशिष्टाभ्यामिति । पुनः कीदृशम् ? नेत्रपत्रं द्विपत्रमित्यर्थः । एतत्पद्मे सा प्रसिद्धा हाकिनी निवसति ।

[ आज्ञाचक्रस्थ-मनःस्थितिस्वरूपम् ]

**एतत्पद्मान्तराले निवसति च मनः सूक्ष्मरूपं प्रसिद्धं**
**योनौ तत्कर्णिकायामितरशिवपदं लिङ्गचिह्नप्रकाशम् ।**

आज्ञाचक्रं तदूर्ध्वे तु शुक्लं द्विदलमण्डितम् ।
कर्बूर-हक्ष-लसितं मनोऽधिष्ठितरञ्जितम् ॥ इति ।

एतत्कर्णिकायां हाकिनीशक्तिस्थितिमाह—तन्मध्य इति । सा हाकिनीनाम्नी प्रसिद्धा । विद्यां पुस्तकमुद्राम् । मुद्रां वराभयरूपां, तेनास्या भुजेषु षड्विधायुधदर्शनात् षड्भुजेयम् ।

केचित् तु विद्यामुद्रामित्येकविभक्त्यन्तं पठित्वा विद्यायै मुद्रां विद्यामुद्रां व्याख्यामुद्रामिति व्याख्ययाऽस्याश्चतुर्भुजत्वं वदन्ति । किन्तु नानापुस्तके पृथग्विभक्त्यन्तपाठो दृश्यत इति सुधीभिर्विवेच्यम् । ध्यानान्तरेण हाकिनीं विशेषयति—

मज्जास्थां * शुक्लवर्णां डमरुकरयुतामक्षसूत्रं कपालं
विद्यां मुद्रां दधानां त्रिनयनविलसद्रक्तषड्वक्त्रयुक्ताम् ।
हारिद्रान्ने प्रसक्तां मधुमदमुदितां शुक्लमब्जं सुरूढां
देवीं देवेन्द्ररत्नाकरमधुमुदितां भावयेद्धाकिनीं ताम् ॥

इति । स्पष्टमन्यत् ॥ ३२ ॥

एतत्पद्मे मनःस्थितिमाह—एतत्पद्मान्तराल इति । सूक्ष्मरूपमतीन्द्रियमित्यर्थः । ननु मनसोऽतीन्द्रियत्वात् तत्सत्तायां किं प्रमाणमित्याह—प्रसिद्धमिति । अनादिपुरुषपरम्पराप्राप्त-प्रत्यक्षकरणत्वेन प्रसिद्धम् । तथा—

सङ्कल्पश्च विकल्पश्च कुर्वाणा तु मनो भवेत् ।

इत्यादि-शास्त्रप्रमाणसिद्धश्च । अत्र मानसस्थानं वक्ष्यमाणवेदादिबीजस्योर्ध्वदेशे, वक्ष्यमाणवचनात् । अतः परं शिवलिङ्गस्थितिमाह—योनौ तत्कर्णिकायामिति । कर्णिकान्तत्रिकोणे इतरशिवपदम् इतरनामकशिवरूपं वस्तु निवसतीति पूर्वक्रियान्वयः । लिङ्गचिह्नप्रकाशं लिङ्गरूपेण भासमानमित्यर्थः । इदं लिङ्गं शुक्लवर्णम् । तदाह भूतशुद्धौ—

---

कीदृशी ? शशिसमधवलवर्णा षण्मुखी च । हस्तैः करणैरेतान् बिभ्रती विद्या-(ज्ञान)-मुद्रा-कपाल-डमरु-जपवटीरिति । शुद्धं चित्तं यस्याः सा तथा ॥ ३२ ॥ [ एतन्मते "कलाभ्याम्" इत्यत्र "दलाभ्याम्' इति पाठः ]

एतदिति । एतत्पद्मे सूक्ष्मरूपेण प्रसिद्धं मनो निवसति । तस्य पद्मस्य कर्णिकायां या योनिस्तस्यामितराख्यः शिव आस्ते, तस्य स्थानमित्यर्थः । कीदृशम् ? लिङ्गचिह्नेन प्रकाशो

---

* 'चक्रस्थाम्' इति पाठान्तरम्

**विद्युन्माला-विलासं परम-कुल-पदं ब्रह्मसूत्र-प्रबोधं**
**वेदानामादिबीजं स्थिरतरहृदयश्चिन्तयेत् तत् क्रमेण ॥ ३३**

---

तदन्तःस्थेतरं लिङ्गं स्फटिकाभं त्रिलोचनम् ॥ इति ।

लिङ्गं विशेषयति—विद्युन्मालाविलासमिति । अत्र प्रणवस्थितिमाह—परमेत्यादि । कर्णिकायां वेदादिबीजं प्रणवोऽपि वसतीत्यन्वयः । बीजं विशेषयति—परमकुलपदमिति । कुलं शक्तिस्तदत्र त्रिकोणाकारपदं स्थानं परमं विद्युदाकारादिनोत्कृष्टं कुलं पदं यस्य तादृशमित्यर्थः । तथाच तद्बीजं त्रिकोणमध्यवर्त्तीति पर्यवस्यति ।

व्यक्तमाह—कर्णिकायां त्रिकोणस्थमात्मानं प्रणवाकृतिम् ।

ज्वलद्दीपनिभञ्चोर्ध्वं नादरूपं मनोहरम् ।

बिन्दुर्मकाररूपश्च तदूर्ध्वं मानसालयः ॥ इति ।

नन्वत्र परमकुलपदस्य प्रणवाधारत्वेनाऽपृथक्त्वे—

मूलाधारं स्वाधिष्ठानं मणिपूरमनाहतम् ।

विशुद्धमाज्ञाचक्रञ्च बिन्दुर्भूयः कलापदम् ।

निबोधिका तथार्द्धेन्दुर्नादो नादान्त एव च ।

उन्मनी विष्णुवक्त्रञ्च ध्रुवमण्डलिकः शिवः ।

इत्येतत् षोड़शाधारं कथितं योगिदुर्लभम् ॥

इति वचने षोड़शाधार-गणनायां कलापदस्य पृथगभिधानं कथं सङ्गच्छत इति चेत् । न । तत्कलापदं नाऽऽज्ञाचक्रस्थं किन्तु वक्ष्यमाणमहानादोर्ध्वे शून्यदेशे स्थितमित्येतन्महानादप्रस्तावे स्फुटीकरिष्यामः ।

ब्रह्मसूत्रप्रबोधमिति । ब्रह्मसूत्रं चित्रिणी नाड़ी तस्याः प्रबोधः प्रकाशो येनेत्यर्थः । अत एव पूर्वमुक्तं "प्रणवविलसिता" इति । तदिति । प्रदर्शित-हाकिनी-मन-इतरलिङ्ग-वेदादिबीजरूपं तत् सर्वं स्थिरतरहृदयः सन् क्रमेण चिन्तयेदित्यर्थः ।

क्रमोऽत्र न ग्रन्थकारोक्तपाठक्रमः किन्तु पाठक्रमाच्छाब्दक्रमस्य बलवत्त्वात् प्रदर्शितशाब्दक्रमो गृह्यते । एवञ्च पद्मकर्णिकायां हाकिनी शक्तिस्तदूर्ध्वे त्रिकोणे इतरलिङ्गं, तदूर्ध्वे त्रिकोणे प्रणवस्तदूर्ध्वे मन इत्येवं क्रमेण चिन्तयेदिति ॥ ३३ ॥

---

यस्य । पुनः कीदृशम् ? विद्युन्माला इव प्रकाशो यस्य तत्तथा । परमञ्च तत् कुलञ्चेति परमकुलं मूलाधारपद्मं तदेव पदं स्थानान्तरं यस्य । ब्रह्मसूत्रस्य प्रबोधो यस्मात् । तत् मनोनिवासभूतम् । ब्रह्मनाड़ीवर्त्मस्थितानां सर्वेषामेव तस्मादेव ज्ञानं भवतीत्यर्थः ॥ ३३ ॥

[ आज्ञाचक्र-ध्यानफलम् ]

ध्यानात्मा साधकेन्द्रो भवति परपुरे शीघ्रगामी मुनीन्द्रः
सर्वज्ञः सर्वदर्शी सकलहितकरः सर्वशास्त्रार्थवेत्ता ।
अद्वैताचारवादी विलसति परमापूर्वसिद्धि-प्रसिद्धो
दीर्घायुः सोऽपि कर्त्ता त्रिभुवनभवने संहृतौ पालने च ॥३४

[ आज्ञाचक्रस्थ-प्रणवस्वरूपम् ]

तदन्तश्चक्रेऽस्मिन् निवसति सततं शुद्धबुद्ध्यन्तरात्मा
प्रदीपाभ-ज्योतिः प्रणव-विरचना-रूप-वर्ण-प्रकाशः ।

---

एतद्ध्यानस्य फलमाह—ध्यानात्मेति । उक्तरूपेण ध्यानपरायणः साधकेन्द्रः परपुरे शीघ्रगामी भवतीति सर्वत्र क्रियान्वयः । मुनीन्द्रः मुनिर्ध्यानयोगादिसम्पन्नस्तदिन्द्रस्तच्छ्रेष्ठः । सर्वज्ञः पूर्वोक्तरूपेण सर्वदर्शी शास्त्रव्यवहाररीत्यनुरूपविवेकबुद्ध्या पूर्वापरदर्शी । अद्वैताचारवादीति । "पादोऽस्य विश्वा भूतानि" । "तदिदं सर्वं ब्रह्मे"त्यादि-श्रुतिवाक्येन—

अहं देवो न चान्योऽस्मि ब्रह्मैवास्मि न शोकभाक् ।

इत्यादिवाक्येन च ब्रह्मैवैकं सद् वस्तु तदन्यदसत्, प्रपञ्चसमुदायस्तु ब्रह्मभासया भासते इत्यवधारणमद्वैतम् । तादृशज्ञानेन य आचारो जीवात्म-परमात्मनोरैक्यचिन्तनादिरूपयोगस्तद्वादो तत्कथनशीलः । स जनोऽद्वैताचारवादी भवतीति फलितार्थः । परमापूर्वसिद्धिप्रसिद्ध इति । परमापूर्वसिद्धिर्महासिद्धिस्तया प्रसिद्धः प्राधान्येन ख्यात इत्यर्थः । सोऽपि कर्त्ता त्रिभुवनभवने संहृतौ पालने चेति प्रशंसापरम् । अथवा तादृशसाधकस्य देहान्ते परमात्मनि लयाद् यः सृष्टिस्थितिप्रलयकर्त्ता स एवायं भवतीति तात्पर्यम् ॥ ३४ ॥

तदाज्ञाचक्रे प्रणवयोगं विवक्षुरादौ प्रणवं विशेषयति—तदन्तरिति । अस्यार्थः—अस्मिन् चक्रे तदन्तस्तस्य पूर्वोक्तत्रिकोणस्यान्तमध्ये यः प्रणवविरचनारूपवर्णप्रकाशः

---

ध्यानात्मेति । एतद्ध्यानपरो जन एवं भवतीत्याह—ध्यानात्मेति । ध्यानिष्ठ इत्यर्थः । स साधकेन्द्रः परपुरे शीघ्रगामी भवति । तत्तद्दिव्यभावविषये परपुरप्रवेशनं पूर्वमेवोक्तं तत् तु उदासीनानामेव सम्भवतीति नान्येषाम् । अद्वैताचारं वक्तुं शीलमस्येति स तथैव भवति । स साधकः कीदृशः ? प्रकृष्टासु आदिसिद्धिषु समर्थो भवति, अतो दीर्घायुर्भवत्येव । त्रिभुवननिवासिनामुत्पत्तौ संहृतौ पालने वा स कर्त्ता । अतो ब्रह्म-विष्णु-शिवात्मको भवतीत्यर्थः ॥३४॥

तदन्तरिति । तदूर्ध्वमस्मिन् चक्रे सततमेव प्रणवविरचना प्रणवं विरचयति येनोकारेण तद्रूपाक्षरप्रकाशो निवसति । कीदृशः ? शुद्धबुद्धीनां अन्तरात्मस्वरूपः । यद्वा शुद्धैर्जनैरवगतो नि

**तदूर्ध्वे चन्द्रार्द्धस्तदुपरि विलसद्-बिन्दुरूपी मकार-**
**स्तदूर्ध्वे नादोऽसौ बलधवल-सुधाधारसन्तान-हासी ॥ ३५**

[ आज्ञाचक्रे प्रणवयोग-निरूपणम् ]

**इह स्थाने लीने सुसुखसदने चेतसि पुरं**
**निरालम्बां बद्ध्वा परमगुरुसेवासुविदिताम् ।**

प्रणवस्य विरचनारूपेणाऽकारोकारयोः सन्धियोगेन यस्त्रयोदशस्वरसदृशवर्णप्रकाशः सततं निवसति स शुद्धबुद्धयन्तरात्मा इत्यन्वयः। तं विशेषयति—प्रदीपाभज्योतिरिति। ननु तर्हि किं त्रयोदशस्वरसदृशवर्णमात्रं शुद्धबुद्धयन्तरात्मा इत्यत आह—तदूर्ध्वे चन्द्रार्द्धस्त-दुपरि विलसद्बिन्दुरूपी मकार इति। तेन तादृशवर्णोपरि अर्द्धचन्द्रबिन्दुयोगेन प्रकृत-प्रणवस्वरूपः पर्यवस्यति। तदूर्ध्वे नादोऽसाविति प्रणवोर्ध्वेऽवान्तरनादोऽस्तीति। स तु बलधवल-सुधाधारसन्तान-हासी बलदेवस्य धवलं सुधाधारसन्तानञ्चोपहसितुं शीलं यस्येत्यर्थादतिशयशुक्लवर्णो नादः।

केचित् तु तदाद्ये नादोऽसाविति पठन्ति, तदाद्ये बिन्दुरूपि-मकारस्याद्ये इति व्याख्या-यन्ति च। तदसत्। "तदुपरि विलसद्-बिन्दुरूपी मकार" इत्यनेन मकाराद्ये नादप्राप्तौ पुनस्तदुपादानं व्यर्थं स्यात्। परन्त्वसौ नादः प्रणवघटकीभूतनादातिरिक्तो भिद्यमानपर-बिन्दोरवयवविशेषः प्रणवोर्ध्वे वर्त्तते। यदि तु विशिष्टप्रणवनिरूपणे तदङ्गप्रत्यङ्गमेव वक्तुमुचितं कथं तदतिरिक्तनादोऽप्रस्तुतः प्रस्तूयते इति चेत्? तर्हि तदाद्ये नादोऽसाविति पाठोऽभिमन्यते। किन्तु तस्यायमर्थः—तदाद्ये बिन्दुरूपिमकाराद्ये प्रदर्शितोऽसौ नादो बलधवल-सुधाधारसन्तान-हासीति पूर्वोक्तनादमनूद्य बलधवलेत्यादिविशेषणं विधीयते। न तु विशिष्टस्य विधानम्। अतो न पुनरुक्तिदोषः॥ ३५॥

प्रणवं निरूप्येदानीं तद्योगं निरूपयति—इह स्थान इति। अस्यार्थः—योगी जनः पुरं बद्ध्वा कुतुकेनाऽन्तःपुरं संरुध्य तत्प्रकारेणाऽन्तःपुररोधकारणीभूतयोनिमुद्रां

---

ऽन्तरात्मा अस्य। तथा प्रदीपस्याभा इव ज्योतिर्यस्य तस्य। ओकारस्योपरि चन्द्रार्द्धः, तदुपरि प्रकाशमानबिन्दुरूपो मकारः। एतेन आज्ञाख्यपद्मस्योपरि प्रणवप्रकारसिद्धिः, तस्योपरि असौ नादो वक्राकृतिः। कीदृशः? जलस्य जलकणस्य धवलामृतश्रेणिरिव हासो दीप्तिर्यस्येति स तथा॥ ३५
[ एतन्मते "जलधवलसुधाधारसन्तानहासः" इति पाठः ]

इह स्थान इति। अत्यर्थं सुखसदने इह स्थाने चेतसि लीने सति परमगुरुसेवासुविदितां निरालम्बां मुद्रां बद्ध्वा सर्वदाभ्यासाद् योगी सन् पवनसुहृदां जीवबुद्धीनां कलां पश्यति। अस्य

**तदभ्यासाद् योगी पवनसुहृदां पश्यति कणान्**
**ततस्तन्मध्यान्तः प्रविलसितरूपानपि सदा ॥ ३६**

बद्ध्वेति यावत्। तेन पुःशब्देन योनिमुद्रा लक्ष्यते। तन्मुद्रां बद्ध्वा **इह स्थाने** आज्ञाचक्रे **तदभ्यासात्** तस्य प्रणवस्य पुनः पुनश्चिन्तनात् तत्र चेतसि प्रणवचतुर्दिक्षु लीने सति **ततस्तदनन्तरं तन्मध्यान्तः** प्रणवाधारत्रिकोणमध्ये अन्तरन्तरित्ते **पवनसुहृदां** वह्नीनां **कणान्** वह्निकणवज्ज्योतिःस्फुलिङ्गान् **पश्यति**, तेषां मानसप्रत्यक्षो भवतीत्यर्थः। अत्र पुरबन्धनं विना मनसः शुद्धस्थैर्यं न सम्भवतीत्यतः पुरं बद्ध्वेत्युक्तम्। पुरबन्धनकारणयोनि-मुद्रालक्षणमाह—ततो गुह्ये वामपादपार्ष्णिन्तु विनिवेशयेत्।

तस्योपरि महादेवि दक्षपार्ष्णिं निवेशयेत् ॥
ऋजुकायशिरोग्रीवः काकचञ्चुपुटेन च।
आकारेण बहिर्वायुं जठरं परिपूरयेत् ॥
अङ्गुलोभिर्दृढं बद्ध्वा करणानि समाहितः।
अङ्गुष्ठाभ्यामुभे श्रोत्रे तर्जनीभ्यां विलोचने ॥
नासारन्ध्रे च मध्याभ्यामन्याभिर्वदनं दृढम्।
बद्ध्वा मे प्राणमनसामेकत्वं तन्मनुं स्मरन्।
धारयेन्मारुतं सम्यग् योगोऽयं योगिवल्लभः ॥

इति। एवं मुद्रया वायुरोधे मनसः स्थैर्यमाह श्रुतिः। एवं हंसवशान्मनो विचर्यते। इतस्ततो विषयेषु भ्रमति तत्संयमेन मनःसंयमो जायत इत्यर्थः। अथवा पुरं खेचरीमुद्रां बद्ध्वेत्यर्थः। तयापि मनःस्थैर्यं भवति। तदाह—

चित्तं चरति खे यस्माज् जिह्वा चरति खे यतः।
तेनेयं खेचरी मुद्रा सर्वसिद्धनमस्कृता ॥ इति।

अत्र चित्तस्य खेचरत्वान्मनःसंयोगाभावेन विषयज्ञानरहितत्वादुन्मनी भवति। अत एवोक्तम्—

उन्मन्या सहितो योगी न योगी उन्मनीं विना ॥

इति। प्रणवस्य ज्योतिःस्फुलिङ्गवेष्टितत्वं स्पष्टमाहान्यत्र—

---

स्थानस्य चेतोलीनत्वम्। आश्चर्यं महः यदि भवति तदैव निरालम्बा मुद्रा भवति। तदनुभवो योगिभिरेव ज्ञायते। ततस्तन्मध्येऽम्बरे पदान् स्थूलान् रूपान् पश्यति ॥ ३६ ॥ [ एतन्मते "कलां" "पदान्" इति पाठः ]।

[ आज्ञाचक्रे परमशिवस्थिति-वर्णनम् ]

**ज्वलद्-दीपाकारं तदनु च नवीनार्कबहुल-**
**प्रकाशं ज्योतिर्वा गगनधरणीमध्यमिलितम् ।**
**इह स्थाने साक्षाद् भवति भगवान् पूर्णविभवो-**
**ऽव्ययः साक्षी वह्नेः शशिमिहिरयोर्मण्डल इव ॥३७**

---

तदूर्ध्वे प्रणवाकारमात्मानं दीपसन्निभम् ।
स्फुलिङ्गज्योतिरिङ्गाभैर्वेष्टितं परितः शुभम् ॥

इति । स्थाने कीदृशे ? सुसुखसदने निरवच्छिन्नसुखस्य सदनं यत्र तादृशे । पुरं किम्भूताम् ? निरालम्बां निर्गतोऽवलम्बो मनसो विषयसम्बन्धो यया तादृशीमित्यर्थः । तथा परमगुरुसेवासुविदितामिति । परमो गुरु-परम्पराप्राप्त-योगाभ्यास-निपुणस्तादृशो गुरुस्तस्य सेवाभिर्जातकृपयोपदेशेन सुविदितामिति फलितार्थः । अत एवोक्तम्—

गुरूपदेशात् तद् गम्यं नान्यथा शास्त्रकोटिभिः ॥

इति । कणान् किम्भूतान् ? प्रविलसितरूपान् प्रकृष्टरूपेण भासमानानिति ॥ ३६ ॥

तादृशयोगिनां वह्निकणावान्तरप्रकारदर्शनमपि भवतीत्याह--ज्वलद्दीपाकारमिति । तदनु वह्निकणदर्शनमनु दर्शनानन्तरं ज्योतिः पश्यतीत्यर्थः । ज्योतिर्विशेषयति—ज्वलद्दीपे-त्यादि । गगनधरणीमध्यमिलितमिति । गगनं "तदूर्ध्वे शङ्खिन्या निवसति शिखरे शून्यदेशे प्रकाशमि"त्यनेन प्रदर्शित-शङ्खिनीनाड्यूर्ध्व-शून्यरूप-गगनं धरणी मूलाधारस्थ-धरामण्डलं तदुभयोर्मध्यमिलितं, मूलाधारादिसहस्रारपर्यन्तव्याप्तं ज्योतिरिति विशिष्टार्थः । वेति वाशब्दः समुच्चयार्थः ।

आज्ञाचक्रे सहस्रारवत् परमशिवस्थितिमाह—इह स्थान इति । भगवान् परमशिवः इह स्थाने साक्षाद् भवति स्वयं वर्त्तेत इत्यर्थः । भगवन्तं विशेषयति—

---

ज्वलद्दीपाकारानिति । पदान् रूपान् किम्भूतान् ? ज्वलद्दीपस्येवाकारो येषां ते तथा । तत्रैव गगनधरणीबीजयोर्मध्ये स्थितं ज्योतिरास्ते । गगनधरणीमण्डलयोरन्तःस्थितं तद्बीजमिति यावत् । ज्योतिः कीदृशम् ? प्रातःकालीनसूर्यस्येव प्रकाशो यस्य तत् तथा । इह स्थाने अर्थाच्चेतसि लीने श्रीभगवान् साक्षाद् भवति । कीदृशः ? पूर्णो विभवो ज्ञानं यस्मात् । न व्ययतीत्यव्ययः । अतः सर्वेषां साक्षी, एतेषां तत्स्थानाधिवासभूतत्वात् । वह्नि-शशि-मिहिराणां मण्डलमिव प्रकाशते, अत्यर्थतेजोमयत्वात् ॥ ३७ ॥ [ एतन्मते "ज्वलद्दीपाकारान्" इति पाठः ]

पूर्णविभव इत्यादि। पूर्णः स्वात्मनि परिपूर्णः सृष्टिकर्तृत्वाद्यशेषयोग्यतारूप-विभवो यस्येत्यर्थः।

अथवा—विभवोऽनन्तसृष्टिप्रपञ्चसमुदायः, पूर्णः सर्वव्यापकत्वेन स्थितस्तादृशो विभवो यस्मादित्यर्थः। "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ती"ति श्रुतेः। यद्वा—विभवो विभुत्वं, पूर्णः सर्वव्यापकत्वेन स्थितस्तादृशो विभवो यस्येत्यर्थः। यद्वा—पूर्णत्वं फलानुपहितविषयितानास्पदेच्छाकत्वं, तादृशो विभवो यस्येति निगूढ़म्। आत्मातिरिक्त-वस्तूनामनित्यत्वादाकाशादीनां विभुत्वं न सर्वकालव्यापकमिति विशेषः।

अत्र परमशिवस्थितिं विशेषेण व्यनक्ति निर्वाणतन्त्रे—

एतत्पद्मस्योर्ध्वदेशे ज्ञानपद्मं सुदुर्लभम्।
पत्रद्वयसमायुक्तं पूर्णचन्द्रस्य मण्डलम्॥
तथा—शम्भुबीजं हि तन्मध्ये साकारं हंसरूपकम्।
तथा—एवं हंसो मणिद्वीपे तस्य क्रोड़े परः शिवः।
वामभागे सिद्धकाली सदानन्दस्वरूपिणी॥

इति। "तस्य क्रोड़े" इत्यस्य बिन्दुद्वयरूप-विसर्गमध्ये। तदाह सहस्रारमुपक्रम्य—

बिन्दुद्वयं तु तन्मध्ये विसर्गरूपमव्ययम्।
तन्मध्ये शून्यदेशे तु शिवः परमसंज्ञकः॥

इति। एवं सहस्रारे दर्शनादत्राप्याकाङ्क्षायां तथेति। अत्रानयोः शिवशक्त्योर्मायाबन्धनाच्छादनेन मकारात्मरूप-परंबिन्दुरूपेण स्थितिर्बोध्या। तदुक्तमाज्ञाचक्रमुपक्रम्य—

उत्कलादिमतेऽत्रैव चणकाकाररूपिणी।
सृष्टिं करोति भूतानि अत्र स्थित्वा सनातनी॥

इति। अत्र चणकाकाररूपः परमशिवः सदा वर्त्तते। उत्कलादिमते तु—अत्र स्थित्वा सृष्टिं करोतीत्यर्थः।

दृष्टान्तमाह—वह्नेरित्यादि। यथाऽर्केन्दुवह्निमण्डले भगवान् वर्त्तते तथाऽत्रापीत्यर्थः। अर्कादिमण्डले भगवतोऽवस्थानं प्रसिद्धम्। यद्वा—वह्नि-शशि-मिहिर-मण्डले सहस्रकमलस्थार्केन्दुवह्निमण्डले यथा चणकाकारेण भगवान् वर्त्तते तद्वदत्रापीति। सहस्रदलेऽर्केन्दुवह्निमण्डलानि प्रदर्शयिष्यन्ते। अत एव पीठपूजायामर्केन्दुवह्निमण्डलोपरि परमात्मज्ञानात्मनोः पूजा विधीयते। परमात्मा परमशिवो ज्ञानात्मा ज्ञानशक्तिस्तदुभयाभिन्नशिवशक्त्यात्मकश्चणकाकारबिन्दुरिति ध्येयम्॥ ३७॥

[ आज्ञाचक्रे योगेन प्राणत्यागफलम् ]

**इह स्थाने विष्णोरतुल-परमामोद-मधुरे**
**समारोप्य प्राणं प्रमुदितमनाः प्राणनिधने ।**
**परं नित्यं देवं पुरुषमजमाद्यं त्रिजगतां**
**पुराणं योगीन्द्रः प्रविशति च वेदान्तविदितम् ॥ ३८**

---

आज्ञाचक्रे योगेन प्राणत्यागफलमाह—इह स्थान इति । अस्यार्थः—योगीन्द्रो जनः प्राणनिधने प्राणवियोगकाले प्रमुदितमना आत्मानन्देन हृष्टचित्तः सन् इह आज्ञाचक्रे विष्णोर्भगवतः स्थाने उपदर्शित-बिन्दुरूपे प्राणं समारोप्य अथवा तद्बिन्दौ प्राणं समारोप्य प्राणनिधने सति परं पुरुषं प्रविशतीत्यन्वितार्थः । पुरुषं विशेषयति—नित्यमविनाशिनम् । देवं सृष्टिस्थितिप्रलयैः क्रीड़न्तम् । अजं जन्मरहितम् । त्रिजगतामाद्यम् । अनेन सर्वेषां पूर्ववर्त्तित्वात् सर्वकारणत्वं सूचितम् । पुराणं पुराणपुरुष इति कृत्वा यो निगद्यते स एवायमिति भावः । वेदान्तविदितमिति । वेदान्तो ब्रह्मनिरूपक-श्रुतिवाक्यादिस्तज्ज्ञानज्ञाप्यमित्यर्थः ।

तदयं विष्णोः स्थाने प्राणारोपणप्रकारः । प्राणवियोगकालं ज्ञात्वा ब्रह्मणि लीनो भवामीत्यानन्दितमना योगासनमासीनः सन् कुम्भकेन वायुं संरुध्य हृदिस्थं जीवात्मानं मूलाधारमानीय गुदमाकुञ्च्य यथोक्तविधानेन कुण्डलिनीमुत्थाप्य मूलादिब्रह्मरन्ध्रान्तं तड़िदाकारमानन्दं कुण्डलिनीमयं सूत्ररूपं नादं ध्यात्वा प्राणरूपश्वासं परमात्मकहंसं तन्नादे विलाप्य जीवेन सह चक्रभेदक्रमेणाऽऽज्ञाचक्रमानीय तत्र स्थितायां कुण्डलिन्यां स्थूलसूक्ष्मक्रमात् पृथिव्यादिप्रपञ्चसमुदायं विलाप्य तां पुनर्जीवात्मना सह तत्र स्थित-शिवशक्तिमय-बिन्दुनैकीभावमापाद्य तिष्ठेत्; ततो ब्रह्मरन्ध्रभेदेन देहं त्यक्त्वा ब्रह्मणि लीनो भवेदिति ।

तदयं महावाक्यार्थनिर्णयः । आज्ञाचक्रं द्विदलं शुक्लवर्णं कर्बूरवर्ण-हक्ष-द्वययुक्तपत्रम् । कर्णिकायां चक्राधिष्ठात्री हाकिनी शक्तिः शुक्लवर्णा रक्तषड्वक्त्रा त्रिनेत्रा षड्भुजा वराभयाक्षमाला-कपाल-डमरु-पुस्तक-धरा शुक्लपद्मोपरि स्थिता । तदूर्ध्वे त्रिकोणे इतरलिङ्गः

---

इह स्थान इति । विष्णोरतुलपरमामोदमधुरे इह स्थाने योगी प्राणवियोगसमायोगसमये प्राणान् मनश्च समारोप्य प्रकृष्टमुदितमनाः सन् परं पुरुषमेव प्रविशति । निर्वाणमुक्तिं प्राप्नोतीति शेषः । कीदृशं परम् ? सर्वेषामन्तर्भूतम् । नित्यम् । दीव्यतीति देवम् । न जायते इत्यजम् । त्रिजगतामाद्यम् । पुराणं सृष्टिस्थितिप्रलयकारणम् । वेदान्तविहितं वेदान्तमतमेतदिति ॥ ३८ ॥ [ एतन्मते "वेदान्तविहितम्" इति पाठः ] ।

[ आज्ञाचक्रोर्ध्वे महानाद-दर्शनफलम् ]

**लयस्थानं वायोस्तदुपरि च महानादरूपं शिवार्द्धं**
**सिराकारं शान्तं वरदमभयं शुद्धबुद्धि-प्रकाशम् ।**

---

शुक्लवर्णो विद्युदाकारः । तदूर्ध्वेत्रिकोणे प्रणवाकृतिरन्तरात्मा प्रदीपाभज्योतिः । तस्य चतुर्दिक्ष्वन्तरिक्षे ज्योतिःस्फुलिङ्गबिम्बैर्वेष्टितो ज्वलद्दीपसदृशेन स्वतेजसा मूलादिब्रह्मरन्ध्रान्त-प्रकाशकः । तदूर्ध्वे सूक्ष्मरूपं मनः । तदूर्ध्वे चन्द्रमण्डले हंसक्रोड़े परमशिवः सशक्तिक इति ।। इति षष्ठप्रकरणम् ।। ३८ ।।

इदानीमाज्ञाचक्रोर्ध्वे सहस्रदलकमलाधःस्थानवर्त्ति-कारणावान्तरशरीरं निरूपयितु-मिच्छन्नाह—लयस्थानं वायोरिति । अस्यार्थः—यदा यस्मिन् काले योगी जनो गुरु-चरणयुगाम्भोजसेवासुशीलो गुरुचरणयुगाम्भोजस्य सेवया सुशोभनं दृढ़तरैकाग्रमनो-ऽभिनिवेशेन सर्वाङ्गसुन्दरं शीलं योगानुष्ठानरूपसद्वृत्तं यस्य तादृशः सन् तदुपरि आज्ञा-चक्रोर्ध्वे महानादरूपं महानादस्य स्वरूपं पश्येत्, तदा तस्य योगिनः करकमल-तले सदा सर्वस्मिन् काले वाचां सिद्धिः वाक्यसिद्धिर्भूयादेवेत्यन्वितार्थः । नादं विशेषयति—लय-स्थानं वायोरिति । अत्र महानादे वायोर्लयः, यस्मादुत्पत्तिस्तत्र लयनियमात् ।

यद्यपि भूतशुद्ध्यादौ स्पर्शतत्त्वे वायोर्लयस्तस्य च व्योम्नि लयो दृश्यते तथापि कदाचिन् नादेऽपि वायोर्लयो भवतीति । अत्र—

"पृथिवीकाराद्रसवती रसादजायत ककारात् सर्वाणि जलानि तीर्थानि रेफाद् वह्नि-तत्त्वं नादाद् वायुः सर्वप्राणमयः, बिन्दोर्गगनं सर्वशून्यं शब्दमयं, तेभ्यः पञ्चविंशति-गुणमयतत्त्वं सर्वमिदं विश्वं ब्रह्माण्डं कालिकामयमि"ति—

श्रुतिवाक्येन कालीमन्त्रवर्णस्य सूक्ष्मे संहरणकाले नादे वायोर्लयो भवतीति ध्येयम् ।

शिवार्द्धमिति । शिवस्याऽर्द्धनारीश्वरत्वात् तदर्द्धं शक्तिस्तद्रूपं नादमित्यर्थः । सिराकारमिति । दन्त्यादि-सिरो लाङ्गलं तदाकारमित्यर्थः ।

तदूर्ध्वे तु महानादो लाङ्गलाकृतिरुज्ज्वलः ।

इति कार्त्तिकेयेश्वरसंवादवाक्यात् । यद्यपि "कृषिको लाङ्गलं हलं गोदारणञ्च सीरश्चे"त्यमरकोषे लाङ्गलवाचक-सीरशब्दस्य चतुर्थस्वरयोगित्वं, तथाप्यत्र वचनान्तरैकवाक्यता-

---

लयस्थानमिति । एतत् स्थानं वायोर्विरामभूतम् । तदुपरि महानादरूपं योगी जनो यदा पश्येत्, तदा तस्य वाक्सिद्धिरपि करपद्मतले सदैव भूयात् । कीदृशम् ? शिवो हकार-स्तदाकारम् । शिवदेव्योरर्द्धमङ्गस्वरूपं यस्य, हरगौर्यात्मकत्वात् । शान्तं सौम्यमूर्त्तिम् । वरान्

**यदा योगी पश्येद् गुरु-चरणयुगाम्भोज-सेवासुशील-**
**स्तदा वाचां सिद्धिः करकमलतले तस्य भूयात् सदैव ॥३९**

तुरीयेन तृतीयस्वरयुक्त-सिरःपदेनापि लाङ्गलं प्रतीयते इति। अथवा—शिवाकारमिति। तेन शिवशक्तिमयोऽयं नादः। तदुक्तं प्रयोगसारे—

नादात्मना प्रबुद्धा सा निरामयपदोन्मुखी।
शिवोन्मुखी यदा शक्तिः पुंरूपा सा तदा स्मृता॥ इति।

अत एव "तस्या एव शक्तेर्नादबिन्दू सृष्ट्युपयोगावस्थारूपा"विति राघवभट्टेनाप्युक्तम्।

अन्यत्र—सा तत्त्वसंज्ञा चिन्मात्र-ज्योतिषः सन्निधेस्तदा।
विचिकीर्षुर्घनीभूता क्वचिदभ्येति बिन्दुताम्॥

इति। तथा श्रीमदाचार्यवाक्यम्—"नाद एव घनीभूतः क्वचिदभ्येति बिन्दुताम्" इति। अत्र सकलवचनपर्यालोचनया शक्तिरेव नादबिन्दुरूपेणाऽऽविर्भूता सुवर्णकुण्डलमिव। नाद-बिन्दुः पुनरेकाकारैवेति निष्कर्षः। अभयवरदमभयवरदातारमित्यर्थः।

अथ समाधिरूपयोगानुशीलनसाधकानां—

समाधिकालात् प्रागेवं विचिन्त्याऽतिप्रयत्नतः।
स्थूलसूक्ष्मक्रमात् सर्वं चिदात्मनि विलापयेत्।

इत्याचार्यवचनेन समाधेः पूर्वं स्थूलसूक्ष्मरूप-सृष्टिप्रपञ्चसमुदाय-चिन्तनविधानात् तज्ज्ञान-स्यावश्यकत्वादत्र वदन्ति। तत्र तावत् पृथिव्यादि-पञ्चस्थूलरूपाणि मूलादिविशुद्धान्तचक्रे उक्तानि। तदाश्रितत्वात् मूलाधारे भूमण्डले पाद-घ्राणेन्द्रिय-गन्धतत्त्वेति त्रिः। जल-मण्डले पाणि-रसनेन्द्रिय-रसतत्त्वेति त्रिः। वह्निमण्डले पायु-चक्षुरिन्द्रिय-रूपतत्त्वेति त्रिः। वायुमण्डले उपस्थ-त्वगिन्द्रिय-स्पर्शतत्त्वेति त्रिः। नभोमण्डले वाक्-श्रोत्रेन्द्रिय-शब्दतत्त्वेति त्रिरिति समुदायेन पञ्चदशतत्त्वानि वर्त्तन्ते। पृथिव्यादिना मिलित्वा विंशति-तत्त्वानि स्थूलानि बोद्धव्यानि। इदानीं सूक्ष्मरूपाणि विधीयन्ते। तत्राज्ञाचक्रे सूक्ष्मरूपं मनः स्वयं प्रदर्शितम्। अपराण्याह कङ्कालमालिनीतन्त्रे आज्ञाचक्रमुपक्रम्य—

मनश्चात्र सदा भाति हाकिनीशक्तिरञ्जितम्।
बुद्धिप्रकृत्यहङ्कारालङ्कृतं तैजसं परम्॥

इति। अत्र बुद्धिप्रकृत्यहङ्कारात्मक-सूक्ष्मरूपत्रयाणां स्थितिः प्रतीयते। तत्राहङ्कारस्य न

---

ददाति अभयमपि। शुद्धबुद्धीनां प्रकाशो यस्मात्। योगी कीदृशः? गुरुचरणसेवासुशील इति। गुरुचरणस्यैतदुपदेश इत्यर्थः॥ ३९॥ [ अस्मिन् पद्ये "शिवाकारमि"ति पाठः ]

पाठक्रमात् स्थितिः। मूलाधारादिषु सर्वत्र पृथिव्यादिजनकस्य तत्तद्विलयाधारस्य च जन्य-विलाप्ययोरधःस्थितिदर्शनात् पाठक्रमाच्छाब्दक्रमस्य बलवत्त्वाच्च अत्रापि तथा स्थितिः कल्प्यते। तेन "अहङ्कारे हरेद् व्योम सशब्दं तन्महत्यपी"ति वचनाद् व्योम्नो विलयार्थं तद्विलयाधिकरणस्याऽहङ्कारस्य प्रथमोपस्थितत्वादादावहङ्कारस्तदूर्ध्वे बुद्धि-प्रकृत्योः स्थितिः। एतेषां जन्यजनकभावमाह शारदायाम्—

मूलभूतात् ततोऽव्यक्ताद् विकृतात् परवस्तुनः।
आसीत् किल महत्तत्त्वं गुणान्तःकरणात्मकम्।
अभूत् तस्मादहङ्कारस्त्रिविधः सृष्टिभेदतः॥

इति। 'विकृतादि'ति। इदं परवस्तुनः प्रतिबिम्बत्वेन विकृतिरूपं, महत्तत्त्वादीनां प्रकृतित्वात् प्रकृतिनामकञ्च। अत एवोक्तम्—

प्रकृतिः परमा शक्तिर्विकृतिः प्रतिबिम्बता॥ इति॥

तथा "परंब्रह्मात्मप्रकृतिः प्रतिबिम्बस्वरूपिणी"ति प्रागुपदर्शितम्। शारदावचने 'महत्तत्त्व-मि'ति। यदेव महत्तत्त्वं सैव बुद्धिः। तदाह ईशानशिवेन—

बोद्धव्यलक्षणा सैव प्रकृतिः शक्तिजृम्भिता।
बुद्धितत्त्वं भवेद् व्यक्तं सात्त्विकं गुणमाश्रिता।
सैव बुद्धिर्महन्नाम तत्त्वं सांख्यैः प्रगीयते॥

इति। महत्तत्त्वन्तु गुणान्तःकरणात्मकम्। गुणाः सत्त्वरजस्तमोरूपाः। अन्तःकरण-माह शारदायाम् "अन्तःकरणमात्मनः। मनोबुद्धिरहङ्कारश्चित्तञ्च परिकीर्त्तितम्।" इति। एतत्समुदायात्मकं महत्तत्त्वम्। ननु मनसो महत्तत्त्वान्तर्गतत्वे "तदन्तश्चक्रेऽस्मिन् प्रविलसति मनः सूक्ष्मरूपमि"त्यनेन पृथगभिधानं कथं सङ्गच्छत इति चेत्। न। तन्मनो न महत्तत्त्वान्तर्गतं किन्तु तदहङ्कारजन्यमतिरिक्तम्। तदाह—

"यच्चापरं मनस्तत्त्वं ससङ्कल्पविकल्पकम्।
तैजसादेव तज्जातम्·················॥"

इति राघवभट्टः। एवञ्चाज्ञाचक्रस्थमनःपर्यन्तानां क्रमेण स्थितेर्विहितत्वात् तदूर्ध्वेऽहङ्कारा-दीनां स्थितिर्बोध्या। ततश्चाज्ञाचक्रे हाकिनीतरलिङ्ग-प्रणव-मनोऽहङ्कार-बुद्धि-प्रकृतीना-मव्यवहितोर्ध्वोर्ध्वक्रमेण स्थितिनिरूपणात् स्थानविशेषानभिहितस्य पूर्वदर्शितचन्द्रमण्डलस्य तेषामूर्ध्वे स्थितिरिति। ननु तेषामधः कथं न स्थीयते इति चेत्। न। "इन्दुर्ललाटदेशे च तदूर्ध्वे बोधिनी स्वयमि"ति सम्मोहनतन्त्रवचनेन वक्ष्यमाणाज्ञाचक्रोर्ध्ववर्त्तिन्योः सम-नियतयोरिन्दु-बोधिन्योरधोभागे स्थितिबोधनात् तयोरव्यवधानाय सर्वोर्ध्वे एव तस्य स्थिति-रिति। अथाज्ञाचक्रोर्ध्वे कारणरूपमाह सम्मोहनतन्त्रे—

इन्दुर्ललाटदेशे च तदूर्ध्वे बोधिनी स्वयम् ।
तदूर्ध्वे भाति नादोऽसावर्द्धचन्द्राकृतिः परः ॥
तदूर्ध्वे च महानादो लाङ्गलाकृतिरुज्ज्वलः ।
तदूर्ध्वे च कला प्रोक्ता आञ्जीति योगिवल्लभा ।
उन्मनी तु तदूर्ध्वे च यद् गत्वा न निवर्त्तते ॥

इति । 'तदूर्ध्वे बोधिनी'त्यत्र तदूर्ध्वे ललाटोर्ध्वे, आज्ञाचक्रोर्ध्वे इति यावत् । बोधिन्यधः-स्थले बिन्दुस्थितिमाह भूतशुद्धितन्त्रे—

बिन्दुर्मात्रार्द्धतो देवि तदूर्ध्वं नादसंज्ञितम् ।
लयस्थानं तथा वायोर्महानादं तदूर्ध्वतः ॥ इति ॥

'मात्रार्द्धा' शक्तिः, बालसूर्यप्रतिकाशमासीद् बिन्दुमदक्षरम् ।
तदूर्ध्वे चार्द्धमात्रा तु गान्धाररागमाश्रिता ॥

इति बृहत्त्रिविक्रमसंहितावचनेनाऽर्द्धमात्रायाः शक्तिवाचकत्वप्रतीतेः । अत्र द्वयोर्वचनयो-रेकवाक्यतया याऽर्द्धमात्रा सैव बोधिनीति बोध्यम् । बिन्दु-बोधिनी-नादेति त्रयं बिन्दुमय-परशक्तेः रूपविशेषः । तदाह शारदायाम्—

सच्चिदानन्दविभवात् सकलात् परमेश्वरात् ।
आसीच्छक्तिस्ततो नादो नादाद् बिन्दुसमुद्भवः ॥
परशक्तिमयः साक्षात् त्रिधाऽसौ भिद्यते पुनः ।
बिन्दुर्नादो बीजमिति तस्य भेदाः समीरिताः ॥
बिन्दुर्नादात्मको बीजं शक्तिर्नादस्तयोर्मिथः ।
समवायः समाख्यातः सर्वागमविशारदैः ॥

इति । 'परशक्तिमयः' परः शिवस्तेन शिवशक्तिमयो बिन्दुः । अयं ललाटोर्ध्वे स्थितः । 'बिन्दुर्नादात्मकः' शिवात्मकः । 'बीजं शक्ति'र्बोधिनीरूपमित्यर्थः । नादस्तयोः समवायः सम्बन्धः क्षोभ्यक्षोभकरूपस्तेनाऽयं क्रियाशक्तिरूपः । एतत्त्रयोर्ध्वे महानादः पूर्वो-पदर्शितः । 'तदूर्ध्वे च कला प्रोक्ता' इति । कला शक्तिः । आञ्जीति तिर्यग्-रेखा-रूपमात्राकारेत्यर्थः । इयं शक्तिः सृष्ट्यादावाविर्भूता । तदुक्तं पञ्चरात्रे—

एवमालोक्य सर्गादौ सच्चिदानन्दरूपिणीम् ।
समस्ततत्त्वसंघातां सृष्ट्यधिष्ठातृरूपिणीम् ।
व्यक्तां करोति नित्यां तां प्रकृतिं परमः पुमान् ॥ इति ॥

अन्यत्र—शिवशक्तिसमायोगादव्यक्तात् परमेश्वरात् ।
आद्या भगवती देवी सैव त्रिपुरसुन्दरी ।

[ सहस्रारपद्मस्वरूपम् ]

**तदूर्ध्वे शङ्खिन्या निवसति शिखरे शून्यदेशे प्रकाशं**
**विसर्गाधः पद्मं दशशतदलं पूर्णचन्द्रातिशुभ्रम् ।**

---

आसीच्छक्तिस्ततो नादो नादाद् बिन्दुसमुद्भवः ॥

इति । 'उन्मनी तु तदूर्ध्वे चे'ति । तल्लक्षणमाह—

यत्र गत्वा तु मनसो मनस्त्वं नैव विद्यते ।
उन्मनी सा समाख्याता सर्वतन्त्रेषु गोपिता ॥

इति । ततश्च मनोवृत्तिमद्विषयावलम्बनचेष्टाकालीनविषयावलम्बनसामान्याभावसम्पादकत्वमुन्मनीत्वमिति । सा च द्विविधा सहस्राराधारा निर्वाणकलारूपा, एतत्स्थानस्थिता वर्णावलीरूपा च । तथा च कङ्कालमालिनीतन्त्रे—

सहस्रारकर्णिकायां चन्द्रमण्डलमध्यगा ।
सर्वसङ्कल्परहिता कला सप्तदशी भवेत् ।
उन्मनी नाम तस्या हि भवपाशनिकृन्तनी ॥ इति ॥

तथा—उन्मनीञ्च मालावर्णं स्मरणान् मोक्षदायिनी ॥

इति । 'मालावर्णं' वर्णावलीरूपमित्यर्थः । उन्मन्यधः समनीमाह भूतशुद्धौ—

ततो हि व्यापिका शक्तिराञ्जीति यां विदुर्जनाः ।
समनीमूर्ध्वतस्तस्या उन्मनीं तु तदूर्ध्वतः ॥

इति । इदमपि परशक्तेरवान्तररूपम् । ततश्चाज्ञाचक्रोर्ध्वे द्वितीयबिन्दुः शिवस्वरूपः । तदूर्ध्वे अर्द्धमात्राकारा बोधिनीशक्तिस्तदूर्ध्वे शिवशक्तिसमवायरूपाऽर्द्धचन्द्राकृतिर्नादस्तदूर्ध्वे लाङ्गलाकृतिर्महानादस्तदूर्ध्वे आञ्जीरूपा व्यापिका शक्तिस्तदूर्ध्वे समनी तदूर्ध्वे उन्मनीति क्रमेण सप्त कारणरूपाणि वर्त्तन्ते । अलमतिविस्तरेण प्रकृतमनुसरामः ॥ ३९ ॥

सहस्रदलपद्मं निरूपयन्नाह—तदूर्ध्व इति दशभिः । तदूर्ध्वे प्रागुपदर्शितसर्वेषामूर्ध्वे । पूर्वोपदर्शित-शङ्खिनीनाड्याः शिखरे मस्तके । शून्यदेशे नाड्यनावृतस्थाने । तेन सुषुम्णाया अप्यूर्ध्वे इति सूचितम् । विसर्गस्याधः दशशतदलं सहस्रदलं पद्मं निवसतीत्यन्वयः । विसर्गन्तु ब्रह्मरन्ध्रस्योर्ध्वभागे—

तस्मिन् रन्ध्रे विसर्गञ्च नित्यानन्दं निरञ्जनम् ।

---

तदूर्ध्व इति । तस्य महानादस्योर्ध्वे शङ्खिन्याश्च शिखरसमदेशे शून्यदेशे निरालम्बे विसर्गस्याधः प्रकाशरूपं सहस्रदलपद्मं निवसति । अत्यर्थपूर्णचन्द्र इव शुभ्रम् । अधोवक्त्रम् ।

**अधोवक्त्रं कान्तं तरुणरविकला-कान्तिकिञ्जल्कपुञ्जं**
**लकाराद्यैर्वर्णैः प्रविलसित-वपुः केवलानन्द-रूपम् ॥ ४०**

इत्यादि-वक्ष्यमाणवचनात्। पद्मं विशेषयति—पूर्णचन्द्रेत्यादि। ल-काराद्यैर्वर्णैः प्रवि-लसितवपुरिति। अत्र ल-कारग्रहणं न विलोमेन वर्णचिन्तनार्थं, किन्तु (ल-कारग्रहणं) क्ष-कारपरित्यागार्थम्। तत्त्यागबीजं हि वर्णानां सहस्रदले स्थितिरावर्त्तनेनैव घटते; एवञ्च क्ष-कारसहितैकपञ्चाशद्वर्णानां विंशत्यावर्त्तनेन विंशत्यधिक-सहस्रसंख्या भवन्ति। ऊनविंशत्यावर्त्तनेन त्वेकत्रिंशन्न्यूनसहस्रसंख्या भवन्ति। अतः क्षकारपरित्यागेन तत् समा-धीयते। तेन अ-कारादि-ल-कारान्त-पञ्चाशद्वर्णा अनुलोमेन विंशत्यावर्त्तनेन सहस्रदले चिन्तनीया इति ध्येयम्। अनुलोमेन वर्णचिन्तनं व्यक्तमाह कङ्कालमालिनीतन्त्रे—

सहस्रारं महापद्मं शुक्लवर्णमधोमुखम्।
अ-कारादि-क्षकारान्तैः स्फुरद्वर्णैर्विराजितम् ॥

इति। अत्र 'क्ष-कारान्तै'रित्यत्राऽन्तशब्दस्याऽवसानार्थकत्वात् क्ष-कारोऽन्तेऽवसाने यस्येति बहुव्रीहिणा क्ष-कारं विहाय ल-कारान्त-पञ्चाशद्वर्णयोगः। अथवा—ल-काराद्यैरिति लकारान्त-पञ्चाशद्-वर्णानामकथादित्रिरेखावद् वामावर्त्तेन यथायोग्यावर्त्तनेन विन्यासः। कङ्कालमालिनीवचनन्तु दक्षिणावर्त्तेन वर्णविन्यासविधायकमिति वचनद्वयाविरोधः। अत्र पञ्चाशद्-वर्णानां रूपविशेषानभिधानात् तद्वर्णमय्या मातृकायाः शुक्लवर्णत्वदर्शनात् तेऽप्यत्र शुक्लत्वेनैव चिन्तनीया इति ध्येयम्। ललाटाद्यैर्वर्णैरिति पाठे तु ललाटशब्देन मातृका-न्यासोक्त-ललाटवर्णोऽकारस्तदाद्यैर्वर्णैरित्यर्थः। एतत्पक्षे लकारं विहाय अकारादि-क्षकारान्त-पञ्चाशद्वर्णयोगो बोध्यः; सर्वत्र पञ्चाशद्वर्णग्रहणे अन्त्यलकारत्यागदर्शनात्।

अत्र केचित् प्रविलसिततनुरिति पठन्ति। तत्र "वा पुंसि पद्ममि"ति दर्शनात् पुंसि विशिष्टस्य पद्ममित्यस्य विशेषणतया तनुरित्यस्यापि पुंस्त्वमिति व्याख्यायन्ति च। तन्न। एतच्छ्लोकस्थ-निवसति-क्रियायाः कर्त्तृत्वेन पद्ममिति बिन्द्वन्तनिर्देशात् क्लीब-लिङ्गप्रयोग एव प्रतीयते, न तु पुंलिङ्गप्रयोगस्तथात्वे विसर्गान्तो भवितुमर्हति; अतस्तद्-विशेषणस्य तनुशब्दस्य क्लीबत्वमवश्यं वाच्यम्। तथात्वे बिन्द्वन्तता न भवति, निर्बिन्दुत्वे छन्दःपातस्तस्माद् वपुरित्येव पाठः। स्पष्टमन्यत् ॥ ४० ॥

---

कान्तम्। तरुणरविकला इव कान्तं किञ्जल्कपुञ्जं यस्य। ललाटाद्यैर्ललाटादिविन्यस्तैरकारादि-पञ्चाशद्वर्णैर्विंशतिप्राकारेण परिलसिततनुः केवलानन्दस्वरूपमिति ॥ ४० ॥ [अस्मिन् पक्षे "ललाटाद्यै"रिति "परिलसित-तनुरि"ति च पाठः]

[ सहस्रदलकर्णिकास्थ-चन्द्रमण्डल-स्वरूपम् ]

**समास्ते तस्यान्तः शशपरिरहितः शुद्धसम्पूर्णचन्द्रः**
**स्फुरज्ज्योत्स्नाजालः परमरसचयस्निग्धसन्तानहासी ।**
**त्रिकोणं तस्यान्तः स्फुरति च सततं विद्युदाकाररूपं**
**तदन्तःशून्यं तत् सकलसुरगणैः सेवितं चातिगुप्तम् ॥ ४१**

---

सहस्रदलकमलकर्णिकायां चन्द्रमण्डलस्थितिमाह—समास्त इति। तस्यान्तस्तत्र पद्मे अन्तर्मध्ये शुद्धो निर्मलोदयविशिष्टः। चन्द्रं विशेषयति—स्फुरदित्यादि। परमरसचय-स्निग्धसन्तानहासीति। स्निग्धः आर्द्रसदृशभावस्तस्य सन्तानो विस्तारो यत्रेत्यर्थः। ततश्च परमामृतरसचयेनोत्तापहीनतया स्निग्ध-सन्तानयुक्तो हासवदानन्दमय-किरणविशिष्ट इत्यर्थः। अथ चन्द्रमण्डलस्याध ऊर्ध्वे अन्तरात्मादीनां स्थितिमाह कङ्कालमालिनीतन्त्रे सहस्रारमुपक्रम्य—

तत्कर्णिकायां देवेशि अन्तरात्मा ततो गुरुः ।
सूर्यस्य मण्डलं चैव चन्द्रमण्डलमेव च ॥
ततो वायुर्महानामा ब्रह्मरन्ध्रं ततः स्मृतम् ।
तस्मिन् रन्ध्रे विसर्गश्च नित्यानन्दं निरञ्जनम् ।
तदूर्ध्वे शङ्खिनी देवी सृष्टिस्थित्यन्तकारिणी ॥

इति। तस्यान्तश्चन्द्रमण्डलमध्ये सततं निरन्तरं विद्युदाकाररूपं त्रिकोणं स्फुरतीति। तदन्तःशून्यमिति। अन्तर्मध्ये शून्यं यस्य तदन्तःशून्यं परंबिन्दुशरीरं, तस्मिन् त्रिकोणे अन्तःशून्यं तदन्तःशून्यं त्रिकोणमध्यवर्त्ति परंबिन्दुरूपं शून्यं स्फुरतीति क्रियान्वयः। यद्वा तदन्तस्त्रिकोणमध्ये शून्ये परंबिन्दुरूपं स्फुरति। अत एवोक्तं तोड़लतन्त्रे षष्ठोल्लासे—

निराकारं परं ज्योतिर्बिन्दुश्चाव्ययसंज्ञकम् ।
बिन्दुशब्देन शून्यं स्यात् तथा च गुणसूचकम् ॥

इति। अत्र "आहारनिर्हारविहारयोगाः सुसंवृता धर्मविदा तु कार्या" इति वचनाद् योगस्य

---

समास्त इति। तस्य पद्मस्याऽन्तर्मध्ये शशरहितोऽत्यर्थदीप्तिमान् सम्पूर्णचन्द्रः समास्ते। कीदृशः? स्फुरन्ति ज्योत्स्नाजालानि यस्य स तथा। परमरसचयेन शिवसम्बन्धाय परमामृतसमूहेन अत्यर्थस्निग्धहासो दीप्तिर्यस्य। तस्य चन्द्रस्य मध्ये त्रिकोणं सर्वदैव स्फुरति। विद्युदाकार इव रूपं यस्य त्रिकोणान्तर्मध्ये तत् शून्याकारं विलसति। सकलसुरगणैः सेवितम्। शून्यत्वादतिगुप्तम् ॥ ४१ ॥ [ अस्मिन् पक्षे "परमरसचयस्निग्धसन्तानहासः" इति पाठः ]

[ सहस्रदलकर्णिकास्थ-परमशिवस्थिति-स्वरूपम् ]

**सुगुप्तं तद् यत्नादतिशय-परमामोद-सन्तान-राशेः**
**परं कन्दं सूक्ष्मं सकल-शशिकला-शुद्धरूपप्रकाशम् ।**
**इह स्थाने देवः परमशिवसमाख्यानसिद्धः प्रसिद्धः**
**स्वरूपी सर्वात्मा रसविरसमितोऽज्ञानमोहान्धहंसः ॥ ४२**

---

गोपनेनाऽनुष्ठानविधानात् तदन्तःशून्यमतिगुप्तं यथा स्यात् तथा सकलसुरगणैः सेवितमाराधितमित्यर्थः ॥ ४१ ॥

**सुगुप्तमिति ।** अस्यायमर्थः—वक्ष्यमाणकेशाग्रकोटिभागैकरूपत्वादतिगुप्तं तत् शून्यं यत्नात् चिरनिरन्तरध्यानाद्यनुष्ठानात् सकलशशिकलाशुद्धरूपप्रकाशं कला निर्वाणकला तया सह वर्त्तमाना या शशिनश्चन्द्रस्य षोड़शी कला तया निर्मलरूपप्रकाशो यस्य तदित्यर्थः । तथा चातिसूक्ष्ममपि त्रिकोणान्तर्वर्त्त्यमाकलानिर्वाणकलासहित-परंबिन्दुरूपान्तःशून्यं ध्यानेन प्रकाशितं भवतीति भावः । **परमामोदसन्तानराशेर्मोक्षस्य परं कन्दं** प्रधानमूलमित्यर्थः । सुगुप्तमित्यत्र सुगोप्यमिति पाठे यत्नादित्यस्य उभयत्राऽन्वय इति ध्येयम् ।

केचित् तु त्रिकोणान्तःशून्यं शून्यस्थानम् । तत् तु कीदृशम् ? सकल-शशिकला-शुद्धरूपप्रकाशम् । शशिनश्चन्द्रस्य सकलकलाः समस्तकलाः षोड़शकलास्तस्याः शुद्धं शुक्लं यद् रूपं तदेव प्रकाशो यस्य तादृशपूर्णचन्द्रप्रकाशमित्यर्थ इति व्याख्यायन्ति । तच्चिन्त्यम् । तत्त्रिकोणस्य पूर्णचन्द्रमण्डल-मध्यवर्त्तित्वकथनेनैव त्रिकोणमध्यस्थानस्य पूर्णचन्द्रतुल्य-प्रकाशप्राप्तौ पुनस्तत् कथनं व्यर्थं स्यात् । किञ्च सकलसुरगणैः सेवितमित्यनेन शून्य-स्थानस्य सेवनं न युज्यते किन्तु त्रिकोणान्तर्बिन्दोरेव सेव्यत्वमिति । यदि तु तच्छून्य-स्थानस्य परंबिन्दोरधिष्ठानात् सेव्यत्वमित्युच्यते, तदा तत् शून्यस्थानमेव नो भवतीति सुधीभिर्भाव्यम् ।

सहस्रदलकर्णिकायां परमशिवस्थितिमाह—**इह स्थान** इति । **इह स्थाने** कर्णिकायामित्यर्थः । **परमशिवसमाख्यानसिद्धः** परमशिवनाम्ना ख्यातो **देवः**, वर्त्तत इति शेषः । देवं विशेषयति—**स्वरूपीति** । ब्रह्मरूपी ब्रह्ममयमिति यावत् । **सर्वात्मा** सर्वेषां

---

सुगुप्तमिति । सुगोप्यं तत् शून्याकारशिवलिङ्गं यत्नाद् गोप्यं गोपनीयं कस्मैचित् यावत्तावन्न कथनीयम् । कीदृशम् ? अतिशयपरमामोदसन्तानजनकामृतराशेः प्रकृष्टमूलं, तस्मादेव परमामृतं क्षरति । सूक्ष्ममलक्ष्यम् । शशिनः सकलकलैवांशरूपं प्रकाशो यस्य । इह स्थान एव

सुधाधारा-सारं निरवधि विमुञ्चन्नतितरां
यतेः स्वात्मज्ञानं दिशति भगवान् निर्मलमतेः ।

---

जीवानामात्मा जीवात्मस्वरूपः, जीवात्म-परमात्मनोर्वस्तुतो भेदाभावात् य आत्मा स एव जीवः । अत एवोक्तमध्यात्मरामायणे—

जीवात्मा परमात्मा च पर्यायो नात्र भेदधीः ।
आचार्यशास्त्रोपदेशादैक्यज्ञानं यदा भवेत् ।
आत्मनोर्जीवपरयोर्मूलाऽविद्या तदैव तु ॥

इति । श्रुतिरपि—"तत्त्वमसी"ति वाक्येन तत्-त्वं-पदयोरेकार्थत्वं दर्शयति । रसविरसमित इति । रसः परमानन्दरसः, विरसस्तद्वैलक्षण्येन शिवशक्तियोगजन्य-सामरस्यानन्दरूपः, तदुभयरसमितः प्राप्त इत्यर्थः । अथवा—रसः प्रथमोपस्थितत्वेन विषयरसस्तस्मिन् विरसा हेयताबुद्धिर्येन रसेन स परमानन्दरसस्तमित इत्यर्थः । अज्ञानमोहान्धहंसः अज्ञान-मोहान्धकारनाशकत्वाद् हंसः सूर्यरूप इत्यर्थः ॥ ४२ ॥

सुधाधारासारं निरवधि विमुञ्चन्नतितरामिति । निरवधि निरन्तरमतितरामतिशयं यथा स्यात् तथा सुधाधारारूपसारं विमुञ्चन्नित्यर्थः । अथवा—सुधाया आधारश्चन्द्रस्तस्मादास्रियते निःस्रियते यत्, तत् सुधाधारासारं शुक्लवर्णामृतकिरणं विमुञ्चन् प्रकाशयन्नित्यर्थः । एतद्विशेषणेन विशेष्यस्य चन्द्रवत् शुक्लवर्णत्वं सूचितम् । यद्वा—आसार्यते निःसार्यते उच्चार्यते इति यावत्, आसारं वाक्यं, सुधाधारया सह आसारं सुधाधारासारं सुधामयवाक्यमित्यर्थः । ततश्च निरवधि सर्वस्मिन् काले अतितरां मोहनाशायाऽतिप्रबलतरां सुधामयवाक्यं विमुञ्चन्नुच्चरन् सन् यतेरुपास्यदेवतायां नियतमनसः स्वात्मज्ञानं स्वं जीवात्मा तेन सह आत्मा परमात्मा ज्ञायतेऽनेनेति । अत्राऽपृथक्साहित्येन जीवात्माभेदेन परमात्मज्ञानकारणं तारकब्रह्ममन्त्रमुपदिशतीति समुदायार्थः । अथवा—सुधा कृपामृतं तद्धारया युक्तं सारं ब्रह्ममन्त्रात्मक-सारवाक्यमुच्चरन् स्वात्मज्ञानं दिशतीत्यर्थः । एतद्विशेषणेन तारकमन्त्रोपदेशकत्वज्ञापनात्तु विशेष्यगुरुत्वं सूचितम् । एवञ्चैतद्विशेषणं,

---

परमशिवत्वेन सिद्धः सर्वैर्विदितः । प्रसिद्धः योगिनां हृदये प्रकाशनपरः । खरूपी शून्याकारः । सर्वेषामात्मा । रसविरसमितः परमरसेनाच्छादितः । अज्ञानेन यो मोहान्धकारस्तत्र हंसः सूर्यसदृशः ॥ ४२ ॥

सुधाधारासारमिति । स भगवान् शिवो निर्मलमतेर्योगिनो जनस्यात्मविषयस्य परमात्मनि ज्ञानं दिशति । कीदृशम् ? सुधाधारासारम् अमृतधाराया आसारमिव । यद्वा—अमृत-

पूर्वश्लोकोक्त-परमशिवस्यैव गुरुत्वात्। अत एव ललितारहस्ये गुरुतत्त्वनिरूपणे—

ख्यातोऽयं पुरुषश्रेष्ठः सर्वदात्मरतिप्रियः।

इत्यादिना गुरुं वर्णयित्वा—

तेजोरूपा प्रिया तस्य ब्रह्मवर्त्मसुदुर्लभा।
परमं ब्रह्म यत्पादपङ्कजद्युतिवैभवम्॥

इत्युक्त्या शोभाधिक्येन पदपङ्कजयोः परब्रह्मरूप-परमशिवस्य हृत्पद्मादिति व्याख्यातम् (?)। तेजोरूप-गुरुप्रियायाः पादद्वयारोहणं गुरुहृदय एव न त्वन्यपुरुषस्येति। अतो यः परमशिवः स एव गुरुरिति तात्पर्यम्। निर्वाणतन्त्रे—

शिरः पद्मे महादेवस्तथैव परमो गुरुः।
तत्समो नास्ति देवेशि पूज्यो हि भुवनत्रये।
तदंशं चिन्तयेद् देवि बाह्ये गुरुचतुष्टयम्॥

इति। अयं परमशिवः कर्णिकान्तस्त्रिकोणस्य बहिरधः कथ्यमानहंसः इत्यस्योपरि वर्त्तते। पूर्वोक्तकङ्कालमालिनीतन्त्रवचने—

तत्कर्णिकायां देवेशि अन्तरात्मा ततो गुरुः।
सूर्यस्य मण्डलं तत्र चन्द्रमण्डलमेव च॥

इत्यादिना क्रमेण महाशङ्खिनीशक्तिपर्यन्तस्थितिमभिधाय—

तस्याऽधस्ताच्च देवेशि चन्द्रमण्डलमध्यगम्।
त्रिकोणं तत्र सञ्चिन्त्य क्षयहीनात्मिका कला।
तन्मध्ये कुटिला निर्वाणाख्यसप्तदशी कला॥

इति वचनेन चन्द्रमण्डलान्तस्त्रिकोणेऽमाकलादीनामेव स्थितेरुक्तत्वात्। गुरोस्तु तदधोऽन्तरात्मन उपरि स्थितिरुवाच।

ननु कङ्कालमालिनीवचनेऽन्तरात्मन उपरि गुरोः स्थितिरुक्ता, तत् कथं हंसस्योर्ध्वे गुरोः स्थितिरुच्यते इति चेत्। न। हंसान्तरात्मनोरेकार्थत्वात्। तथा हि कङ्कालमालिनीतन्त्रे गुरुध्यानं यथा—सहस्रदल-मध्यस्थ-मन्तरात्मानमुत्तमम्।

तस्योपरि नादबिन्दोर्मध्ये सिंहासनोज्ज्वलम्॥
तस्मिन् निजगुरुं नित्यम्…………… ॥ इत्यादि।

तथान्यत्र—हंसपीठे मन्त्रमये स्वगुरुं शिवरूपिणम्।
अमुकानन्दनाथान्तं स्मरेत्तन्नामपूर्वकम्॥ इति॥

तथाऽन्नदाकल्पे—शिरः पद्मे शुक्ले दशशतदले केसरगते
पतत्रीणां तल्पे परमशिवरूपं निजगुरुम्। इति॥

**समास्ते सर्वेशः सकल-सुख-सन्तान-लहरी-**
**परीवाहो हंसः परम इति नाम्ना परिचितः ॥ ४३**

एतेषां वचनानां पर्यालोचनया हंसान्तरात्मनोरभेदः प्रतीयते। एवं 'परमशिवरूपं निज-गुरुमि'त्यनेन परमशिव एव गुरुरिति भाव्यम्। यत् तु सहस्रदलमुपक्रम्य—

तन्मध्ये तु त्रिकोणं स्याद् विद्युदाकाररूपकम्।
बिन्दुद्वयञ्च तन्मध्ये विसर्गरूपमव्ययम्।
तन्मध्ये शून्यदेशे तु शिवः परमसंज्ञकः॥

इति वचनं परमशिवस्य त्रिकोणमध्ये स्थितिबोधकम्, तत् मतभेदेन सहस्रदल-कमलाभिन्न-तत्कर्णिकाधोवर्त्त्यूर्ध्वमुख-द्वादशदल-कर्णिकान्तस्त्रिकोणे गुरुस्थितिबोधकम्। एतत् पादुका-पञ्चकस्तोत्रे स्पष्टीकृतम्। न तूर्ध्वसहस्रदलकर्णिकात्रिकोणे गुरुस्थितिबोधकम्; मध्य-त्रिकोणस्याऽधस्तन-त्रिकोणान्तरे तद्रूपेण स्थितेः। अन्यथा कङ्कालमालिनीतन्त्रवचन-विरोधात्।

**समास्ते सर्वेश इति**। अत्र कर्णिकायां सर्वेषामीश्वरः समास्ते इत्यर्थः। नन्वत्र परमशिवस्थितिकथनेनैव ईश्वरस्थितिरुक्ता, तत् कथं पुनः सर्वेशस्थितिरुच्यते इत्यतः सर्वेशं विशेषयति—हंस इति। अयं सर्वेशो हंसो हंस इत्यानुपूर्विक-मन्त्राकारः। तदुक्तं प्रपञ्चसारे—सा तत्त्वसंज्ञा चिन्मात्रा ज्योतिषः सन्निधेस्तदा।

विचिकीर्षुर्घनीभूता क्वचिदभ्येति बिन्दुताम्॥
कालेन भिद्यमानस्तु स बिन्दुर्भवति त्रिधा।
बिन्दुर्दक्षिणभागश्च वामभागो विसर्गकः॥
तेन दक्षिणवामाख्यौ भागौ पुं-स्त्रीविशेषितौ।
स हङ्कारः पुमान् प्रोक्तः स इति प्रकृतिः स्मृता॥
बिन्दुः पुरुष इत्युक्तो विसर्गः प्रकृतिः स्मृता।
पुं-प्रकृत्यात्मको हंसस्तदात्मकमिदं जगत्॥ इति॥

सुव्यक्तमाह महाकालीतन्त्रे प्रथमपटले—

सहस्रारान्तरे शून्ये दिव्यतोरणशोभिते।
चन्द्रमण्डलमध्ये तु हंसवर्णद्वयोपरि।

---

धारासारं निरवधि अतितरामत्यर्थं विमुञ्चन्निति भगवतो विशेषणम्। एवंभूतः सर्वेशः शिवः सर्वेषां सुखसमूहलहरीबहिर्भूतः सन् समास्ते। कीदृशः? नाम्ना परमहंस इति परिचितः॥ ४३॥

[ सहस्रारकर्णिकायाः सर्वदेवस्थानत्व-वर्णनम् ]

**शिवस्थानं शैवाः परमपुरुषं वैष्णवगणा**
**लपन्तीति प्रायो हरिहरपदं केचिदपरे।**
**पदं देव्या देवीचरणयुगलाम्भोजरसिका**
**मुनीन्द्रा अप्यन्ये प्रकृतिपुरुषस्थानममलम्॥ ४४**

---

शुद्धस्फटिकसङ्काशं शुद्धक्षौमविराजितम्॥

इत्यादि। 'अत्र हंसवर्णद्वयोपरी'ति सुव्यक्तम्। अथवा **हंसः परम इति नाम्ना परिचितः** हंस इति नाम्ना परम इति नाम्ना च परिचितो विख्यात इत्यर्थः। अत एव ग्रन्थकारेणोनपञ्चाशच्छ्लोके 'केचिद्धंसाख्यमेतदि'त्यनेन हंसनामकत्वं स्वयमुक्तम्। यद्वा—हंसोऽन्ते यस्य स हंसोऽन्तः, हंसोऽन्तश्चासौ परमश्चेति कर्मधारयेण शाकपार्थिवादित्वान् मध्यपदलोपे हंसःपरम इति सिद्धम्। तेन परमहंस इति नाम्ना परिचित इत्यर्थः। अतएवोक्तमागमकल्पद्रुमे—

असौ परमहंसाख्यो युक्तस्थावरजङ्गमः॥

इति। **सकलसुखसन्तानलहरीपरीवाह** इति। सर्वप्रकारसुखं सकलसुखं तस्य सन्तानो विस्तारः, स एव लहरी श्रेणी परि सर्वतोभावेनोह्यते उत्तरोत्तरकालस्थायित्वेन प्रकाश्यते यस्मिन्नित्यर्थः। ततश्च श्रेण्याकारेण सर्वव्यापक-सर्वप्रकार-सुखविशिष्ट इति यावत्। अयं हंसः परमशिवस्याधोवर्त्तीत्युक्तं प्राक्॥ ४३॥

एतत्कर्णिकायां सर्वदेवतामय-हंसादीनामधिष्ठानात् शैवशाक्तादिसकलोपासकानामुपास्यदेवतास्थानमित्याह—**शिवस्थानमिति**। **शैवाः** शिवोपासका एतत्पद्मं **शिवस्थानं लपन्ति** वदन्तीत्यर्थः। **परमपुरुषं** परमपुरुषस्य विष्णोः स्थानम्, इदमर्थतद्धितप्रत्ययेन सिद्धम्। **केचिदिति**। ये हरिहरोपासकास्ते शैवा वैष्णवाश्च ते केचित्। **अपरे** केवलशिवविष्णूपासकेतरा **हरिहरपदं लपन्ति**। अतः सर्वे शैवा वैष्णवाः केवलशिवस्थानं केवलविष्णुस्थानं न वदन्तीत्यभिप्रायेणेत्युक्तम्। **अन्ये** युगलभजनशीलाः। यद्वा—अन्ये

---

शिवस्थानमिति। एतत् परमशिवस्थानं शैवा जनाः शिवस्थानमिति लपन्ति। वैष्णवाः परमपुरुषं परा प्रकृष्टा मा लक्ष्मीर्यस्य एवम्भूतपुरुषं वदन्ति। अपरे केचित् प्रायो हरिहरपदमिति लपन्ति। अन्ये देवीचरणयुगलानन्दरसिका देव्याः पदं लपन्ति। वस्तुतस्तु नानाप्रकारभावनया एको निरञ्जन एवं निर्वाच्यः। अतएव "ऋजुकुटिलनानापथजुषां नृणामेको गम्य" इति पुष्पदन्तोक्तं साधु संगच्छते॥ ४४॥

[ सहस्रार-ज्ञान-फलम् ]

**इदं स्थानं ज्ञात्वा नियतनिजचित्तो नरवरो**
**न भूयात् संसारे पुनरपि न बद्धस्त्रिभुवने ।**
**समग्रा शक्तिः स्यान्नियममनसस्तस्य कृतिनः**
**सदा कर्त्तुं हर्त्तुं खगतिरपि वाणी सुविमला ॥ ४५**

---

हंसमन्त्रोपासका मुनीन्द्राः प्रकृतिपुरुषस्थानं हंसस्य प्रकृतिपुरुषोभयरूपत्वात् तदधिष्ठित-स्थानं लपन्तीत्यर्थः। एतत्प्रदर्शनमात्रं तत्स्थाने सर्वदेवतामय-परंबिन्दोरधिष्ठानात्, यो यद्देवतोपासकः स तद्देवतास्थानं वदतीति बोध्यम् ॥ ४४ ॥

सहस्रारज्ञानफलमाह—इदं स्थानमिति। साङ्गोपाङ्गरूपेणैतत्स्थानज्ञानं भवतीति भावः। नियतनिजचित्त इति। नियतं तत्र नियुक्तं निजचित्तं येनेत्यर्थः। न भूयात् संसारे मुक्तो भवतीति भावः। यतः कचिदपि न बद्धस्त्रिभुवने इति हेतुगर्भविशेषणम्। बद्धः पुण्यपापरूप-मायापाशबद्धः। तदुक्तं भागवते—

कर्मणि क्रियमाणे तु गुणैरात्मनि मन्यते ।
तदस्य संसृतिर्बन्धः पारतन्त्र्यञ्च तत् स्मृतम् ॥

इति। भगवद्गीतायामपि—

स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ॥

इति। ततश्च पुण्यपाप-भोगार्थं शरीरधारणाद् बन्धः। स च स्वर्गे पुण्यभोगार्थं पाताले पापभोगार्थं मर्त्त्ये उभयभोगार्थं भवतीति। तत्त्वज्ञानिनान्तु बन्धहेतुभूत-पुण्यपापानुदयात् सञ्चित-पुण्यपापक्षयाच्च कचिदपि कस्मिन् कालेऽपि त्रिभुवने स्वर्गमर्त्त्य-पाताले न बद्धो न शरीरी भवति। सोऽयं प्रारब्धकर्मभोगपर्यन्तं जीवन्मुक्तः सन् तिष्ठति देहान्ते मुक्तो भवतीति भावः। तस्य पुण्यपापानुदयमाह कुलार्णवे—

अश्वमेधशतेनापि ब्रह्महत्याशतेन च ।
पुण्यपापैर्न लिप्यन्ते येषां ब्रह्म हृदि स्थितम् ॥

इति। तथा भगवद्गीतायाम्—

---

इदं स्थानमिति। इह एवं शास्त्रे एतत् स्थानं ज्ञात्वा नियतं संयतं निजचित्तं येन सः परमात्मचिन्तापरो नरवरः संसारे न भूयात् क्वचिदपि त्रिभुवने बद्धो न भवति। संयतमनस-स्तस्य कृतिनः समस्ता शक्तिः स्यात्। तदेवाह—सर्वदैव कर्त्तुं हर्त्तुं स क्षमो भवति। खगतिरा-काशगतिरपि भवति। अपि वाणी सर्वाह्लादिनी सुविमलशक्तिरूपा भवतीति ॥ ४५ ॥

[ अमाकला-स्वरूपम् ]

**अत्रास्ते शिशुसूर्य-सोदरकला चन्द्रस्य सा षोडशी**
**शुद्धा नीरज-सूक्ष्म-तन्तु-शतधाभागैकरूपा परा।**
**विद्युत्कोटि-समान-कोमल-तनूर्विद्योतिताऽधोमुखी**
**नित्यानन्द-परम्पराऽतिविगलत्-पीयूषधारा-धरा ॥ ४६**

---

नैव तस्य कृतेनाऽर्थो नाकृतेनेह कश्चन।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥

इति। 'तस्य' प्रक्रान्त-तत्त्वज्ञानिनः 'कृतेन' कर्मणा पुण्यं नास्ति, न चा'कृतेन' नित्य-कर्मणा कश्चन प्रत्यवायोऽस्तीति सुबोधिनीव्याख्यानम्। सञ्चित-पुण्यपाप-क्षयमाह श्रुतिः—"तस्मिन् मनसि लीने गते सङ्कल्पविकल्पे दग्धे पुण्यपापे सदाशिवः शक्त्यात्मा शान्त" इति। भगवद्गीतायामपि—"ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा ॥" इति। तस्य समग्रा सर्वकार्यसाधिका शक्तिः स्यात्। शक्तिकार्यं दर्शयति—सदा कर्त्तुमिति। अभीष्टकार्यं कर्त्तुं तथा हर्त्तुमनिष्टं कर्त्तुं संहर्त्तुं च शक्तिः, खगतिराकाशपथगमनं, सुविमला मधुरगद्यपद्यमयी वाणी स्यादिति सर्वत्राऽन्वयः ॥ ४५ ॥

अथाऽत्र पूर्वं 'तदन्तःशून्यं तदि'त्यनेन 'सकलशशिकला-शुद्धरूपप्रकाशमि'त्यनेन च सहस्रारकर्णिकान्तस्त्रिकोणे अमाकला-निर्वाणकला-परंबिन्दूनामधिष्ठानं छलेनाभिहितम्। इदानीं तेषां स्वरूपेण इतरभेदकविशेषणेन च स्पष्टयितुमिच्छन्नादावमाकलास्वरूपमाह—अत्रास्त इति। शिशुसूर्यसोदरेत्यनेन कलाया रक्तवर्णत्वं ज्ञापितम्। चन्द्रस्य सा षोड़शीत्यनेन इयममाकलेति ज्ञापितम्। नीरज[सूक्ष्म]तन्तुर्मृणालसूत्रं तस्य शतभागो दीर्घफालेनेति बोध्यम्। शुद्धा कलङ्करहिता। परा चिच्छक्तिरूपा, चिच्छक्तेरेवेदं रूपम्। अत एवोक्तं **प्रभासखण्डे**—

संस्थिता परमा माया देहिनां देहधारिणी ॥

---

अत्रास्त इति। अत्रैव पद्मे चन्द्रस्य सा प्रसिद्धा अमानाम्नी षोड़शी कला आस्ते। कीदृशी? प्रातःकालीनसूर्यस्येव कला दीप्तिर्यस्याः सा तथा। शुद्धा निर्विकारत्वात्। मृणालतन्तोः सूक्ष्मशतभागस्येव एकरूपं यस्याः। परा प्रकृष्टा। अथवा पश्यन्ती-मध्यमा-वैखरी-समष्टिरूपा। पुनः कीदृशी? विद्युद्दामसमानकोमलं तनुर्यस्याः। नित्योदिता, क्षयोदयरहितत्वात्। अधोमुखी। पूर्णानन्दपरम्परयाऽतिप्रकाशमाना या पीयूषधारा तदाश्रया, परम्पराक्रमेण शिव- सम्बन्धिपीयूषधाराधरेत्यर्थः ॥ ४६ ॥ [ एतन्मते "नित्योदिता" इति "पूर्णानन्द''धाराश्रये"त्यपि च पाठः ]

[ निर्वाणकला-स्वरूपम् ]

निर्वाणाख्यकला परा परतरा साऽऽस्ते तदन्तर्गता
केशाग्रस्य सहस्रधा-विभजितस्यैकांशरूपा सती।
भूतानामधिदैवतं भगवती नित्यप्रबोधोदया
चन्द्रार्द्धाङ्ग-समान-भङ्गुरवती सर्वार्कतुल्यप्रभा ॥ ४७

[ परंबिन्दु-स्वरूपम् ]

एतस्या मध्यदेशे विलसति परमाऽपूर्वनिर्वाणशक्तिः
कोट्यादित्यप्रकाशा त्रिभुवनजननी कोटिभागैकरूपा।

---

इति। अमाविशेषणं—नित्यानन्दपरम्परेति। ब्रह्मपरम्परोत्पन्नेत्यर्थः। अतिविगलत्पीयूषधाराधरा अतिशयामृतस्राविणीत्यर्थः। यद्वा—नित्यानन्दपरम्परातिविगलत्पीयूषधाराधरेत्येकविशेषणम्। अस्यार्थः—परं बिन्दुरूपं शिवः, परा प्रकृतिः शक्तिः, आनन्देन समरसानन्देन परम्पराभ्यां शिवशक्तिभ्यामतिविगलन्ती या पीयूषधारा परामृतधारा नित्यं निरन्तरं तादृशधारामिव धारां धारयतीत्यर्थः। स्पष्टमन्यत् ॥ ४६ ॥

निर्वाणकलास्वरूपमाह—निर्वाणाख्यकलेति। सा परा परतरा पराऽमा कला अस्या अपि परतरा श्रेष्ठा। परादिति पाठे सर्वश्रेष्ठेत्यर्थः। सा तदन्तर्गता अमाकलायाः क्रोड़े स्थिता; "तन्मध्ये कुटिला निर्वाणाख्यसप्तदशी कले"ति पूर्वोक्तवचनात्। केशाग्रस्येत्यादि। केशाग्रस्य सहस्रभागैकभागरूप-सूक्ष्मा सती आस्ते इत्यन्वयः। भूतानां सर्वप्राणिनामधिदैवतं हार्दचैतन्यस्वरूपेत्यर्थः। नित्यप्रबोधोदया तत्त्वज्ञानसम्पादयित्री। चन्द्रार्द्धाङ्गसमानभङ्गुरवती चन्द्रार्द्धाङ्गरूपामाकलावत् कुटिलाकारेत्यर्थः। सर्वार्कतुल्यप्रभा एकदा द्वादशसूर्योदये यादृक् प्रकाशस्तादृशप्रकाशमाना रक्तवर्णा च ॥ ४७ ॥

परंबिन्दुस्वरूपमाह—एतस्या इति। एतस्या निर्वाणकलाया मध्यदेशे कोड़े अपूर्वा सृष्टेरादावाविर्भूतत्वात् किञ्चिदपि नास्ति पूर्वं यस्यास्तादृशी परमा परंब्रह्मशक्ति

---

निर्वाणाख्येति। सा निर्वाणनाम्नी कला अमाकलान्तर्गता सती आस्ते। कीदृशी परात् परतरा प्रकृष्टादपि प्रकृष्टतरा। सहस्रप्रकारेण विभजितस्य केशाग्रस्यैकांशरूपा। सती शोभना। पुनः कीदृशी? भूतानामधिदेवतास्वरूपा भगवतीस्वरूपा च। नित्यः प्रबोधोदयो यस्याः सा तथा। चन्द्रलेखेव भङ्गुरं वक्राकारं वपुर्यस्याः सा तथा, द्वादशादित्यप्रभा इत्यर्थः ॥४७॥
[ अस्मिन् पद्ये "परात् परतरे"ति "चन्द्रार्द्धाङ्ग-समान-भङ्गुरवपु"रिति च पाठः ]

एतस्या इति। एतस्याः कलाया मध्यदेशे परमापूर्वनिर्वाणशक्तिर्विलसति। कीदृशी

[ निर्वाणकला-स्वरूपम् ]

निर्वाणाख्यकला परा परतरा साऽऽस्ते तदन्तर्गता
केशाग्रस्य सहस्रधा-विभजितस्यैकांशरूपा सती।
भूतानामधिदैवतं भगवती नित्यप्रबोधोदया
चन्द्रार्द्धाङ्ग-समान-भङ्गुरवती सर्वार्कतुल्यप्रभा ॥ ४७

[ परंबिन्दु-स्वरूपम् ]

एतस्या मध्यदेशे विलसति परमाऽपूर्वनिर्वाणशक्तिः
कोट्यादित्यप्रकाशा त्रिभुवनजननी कोटिभागैकरूपा।

---

इति। अमाविशेषणं—नित्यानन्दपरम्परेति। ब्रह्मपरम्परोत्पन्नेत्यर्थः। अतिविगलत्पीयूषधाराधरा अतिशयामृतस्राविणीत्यर्थः। यद्वा—नित्यानन्दपरम्परातिविगलत्पीयूषधाराधरेत्येकविशेषणम्। अस्यार्थः—परं बिन्दुरूपं शिवः, परा प्रकृतिः शक्तिः, आनन्देन समरसानन्देन परम्पराभ्यां शिवशक्तिभ्यामतिविगलन्ती या पीयूषधारा परामृतधारा नित्यं निरन्तरं तादृशधारामिव धारां धारयतीत्यर्थः। स्पष्टमन्यत् ॥ ४६ ॥

निर्वाणकलास्वरूपमाह—निर्वाणाख्यकलेति। सा परा परतरा पराऽमा कला अस्या अपि परतरा श्रेष्ठा। परादिति पाठे सर्वश्रेष्ठेत्यर्थः। सा तदन्तर्गता अमाकलायाः क्रोड़े स्थिता; "तन्मध्ये कुटिला निर्वाणाख्यसप्रदशी कले"ति पूर्वोक्तवचनात्। केशाग्रस्येत्यादि। केशाग्रस्य सहस्रभागैकभागरूप-सूक्ष्मा सती आस्ते इत्यन्वयः। भूतानां सर्वप्राणिनामधिदैवतं हार्दचैतन्यस्वरूपेत्यर्थः। नित्यप्रबोधोदया तत्त्वज्ञानसम्पादयित्री। चन्द्रार्द्धाङ्गसमानभङ्गुरवती चन्द्रार्द्धाङ्गरूपामाकलावत् कुटिलाकारेत्यर्थः। सर्वार्कतुल्यप्रभा एकदा द्वादशसूर्योदये यादृक् प्रकाशस्तादृशप्रकाशमाना रक्तवर्णा च ॥ ४७ ॥

परंबिन्दुस्वरूपमाह—एतस्या इति। एतस्या निर्वाणकलाया मध्यदेशे क्रोड़े अपूर्वा सृष्टेरादावाविर्भूतत्वात् किञ्चिदपि नास्ति पूर्वं यस्यास्तादृशी परमा परंब्रह्मशक्तिः

---

निर्वाणाख्येति। सा निर्वाणनाम्नी कला अमाकलान्तर्गता सती आस्ते। कीदृशी? परात् परतरा प्रकृष्टादपि प्रकृष्टतरा। सहस्रप्रकारेण विभजितस्य केशाग्रस्यैकांशरूपा। सती शोभना। पुनः कीदृशी? भूतानामधिदेवतास्वरूपा भगवतीस्वरूपा च। नित्यः प्रबोधोदयो यस्याः सा तथा। चन्द्रलेखेव भङ्गुरं वक्राकारं वपुर्यस्याः सा तथा, द्वादशादित्यप्रभा इत्यर्थः ॥४७
[ अस्मिन् पक्षे "परात् परतरे"ति "चन्द्रार्द्धाङ्ग-समान-भङ्गुरवपु"रिति च पाठः ]

एतस्या इति। एतस्याः कलाया मध्यदेशे परमापूर्वनिर्वाणशक्तिर्विलसति। कीदृशी

केशाग्रस्याऽतिसूक्ष्मा निरवधि विगलत्प्रेमधाराधरा सा
सर्वेषां जीवभूता मुनिमनसि मुदा तत्त्वबोधं वहन्ती ॥ ४८

रूपा निर्वाणशक्तिर्विलसतीत्यर्थः । निर्वाणशक्तिं विशेषयति—कोट्यादित्यप्रकाशेति । त्रिभुवनजननी स्वर्ग-मर्त्य-पातालादि-प्रपञ्चसमुदायस्योत्पत्तिस्थानरूपेत्यर्थः । यतः केशाग्रस्य कोटिभागैकभागरूपा अतोऽतिसूक्ष्मा । निरवधिविगलत्प्रेमधाराधरेति । प्रेम आनन्दार्द्रभावप्रफुल्लता । सामरस्यानन्दार्द्रभावप्रफुल्लताजनिता या परामृतधारा निरवधि निरन्तरं विगलन्ती तादृशधारां धारयतीत्यर्थः । सर्वेषां जीवभूतेति । एतस्या अंश एव जीवः । तदुक्तं यथा—

ज्वलदग्नेर्यथा देवि स्फुरन्ति विस्फुलिङ्गकाः ।
तस्याश्च्युतं परंबिन्दुर्यदा भूमौ पतत्यपि ।
तदैव सहसा देवि संज्ञायुक्तो भवत्यपि ॥

इति । 'तस्याः' शिवशक्त्यात्मकपरंबिन्द्वन्तर्गतशक्त्याः । 'संज्ञायुक्तो' जीवनामा भवतीत्यर्थः । स्पष्टमन्यत् । इयं निर्वाणक्तिर्निर्वाणकलाधःस्थाने नादरूपनिबोधिकोपरि वर्त्तते । तद् यथा—निर्वाणाभ्य(ख्या)न्तरगता वह्निरूपा निबोधिका ।

नादोऽव्यक्तस्तदुपरि कोट्यादित्यसमप्रभा ।
निर्वाणशक्तिः परमा सर्वेषां योनिरूपिणी ॥
अस्यां शक्तौ शिवो ज्ञेयो निर्विकारो निरञ्जनः ।
अत्रैव कुण्डली शक्तिर्विहरेत् परमात्मना ॥

इति । 'निबोधिका'ऽव्यक्तनादात्मिका वह्निरूपा । तथा हि नादस्य त्रिविधावस्था । "तमोगुणाधिक्येन केवलध्वन्यात्मकोऽव्यक्तनादः । रजआधिक्येन किञ्चिद्वर्णबद्धन्यासात्मकः । सत्त्वाधिक्येन बिन्दुरूपः" इति राघवभट्टः । ततश्च नाद-बिन्दु-निबोधिका अर्केन्दु-वह्निरूपाः, "संज्ञानेच्छाक्रियात्मानो वह्नीन्द्वर्कस्वरूपिणः ।" इति शारदावचनात् । तस्मादत्र वह्निरूप-निबोधिकोपरि स्थितिकथनात् सूर्यचन्द्रवह्निमण्डलोपरि निर्वाणशक्तेः स्थितिरिति सुधीभिर्भाव्यम् । व्यक्तमाह कुलार्णवोक्त-परंब्रह्मध्याने—

बिन्दुरूपं परं ब्रह्म सहस्रदल-संस्थितम् ।

कोट्यादित्य इव प्रकाशो यस्याः । त्रिभुवनजननी, सर्वेषामाधारभूतत्वात् । केशाग्रस्यापि कोटिभागैकभागरूपा, अतिसूक्ष्मत्वात् ; अतो गुह्या । निरवधि विलसत्प्रेमधाराधरा सा शक्तिः सर्वेषां जीवभूता सती मुदा हर्षेण मुनिमनसि तत्त्वज्ञानं वहन्तीति ॥४८॥ [ अत्राऽतिगुह्येति पाठः ]

[ निर्वाणशक्तिमध्यस्थ-परब्रह्म-स्थानम् ]

**तस्या मध्यान्तराले शिवपदममलं शाश्वतं योगिगम्यं**
**नित्यानन्दाभिधानं सकलसुखमयं शुद्धबोधस्वरूपम् ।**

---

इत्युपक्रम्य—कर्णिकान्तस्त्रिकोणान्तर्मण्डलत्रयमण्डितम् ॥

इति । 'मण्डलत्रयेण' सूर्यचन्द्रवह्निमण्डलेन मण्डितमित्यर्थः । इयं निर्वाणशक्तिः पर-बिन्दुरूपेति स्फुटीकरिष्यामः ॥ ४८ ॥

निर्वाणशक्तिमध्ये परब्रह्मस्थानमाह—तस्या मध्यान्तराल इति । तस्याः पर-बिन्दुरूप-निर्वाणशक्त्या मध्यान्तराले मध्यस्थशून्ये अमलं मायामलरहितं शिवपदं ब्रह्म-स्थानं लपन्ति, तत्त्वज्ञा इति शेषः । योगिगम्यं सूक्ष्मातिसूक्ष्मतमत्वात् वाङ्मनसो-रगोचरत्वाच्च योगिनां ज्ञानमात्रगम्यमिति भावः । केचिद् वैदान्तिका ब्रह्माभिधानं ब्रह्मेति नाम्ना लपन्ति । अथवा हंसाख्यं हंसनामकमिति यथाश्रुतार्थः । अन्ये सुकृतिनः किमपि अनिर्वचनीयमात्मप्रबोधम् आत्मसाक्षात्कारस्थानं लपन्तीत्यर्थः । मोक्षमिति । मुच्यते मायाप्रपञ्चाद् बहिर्भूयते यत्र तन्मोक्षरूपमित्यर्थः ।

अत्रेदमवधीयताम्—सहस्रदलकर्णिकान्तस्त्रिकोणे मायाबन्धन-च्छादित-प्रकृति-पुरुषात्मक-परंबिन्दुः । तदुक्तम्—

सत्यलोके निराकारा महाज्योतिःस्वरूपिणी ।
माययाच्छादितात्मानं चणकाकाररूपिणी ॥
हस्त-पादादि-रहिता चन्द्र-सूर्याग्नि-रूपिणी ।
मायाबन्धनमुत्सृज्य द्विधा भित्वा यदोन्मुखी ।
शिवशक्तिविभागेन जायते सृष्टिकल्पना ॥

इति । 'सत्यलोके' सहस्रारे इत्यर्थः । तथा—

निर्गुणो बिन्दुरूपश्च सिद्धिकारणमेव हि ।
केचिद् वदन्ति स ब्रह्मा कैश्चिद् विष्णुः प्रकथ्यते ॥
कैश्चिद् रुद्रो महापूर्ण एको देवो निरञ्जनः ।
आद्याशक्तियुतो देवश्चणकाकाररूपकः ॥

---

अस्या इति । अस्याः शक्तेर्मध्यदेशान्तराले निर्मलं शिवपदमास्ते । नित्यानन्दं शाश्वतम्, अत्यन्तासक्तत्वात् । योगि-प्राप्यम्, अत्यन्तज्ञानसाध्यत्वात् । सकलानां सुखमयम् अथवा सकलं कलया सह वर्त्तमानं तत् सुखमयञ्चेति तत् तथा । शुद्धबुद्धीनां प्रबोधो ज्ञानं यस्मात् । एतत् प

**केचिद् ब्रह्माभिधानं पदमिति सुधियो वैष्णवं तल्लपन्ति**
**केचिद्धंसाख्यमेतत् किमपि सुकृतिनो मोक्षमात्मप्रबोधम् ॥४६**

इति। अस्य बिन्दोः केशाग्र-कोटिभागैकभागरूप-सूक्ष्मतेजोंऽशो निर्वाणशक्तिर्मध्यशून्य-भागो ब्रह्मपदमिति ग्रन्थकारमतम्। तथाऽन्यत्र—

तन्मध्ये परबिन्दुञ्च सृष्टिस्थितिलयात्मकम्।
शून्यरूपं शिवः साक्षाद् बिन्दुः परमकुण्डली ॥

तथा—वृत्तं कुण्डलिनीशक्तिर्गुणत्रयसमन्वितम्।
शून्यभागं महेशानि शिवशक्त्यात्मकं प्रिये ॥ इति।

अयं बिन्दुः सर्वकारणरूप ईश्वर इति केचित्। पौराणिकास्तु महाविष्णुरूपोऽय-मिति वदन्ति। अन्ये तु ब्रह्मपुरुषोऽयम्। तदाह—

नाहो न रात्रिर्न वियन्न पृथ्वी नासीत् तमो ज्योतिरभून्नवान्यत्।
श्रोत्रादिबुद्ध्याऽनुपलभ्यमेकं प्राधानिकं ब्रह्म पुमांस्तदासीत् ॥ इति ॥

निर्गुणः सगुणश्चेति शिवो ज्ञेयः सनातनः।
निर्गुणः प्रकृतेरन्यः सगुणः सकलः स्मृतः ॥

इति शारदावचनात् तन्मध्येऽयं सगुणब्रह्मरूपः। वस्तुतस्त्वेकमेव मतभेदान्नानाविधनाम्ना गायन्तीत्यलं विस्तरेण।

**तदयं महावाक्यार्थनिर्णयः।** सुषुम्णानाड्यूर्ध्वे सहस्रदलपद्मं शुक्लवर्णमधोमुखं रक्तकिञ्जल्कशोभितमकारादि-लकारान्त-पञ्चाशद्वर्णैः शुक्लाभैर्विंशत्यावर्त्तनेन सहस्रसंख्याकैर्युक्तं सहस्रदलम्; एतत्कर्णिकायां हंसः। ततः परमशिवरूप-गुरुः। ततः सूर्यमण्डलं चन्द्रमण्डलम्। ततो महावायुः। ततो ब्रह्मरन्ध्रम्। ततो महाशङ्खिनी। चन्द्रमण्डले

---

केचित् परंब्रह्माभिधानमिति वदन्ति। अन्ये सुधियो वैष्णवं पदं लपन्ति। केचित् सुधियो मोक्षं मोक्षस्वरूपं हंसाख्यमिति वदन्ति। एतेन ब्रह्मविष्णुशिवशक्तिस्वरूपं तत् पदमित्यायातम्, हंसाख्यत्वात्। तथाच ज्ञानार्णवे—

हकारे बिन्दुरूपेण ब्रह्माणं विद्धि पार्वति।
सकारे सर्गबिन्दुभ्यां हरिश्चाहं महेश्वरि।
अविनाभावसम्बन्धाल्लोके हरिहराविति ॥

स्वरं विना उच्चरितुमशक्यत्वात् शक्तिरपि तत्र स्फुटा। कीदृशम्? आत्मनः परमात्मनः प्रबोधो यस्मात् तत् तथेति ॥ ४६ ॥ [ अस्मिन् पक्षे "अस्या" इति पाठः ]

विद्युदाकारत्रिकोणम्। तन्मध्ये मृणालसूत्र-शतभागैकभागरूप-सूक्ष्मा चन्द्रस्य षोड़शी कलाऽधोमुखी रक्तवर्णा। तत्क्रोड़े केशाग्रसहस्रभागैकभागरूप-सूक्ष्मा निर्वाणकला रक्त-वर्णाऽधोमुखी। तदधस्तादव्यक्तनादात्मक-निबोधिकाख्य-वह्निः। तदुपरि निर्वाणकला-क्रोड़े परंबिन्दुः शिवशक्त्यात्मकः। अस्य केशाग्रकोटिभागैकभागरूपसूक्ष्मतेजो हंसरूपा निर्वाणशक्तिः। अस्यां हंसो जीवः। बिन्दोर्मध्ये शून्यं ब्रह्मपदमिति।

आगमकल्पद्रुमपञ्चशाखादिमते सहस्रदलपद्मकर्णिकामध्ये चन्द्रमण्डले अक-थादित्रिकोणम्। तन्मध्ये त्रिकोणसमीपे त्रिबिन्दुः। तस्याधो बिन्दुर्हकारः पुरुषात्मकः। ऊर्ध्वबिन्दुद्वयरूप-विसर्गः सकारः प्रकृतिरूपः। एतदुभयात्मको हंसस्त्रिबिन्दुरूपेण प्रका-शते। तन्मध्ये अमाकला। तत्क्रोड़े निर्वाणशक्तिः। तस्या मध्ये शून्यं परं ब्रह्म इति।

तद् यथा—अथ शुभसहस्रारे पूर्णेन्दुमध्यविस्फुरत्।

त्रिकोणं तड़िदाभासमकथादिहलक्षयुक्॥
तदन्तरे परं शून्यं विसर्गाधो व्यवस्थितम्।
बालादित्यप्रभा तत्र कला षोड़श्यधोमुखी॥
स्रवन्ती सौधधारां वै चन्द्रार्द्धाङ्गविभङ्गुरा।
तदन्तरे परा शक्तिः कोट्यादित्यप्रभामयी॥
बिसतन्तुसहस्रांशभागरूपा चिदात्मिका।
तदन्तः सच्चिदानन्दो वेदादीतो निरञ्जनः॥
बिन्दुः पुरुष इत्युक्तो विसर्गः प्रकृतिर्मता।
पुं-प्रकृत्यात्मको हंसः स्वप्रकाशेन भासते॥ इति।

एतन्मतमाश्रित्य परंबिन्दोरूर्ध्वे हंसघटकविसर्गोपरि गुरुस्थितिरिति वदन्ति। तन्न समीचीनम्। निर्वाणतन्त्रे परंबिन्दुरूप-शक्तिसमीपे तस्याः पूजाध्यानपरायणस्य निज-गुरोः स्थितिकथनात्। पूजार्थोपवेशनं त्वधःस्थले सम्मुख एव युज्यते, न तूर्ध्वस्थले पश्चाद्देशे। तद्यथा निर्वाणे—

सत्यलोके बीजकोषे चिन्तामणिगृहे शुभे।
ध्यायेन् निरञ्जनां देवीं रत्नसिंहासनोपरि।
तस्याऽन्तिके निजगुरुं पूजाध्यानपरायणम्॥

इत्यादि। किञ्च पूर्वप्रदर्शिते महाकालीतन्त्रवचने हंसवर्णद्वयोपरि गुरुस्थितिः सुव्यक्ता। अत्र मूलादिसहस्रदलपर्यन्तोक्तप्रकार-विपरीतप्रकारबोधकानि तथा तदतिरिक्तबोधकानि च यानि वचनानि दृश्यन्ते, तानि मतभेदेन प्रकारान्तरविधायकानीति बोध्यम्॥ इति सप्तम-प्रकरणम्॥ ४९॥

[ कुण्डलिन्युत्थापनप्रकारः ]

**हूङ्कारेणैव देवीं यम-नियम-समभ्यास-शीलः सुशीलो**
**ज्ञात्वा श्रीनाथवक्त्रात् क्रममिति च महामोक्षवर्त्मप्रकाशम् ।**

---

अथेदानीं सहस्रदलपर्यन्तं चक्रं निरूप्य तत्र कुण्डलिनीयोगं कथयिष्यन्नादौ कुण्डलिन्युत्थापनप्रकारमाह—हूङ्कारेणेति । अस्यायमर्थः—स योगित्वेन प्रसिद्धो जनः गुरुवक्त्रात् कर्म ज्ञात्वा येन क्रमेण प्रकारेण हृदाद्याकुञ्चनादि पवनदहनयोराक्रमणं कुण्डलिन्युत्थापनादिकं भवति, तत्प्रकारक्रमं श्रीनाथस्य गुरोर्वक्त्राज् ज्ञात्वा पवनदहनयोराक्रमेण हूमिति कूर्चबीजोच्चारणेन च कुण्डलिनीमुत्थाप्य तल्लिङ्गरूपं भित्त्वा स्वयम्भुलिङ्गच्छिद्रं प्रस्फोटयित्वा तां देवीं कुण्डलिनीं ब्रह्मद्वारस्य मध्ये चित्रिणीनाड़ीमुखमध्ये विरचयति प्रापयतीत्यर्थः । हूङ्कारेणेति ।

ततो हंसमुपस्मृत्य शनैराकुञ्चयेद् गुदम् ।

इत्याद्यागमकल्पद्रुमवचने हंसमन्त्रस्योच्चारणेन कुण्डलिनीचालनविधानात् । "हूं हंस इति मन्त्रः कुण्डलिनीचालने विनियुक्त" इति ललितारहस्यकारः । किन्तु हंसस्मरणपूर्वकतदाकुञ्चनविधानाद् हंस इति मनुमनुस्मृत्य जीवात्मानं हृदयस्थं दीपकलिकाकारं मूलाधारमानीय तेन सार्द्धं कुण्डलिनीं चालयेदित्यभिप्रायः । अत एवागमकल्पद्रुमे—

आरोप्यारोप्य शक्तिं कमलजनिलयादात्मना साधकेन्द्रः ।

इति । परवचने 'आत्मना' जीवात्मना सार्द्धं चालनमुक्तम् । कालीकुलामृतेऽपि—

हृदयाद्धंसमनुना नीत्वा जीवं मुखाम्बुजे ।
हूङ्कारेण समुत्थाप्य कुण्डलीं परदेवताम् ॥

इति । कङ्कालमालिनीतन्त्रे—

आकृष्य प्रणवेनैव जीवात्मानं नगेन्द्रजे ।
कुण्डलिन्या सह प्राणं गन्धमादाय साधकः ।
सोऽहन्तु मनुना देवीं स्वाधिष्ठाने प्रवेशयेत् ॥

इति । ततश्च हंसेन प्रणवेन वा हृदयाज्जीवं मूलाधारमानीय केवलकूर्चबीजेन कुण्डलिनीमुत्थापयेदिति सुधीभिर्भाव्यम् ।

स जनः कीदृशः ? यमनियमसमभ्यासशीलः । यम-नियम इति योगप्रतिबन्धक-

---

हूङ्कारेणेति । इदानीं भूतशुद्धिः कथ्यते । तां देवीं कुण्डलिनीं यमनियमसमभ्यासशीलः स जनः श्रीनाथवक्त्राद् गुरुमुखात् महामोक्षपथप्रकाशं क्रमञ्च ज्ञात्वा हूङ्कारेण तत् स्वयम्भूलिङ्गं

**ब्रह्मद्वारस्य मध्ये विरचयति स तां शुद्ध-बुद्धि-स्वभावो
भित्त्वा तल्लिङ्गरूपं पवन-दहनयोराक्रमेणैव गुप्तम् ॥ ५०**

---

कामक्रोधादिनाशक-तदनुकूलशरीरान्तर्वायुरेचन-मनःस्थैर्यादिसाधकाङ्गयोगप्रदर्शकम्। तैरेव प्रकृतयोगनिष्पत्तेः, न तु केवल-यमनियममात्रेण। अत एव ग्रन्थकृता चतुःपञ्चाशच्छ्लोके 'योगी यमाद्यैर्युत' इत्यत्र 'यमाद्यै'रिति बहुवचनान्तत्वेन प्रयुक्तम्। अयन्तु यमाद्यभ्यासः कामाद्याकुलितचित्तानामेव। यदि तु जन्मान्तरीयादृष्टवशात् स्वभावतो वा क्रोधकामादि-रहितस्तदा तद्योगाभ्यासं विनापि प्रकृतयोगे शक्तो भवतीति बोध्यम्।

सुशील इति। यतो यमाद्यभ्यासशीलः, अत एव सुशील इति। **श्रीनाथवक्त्रा-दिति।** गुरूपदेशं विना क्रमज्ञानं न भवतीति भावः। अत एवोक्तम्—

गुरूपदेशतो ज्ञेयं न तु शास्त्रार्थकोटिभिः ॥ इति।

क्रमं विशेषयति—**महामोक्षवर्त्मप्रकाशमिति।** मोक्षवर्त्म चित्रिणीनाडीमध्यच्छिद्र-रूपवर्त्म तस्य प्रकाशः प्रस्फोटनं येन क्रमेणेत्यर्थः। **शुद्धबुद्धिस्वभाव इति।** शुद्धबुद्धौ ब्रह्मणि स्वभावो यस्य अथवा शुद्धबुद्ध्या स्वस्मिन् आत्मनि भावो यस्येत्यर्थः। **गुप्तं** यथा स्यात् तथेति क्रियाविशेषणम्। अथवा तल्लिङ्गरूपं गुप्तं मुद्रितमुखत्वेनाऽव्यक्तम्, अप्रकाशितमुखमिति यावत्। अथात्र कुण्डलिन्युत्थापनप्रकारं विशेषेणाह आगम-कल्पद्रुम-पञ्चमशाखायाम्—

---

भित्त्वा ब्रह्मद्वारस्य मध्ये विरचयति। जनः कीदृशः? शोभनं शीलं यस्य स तथा। शुद्धबुद्धेर्हेतुः प्रभावो यस्य स तथा। नन्वत्र सुप्तां तां कीदृक्प्रकारेणाक्रम्य नयति? इत्याह पवनदहन-योरिति। तयोराक्रमणेन; अर्थात् पवनयोगेन दहनस्य ऊर्ध्वगतिस्ततः प्रबुद्धा सर्पाकृतिः सा ऊर्ध्वगतिर्भवत्येव। तथाच—

मूलाधारे स्मरेद्दिव्यं त्रिकोणं तेजसो निधिम्।
तस्याग्निरेखामानीय अध ऊर्ध्वव्यवस्थिताम् ॥

इत्यूर्ध्वाम्नायवचनात्।

प्रज्वलद्भुजगाकारा पद्मतन्तुनिभा शुभा।
सर्वेषां जननी प्रोक्ता सूर्यकोटिसमप्रभा ॥
प्रबुध्य वह्नियोगेन मनसा मरुता हता।
सूचीव गुणमादाय व्रजत्यूर्ध्वं सुषुम्णया ॥
उद्घाटयेत् कवाटन्तु यथा कुञ्चिकया हठात्।
कुण्डलिन्या तथा योगी मोक्षद्वारं प्रभेदयेत् ॥

इति गोरक्षसंहितोक्तत्वाच्च ॥ ५० ॥ [ एतन्मते "शुद्धबुद्धिप्रभावः" इति पाठः ]।

[ कुण्डलिनीयोगप्रकारः ]

**भित्त्वा लिङ्गत्रयं तत् परमरसशिवे सूक्ष्मधाम्नि प्रदीपे**
**सा देवी शुद्धसत्त्वा तड़िदिव विलसत्तन्तुरूपस्वरूपा ।**

---

पद्मासने निवेश्याऽङ्के ततः पाणिद्वयं न्यसेत् ।
ततो हंसमुपस्मृत्य शनैः सङ्कोचयेद् गुरुम् ॥
वायुमुत्तोलयेत् तेन वर्त्मना स पुनः पुनः ।
उत्तोल्य भेदयेच्चक्रं तस्याऽनुष्ठानमुच्यते ॥
मूलाधारसरोजे तु त्रिकोणमतिसुन्दरम् ।
कामो भवति तन्मध्ये बालार्ककोटिसन्निभम् ।
तदूर्ध्वे कुण्डलीशक्तिं स्वयम्भूलिङ्गवेष्टिनीम् ॥
तथा—कामाग्निना कूर्चयोगात् परंहंसाभिलाषिणीम् ॥ इति ॥
तथा भूतशुद्धौ—हृदिस्थां कुञ्चिकां कृत्वा गत्वा तदुदरे शिवे ।
कण्ठाद्यं समनुप्राप्य द्वारं कुञ्चिकया हठात् ॥
उद्घाट्य परमेशानि पवनेन प्रदीपयेत् ।
हुताशनप्रतप्तां तु तापेन भृशमूर्ध्वताम् ॥
प्रसुप्तां नागिनीं लिङ्गे योनिवक्त्रे प्रबोधयेत् ।
ततः प्रचालयेद् वायुं यावन्नाड्यन्तरेषु च ॥
गुरुदिष्टेन मार्गेण सकृद् वा कुम्भकेन वै ।
आक्रम्यैवं ततो जीवं सुगुप्तेन पथा भृशम् ॥
ऊर्ध्वोच्छ्वासैरूर्ध्वमुखान् कारयेत् पङ्कजान् शिवे ।
प्रबोधयन् शनैर्भानुं मेरुश्रृङ्गं नयेत् सुधीः ॥ इति ।

तदयं सकलवचन-पर्यालोचनसिद्धः क्रमोऽवधीयताम् । योगी जनः विहितासने उपविश्य स्वाङ्के उत्तानौ करौ कृत्वा खेचरीमुद्रया स्थिरचित्तः सन् देहान्तर्वायुमापूर्य कुम्भकं कृत्वा हृदयमाकुञ्चयेत् । तेन ऊर्ध्वोच्छ्वासोत्सरणनिवृत्तिः । ततो देहान्तरस्थ-वायोरुदर-कण्ठादिव्यापकतया नाड़ीच्छिद्रप्रस्फोटनेनाऽधोगमनमनुभूय गुदमाकुञ्चयाऽपानं संरुध्य वायु-मुत्तोल्य मूलाधारकमलकर्णिकान्तस्त्रिकोणस्थकामं वाममावर्त्तयेत् । तेनोद्दीप्तेन तत्र स्थितेन कामाग्निनोत्तप्तां कुण्डलिनीं हूङ्कारेण चेतयित्वा परमशिवसामरस्याभिलाषिणीं तां स्वयम्भू-लिङ्गमुखं स्फोटयित्वा तच्छिद्रेण चित्रिणीनाड़ीमुखमध्यं प्रापयेदिति समुदितार्थः ॥ ५०

इदानीं कुण्डलिनीयोगप्रकारमाह—भित्त्वेति । संरुद्धवर्त्मनि वर्त्मकरणं भेदः ।

**ब्रह्माख्यायाः शिरायाः सकलसरसिजं प्राप्य देदीप्यते तन्-**
**मोक्षाख्यानन्दरूपं घटयति सहसा सूक्ष्मतालक्षणेन ॥ ५१**

अस्यार्थः—सा देवी कुण्डलिनी तल्लिङ्गत्रयं स्वयम्भू-बाणेतराख्य-लिङ्गत्रयं भित्त्वा तैर्लिङ्गैः संरुद्धवर्त्मनि वर्त्म कृत्वा ब्रह्माख्यायाः शिरायाः चित्रिणीनाड़ीसम्बन्धि तद्-ग्रथितमिति यावत्। ग्रथितं तत् सकलसरसिजं प्राप्य तत्र देदीप्यते, ततः सूक्ष्मता-लक्षणेन सूक्ष्मभावस्वरूपेण सूक्ष्मभावेनेति यावत्। तेन भावेन विलसत्तन्तुरूपस्वरूपा सती परमरस-शिवे परमरसः परमानन्दस्तन्मये शिवे सहस्रदलकर्णिकास्थ-परंबिन्दुरूप-शिवसमीपे अर्थाद् गत्वा मोक्षाख्यानन्दरूपम् अर्थात् साधकस्य नित्यानन्दरूपमुक्तिं सहसा घटयतीत्यर्थः। लिङ्गत्रयमिति। तत् पूर्वोक्तं [लिङ्गत्रयं] षट्चक्रं पञ्चशिवञ्चेति चतुर्दश-ग्रन्थीन् भित्त्वेति बोध्यम्। तदुक्तं शाक्तानन्दतरङ्गिण्याम्—

गच्छन्तीं ब्रह्मरन्ध्रेण भित्त्वा ग्रन्थींश्चतुर्दश ॥

इति। तत्र लिङ्गशिवयोर्भेदप्रकारमाह स्वतन्त्रतन्त्रे—

षट्चक्रस्थान् शिवान् भित्त्वा देवी गच्छति निष्कलम्।
चक्राधिष्ठानतो रूपं धृत्वा तत्तन्मनोहरम् ॥
मोहयित्वा महेशानमानन्दाप्लुतविग्रहम्।
रमित्वा तत्र तत्रैव यावत् प्राप्नोति शाश्वतम्।
मोहितः परया यस्मात् तस्माद् भिन्न उदाहृतः ॥

तथा मायातन्त्रे—भित्त्वा लिङ्गत्रयं देवी शक्तिमार्गेण गच्छति।
तत्तद्रूपेण चक्रेषु निष्कलं प्राप्य निर्वृता ॥

इति। 'तत्तद्रूपेणे'ति वैखरी-मध्यमा-पश्यन्ती-भावेन। तदुक्तम—

प्रथमे वैखरीभावो मध्यमा हृदये स्थिता।
भ्रूमध्ये पश्यन्तीभावः पराभावस्तु बिन्दुनि ॥

अस्यार्थः—परा पश्यन्ती मध्यमा वैखरीति चतस्रः शब्दोत्पादिकाः शक्तयः कुण्डलिन्य-

---

भित्त्वेति। इदानीं तस्या गतिप्रकारमाह। सा देवी तल्लिङ्गत्रयं स्वयम्भू-बाणेतराख्य-लिङ्गान् भित्त्वा ब्रह्माख्यनाड्याः सकलसरसिजान् प्राप्य परमरसशिवे देदीप्यते भृशं दीप्तिं कुर्वती सहसा सूक्ष्मतालक्षणेन मोक्षानन्दरसं घटयति च अर्थात् शिवलिङ्गस्य। सा कीदृशी ? शुद्ध-सत्ता चतुर्विंशतितत्त्वसम्बन्धा। पुनः कीदृशी ? विद्युदिव प्रकाशतन्तुरूपमिव स्वरूपं यस्याः सा तथा। शिवे किम्भूते ? सूक्ष्मधाम्नि सूक्ष्मं धाम यस्य। प्रदीप्ते प्रकृष्टदीप्तिं कुर्वति ॥ ५१

भेदरूपाः। ततः सहस्रारे कुण्डलिनीगमनकाले प्रथमे स्वयम्भूलिङ्गसमीपे वैखरीभावेन तं मोहयित्वा एवं हृदये बाणलिङ्गं मध्यमाभावेन भ्रूमध्ये इतरलिङ्गं पश्यन्तीभावेन मोहयित्वा परंबिन्दुनिकटे पराभावमाप्नोतीत्यर्थः। चक्रभेदप्रकारमाह—

चित्रिणीविवरे रक्तमेदपङ्कसमुद्भवान्।
सव्यदक्षपार्श्वयोश्च नालस्थान् वाहयेच्च तान्॥
पद्मान् नाडीमध्यवर्त्मरोधितान् परमेश्वरि।
नालं वामं विशेत् पद्मं तेन भेदः प्रजायते॥
यथा शिल्पवतीं रश्मिवाहीं लाययति प्रभुः।
भेदयित्वा तथा चक्रं षड् जीवेन नयेच्च ताम्॥ इति॥

तथा—षट्चक्रसन्धिमार्गेण सुषुम्णावर्त्मना तथा।
हंसेन मनुना देवीं सहस्रारं समानयेत्॥

इति। परमरस-शिवं विशेषयति—सूक्ष्मधाम्नि प्रदीप इति। सूक्ष्मधाम निर्वाणशक्त्यात्मक-परंबिन्दोस्तेजो हंसस्तन्मध्ये दीप्यमाने इत्यर्थः। देवीं विशेषयति—शुद्धसत्त्वेति। सत्त्वा-ऽतिसत्त्व-परमसत्व-शुद्धसत्त्व-विशुद्धसत्त्वेति पञ्चविधं शरीरावच्छिन्नचैतन्यमुत्तरोत्तर-प्रकृष्टं तत्रेयं शुद्धसत्त्वा तुरीयेति यावत्। केन प्रकारेण मोक्षाख्यानन्दं घटयतीत्याकाङ्क्षायामुच्यते। तत्र परंबिन्दौ तां कुण्डलिनीं विलाप्य केषांचित् साधकानां शिवात्मनोरभेदेन तद्बिन्दुचिन्तनेन केषांचित् तथा शक्त्यात्मकचिन्तनेन केषांचित् परमपुरुषमयचिन्तनेन तथा केषाञ्चित् केवलशिवशक्तिसामरस्यचिन्तनेन सा देवी मोक्षं घटयतीति। तदुक्तं

मायातन्त्रे—ऐक्यं जीवात्मनोराहुर्योगं योगविशारदाः।
शिवात्मनोरभेदेन प्रतिपत्तिं परे विदुः॥
शक्त्यात्मकं तथा ज्ञानं जगुरागमवादिनः।
पुराणपुरुषस्यान्ये ज्ञानमाहुर्विशारदाः॥
शिवशक्त्योः सामरस्यात्मकं प्रकृतिनोऽपरे॥ इति॥

'ऐक्यं जीवात्मनो'रिति समाधिविषयम्। 'योग'मिति। युज्यते परमात्मना एकीभूयते अनेनाऽसौ योगः, तं योगमित्यर्थः। समाधिमुक्त्वा ध्याने योगभेदमाह—'शिवात्मनो'रित्यादि। 'सामरस्यात्मकमि'ति।

स्त्रीपुंयोगे तु यत् सौख्यं सामरस्यं प्रकीर्त्तितम्।

इति। तच्चिन्तनप्रकारमाह बृहच्छ्रीक्रमे—

कलां कलङ्करहितां चिदानन्दमुपेयुषीम्।
बिम्बरूपनिदानञ्च शुद्धस्फटिकसन्निभम्॥

पराविराजिवामोरुमदालसवपुःश्रियम् ।
नादोपरि महादेवं पश्यन्ति ज्ञानचक्षुषा ॥ इति ।

'कलां' कुण्डलिनीम् । 'चिदानन्दं बिन्दुरूपशिवम् । 'उपेयुषीं' प्राप्तवतीमित्यर्थः । 'बिम्बरूपनिदानं' परशिवम् । तथान्यत्र—

शून्यरूपं परशिवं प्रापयित्वा तु कुण्डलीम् ।
ततः सामरसीभूतां पाययित्वा परामृतम् ।
पुनस्तेन पथा देवीं प्रापयेत् कुलगह्वरम् ॥ इति ॥

यथा—साङ्गत्यं तु तयोः कृत्वा सामरस्यं विभाव्य च ।
तदुद्भूतरसेनैव तर्पयेद् देहदेवताम् ॥ इति ।

प्रकारान्तरमाह गन्धर्वमालिकायाम्—

सहस्रारं शिवपुरं रम्यं दुःखविवर्जितम् ।
सर्वतोऽलङ्कृतैर्दिव्यैर्नित्यपुष्पफलद्रुमैः ॥
सदाशिवपुरं रम्यं कल्पवृक्षसुशोभितम् ।
पञ्चभूतात्मकं ब्रह्म [वृक्षं] गुणत्रयसमन्वितम् ॥
चतुःशाखचतुर्वेदनित्यपुष्पफलान्वितम् ।
पीतं कृष्णं तथा श्वेतं रक्तपुष्पञ्च पार्वति ॥
हरितञ्च विचित्रञ्च नानापुष्पं मनोहरम् ।
एवं कल्पद्रुमं ध्यात्वा तदधो रत्नवेदिकाम् ॥
तत्रोपरि सुपर्यङ्कं नानारत्नोपशोभितम् ।
मन्दारपुष्परचितं नानागन्धानुमोदितम् ॥
तत्रोपरि महादेवः सदा तिष्ठति सुन्दरि ।
ध्यायेत् सदाशिवं देवं शुद्धस्फटिकसन्निभम् ॥
बहुरत्नसमाकीर्णं दीर्घबाहुं मनोहरम् ।
सुखप्रसन्ननयनं स्मेरास्यं सततं प्रिये ॥
श्रवणे कुण्डलोपेतं रत्नहारेण शोभितम् ।
शोणे [गले] पद्मसहस्रेण मालया शोभितं वपुः ॥
अष्टबाहुं त्रिनयनं शिवं पद्मदलेक्षणम् ।
पादयोर्नूपुरं रम्यं शब्दब्रह्ममयं वपुः ॥
एवं स्थूलवपुस्तस्य भावयेत् कमलेक्षणे ।
पद्ममध्ये स्थितं देवं निरीहं शब्द[व]रूपवत् ।

[ समाधियोग-स्वरूपम् ]

**नीत्वा तां कुलकुण्डलीं लयवशाज् जीवेन सार्द्ध सुधी-**
**र्मोक्षे धामनि शुद्धपद्मसदने शैवे परे स्वामिनि ।**

शब्द[व]रूप-महादेव-कृत्यं नास्ति कदाचन ।। इति ।।
तथा—ध्यायेत् कुण्डलिनीं देवीं स्वयम्भूलिङ्गवेष्टिनीम् ।
हंसेन मनुना देवीं सहस्रारं समानयेत् ।।
सदाशिवो महादेवो यत्रास्ते परमेश्वरि ।
देवीं रूपवतीं कामसमुल्लासविहारिणीम् ।।
मुखारबिन्दगन्धेन मोदितं परमं शिवम् ।
प्रबोध्य परमेशानि तत्रैवोपविशेत् प्रिये ।।
शिवस्य मुखपद्मं हि चुचुम्बे कुण्डली शिवे ।
सदाशिवेन देवेशि क्षणमात्रं रमेत् प्रिये ।।
अमृतं जायते देवि तत्क्षणात् परमेश्वरि ।
तदुद्भवामृतं देवि लाक्षारससमायुतम् ।।
तेनाऽमृतेन देवेशि तर्पयेत् परदेवताम् ।
षट्चक्रदेवतास्तत्र सन्तर्प्याऽमृतधारया ।।
आनयेत् तेन मार्गेण मूलाधारं पुनः सुधीः ।
यातायातक्रमेणैव तत्र कुर्यान्मनोलयम् ।।
एवमभ्यस्यमानस्तु अहन्यहनि पार्वति ।
जरामरणदुःखाद्यैर्मुच्यते भवबन्धनात् ।।

इति । एवं प्रकारान्तरस्तन्त्रान्तरे अनुसन्धेयः ।। ५१ ।।

कुण्डलिनी-ध्यानयोगमुक्त्वा समाधियोगमाह—नीत्वेति । अस्यायमर्थः—समाधौ यतः योगीन्द्रः सुधीस्तां पूर्वोक्तोत्थापनक्रमेण ब्रह्मद्वारं प्राप्तवतीं भगवतीं कुण्डलिनीं जीवेन सार्द्धं लयवशाद् लयक्रमेण शुद्धपद्मसदने सहस्रारमध्ये परे परंबिन्दुरूपे शैवे शिवपदे स्वामिनि स्वामिनिकटे नीत्वा इष्टफलप्रदामिष्टदेवतारूपां तां स्वामिरूप-परं-बिन्दुना सहैकीभावं प्रापय्य परां परंबिन्दुस्वरूपां ध्यायेत् । चैतन्यरूपामिति ।

नीत्वेति । तस्यास्तु साधकाय ओमित्याह—नीत्वेति । सुधीः जनस्तां कुलकुण्डलिनीं जीवेन जीवात्मना सार्द्धं लयवशात् लीनां कृत्वा शैवे शिवसम्बन्धीयमोक्षे धामनि नीत्वा ध्याये-

**ध्यायेदिष्टफलप्रदां　भगवतीं चैतन्यरूपां　परां**
**योगीन्द्रो गुरुपादपद्म-युगलालम्बी　समाधौ　यतः ॥५२**

तदनन्तरं परंबिन्दुमपि तन्मध्यशून्यमध्ये चिदात्मनि विलाप्य शुद्धचैतन्यरूपां ध्यायेदिति समुदायार्थः। ततः सोऽहम्भावेन जीवात्म[परमात्म]नोरैक्यं ज्ञात्वा तत्र चित्तं विलाप्य सर्वव्यापकसम्पूर्ण-ज्ञानात्मना स्थिरचित्तः सन् तिष्ठेदिति शेषः। तदुक्तं श्रीमदाचार्य-स्वामिना—मकारं कारणं प्राज्ञश्चिदात्मनि विलापयेत्।

चिदात्माऽहं नित्यशुद्धबुद्धमुक्तसदद्वयः॥
परमानन्दसन्दोहो वासुदेवोऽहमोमिति।
ज्ञात्वा विवेचकं चित्तं तत्साक्षिणि विलापयेत्॥
चिदात्मनि विलीनं चेत् तच्चित्तं नैव चालयेत्।
पूर्णबोधात्मना तिष्ठेत् पूर्णाचलसमुद्रवत्॥ इति॥

इति। 'मकारमि'ति प्रणवपक्षे। अत्र 'कारणं' परंबिन्दुः। 'वासुदेवोऽहमि'ति "वैष्णवं तल्लपन्ती" त्यनेनैकवाक्यतया वैष्णवपक्षे। तेन यो यद्देवतोपासकः, स सोऽहमिति ज्ञात्वा। ॐ इति प्रणवोपासनायाम्। अन्यत्र तत्तन्मन्त्रमयकुण्डलिनीस्वरूपं ज्ञात्वेति बोध्यम्।

तन्त्रान्तरे—किरणस्थं तदग्निस्थं चन्द्रभास्करमध्यगम्।
महाशून्य[मूल्य]मयं कृत्वा * पूर्णस्तिष्ठति योगिराट्॥

इति। जीवेन सार्द्धं नीत्वेति। पूर्वप्रदर्शितवचनाद् हंस इति जीवात्मानं हृदयस्थं दीपकलिकाकारं हंस इति मन्त्रेण मूलाधारमानीय तेन सार्द्धं कुण्डलिनीं नयेत्। लयवशादिति। लयक्रममाह—

त्रिकोणाख्ये तु देवेशि लङ्कारं चिन्तयेत् ततः।
ब्रह्माणं तत्र सञ्चिन्त्य कामदेवञ्च चिन्तयेत्॥

---

दिति। "अपानः कर्षति प्राणं प्राणोऽपानञ्च कर्षति" इत्येतत्क्रमेण यदा प्राणो जीवात्माकर्षयति तदैव जीवात्मना सार्द्धं तस्या आनयनम्। कीदृशे? शुक्लपद्मे सहस्रारपद्मे सदनं स्थानं यस्य। परे उत्कृष्टे। अथवा परे स्थानस्वामिनि सर्वेषामधिकारिणि, संहारकारणत्वात्। तां कीदृशीम्? इष्टफलं प्रददातीति इष्टफलप्रदाम्। भगवतीं श्रीकाममाहात्म्यवतीम्। चैतन्यरूपां चेतनास्वरूपाम्। परां प्रकृष्टाम्। गुरोः पादपद्मयुगलालम्बी योगीशः एवंक्रमेण भावयेदिति सम्बन्धः। समाधौ ध्यानधारणादौ यतः। [एतन्मते "शुक्लपद्मसदने" इति "योगीश" इति च पाठः]॥ ५२॥

---

* "महाशून्ये लयं गत्वा" इति ताराहस्यवृत्तिकारधृतपाठः।

जीवं तत्रैव निश्चिन्त्य प्रणवोच्चारणेन च ।
पदे च गमनं पत्यौ विसर्गेनाशिकामिनि ।। *
घ्राणं संचिन्त्य देवेशि महेशि प्राणवल्लभे ।
डाकिनीं परमाराध्यां शक्तिञ्च भावयेत् ततः ।।
एतानि गिरिजे मातः पृथ्वीं नीत्वा गणेश्वरि ।।
तथा—ततश्च पृथिवीं धन्यां गन्धे[न्धं] नीत्वा महेश्वरि ।
आकृष्य प्रणवेनैव जीवात्मानं नगेन्द्रजे ।।
कुण्डलिन्या सह प्राणं गन्धमादाय साधकः ।
सोऽहं तु मनुना देवि स्वाधिष्ठाने प्रवेशयेत् ।।
तथा—तत्कर्णिकायां वरुणं तत्रापि भावयेद् हरिम् ।
युवानं राकिणीं शक्तिं चिन्तयित्वा वरानने ।।
रसनेन्द्रियकूपस्थं जलञ्च कामलालसे ।
एतानि गन्धञ्च शिवे रसं नीत्वा वरानने ।
जीवात्मानं कुण्डलिनीं रसञ्च मणिपूरके ।।
तथा—तत्कर्णिकायां सुश्रोणि वह्निं संचिन्त्य साधकः ।
तत्र रुद्रः स्वयं कर्त्ता संहारे सकलस्य च ।।
लाकिनीशक्तिसंयुक्तं भावयेत् तं मनोहरम् ।
तत्र चक्षुरिन्द्रियञ्च ध्यात्वा तेजोमयं शिवे ।।
एतद्रसानि सुभगे रूपे नीत्वा महाभगे ।
जीवात्मानं कुण्डलिनीं रूपञ्चाऽनाहते नयेत् ।।
तथा—तत्कर्णिकायां वायुञ्च जीवस्थाननिवासिनम् ।
तत्र योनिमण्डलञ्च बाणलिङ्गविराजितम् ।।
काकिनीशक्तिसंयुक्तं तत्र वायुं त्वगिन्द्रियम् ।।
एतानि रूपं संयुज्य स्पर्शे त्वमलकारिणि ।
जीवं कुण्डलिनीं स्पर्शं विशुद्धे स्थापयेत् ततः ।।
तथा—तत्कर्णिकायामाकाशं शिवञ्च शाकिनीयुतम् ।
वाचः श्रोत्रञ्च आकाशे संस्थाप्य नगनन्दिनि ।।

---

* बीजं तत्रैव संचिन्त्यं पाणावादानमेव च ।
पदे च गमनं पायौ विसर्गं नसि कामिनी ।। इति पाठान्तरम् ।

एतानि स्पर्शं शब्दे वै नीत्वा शङ्करि मत्प्रिये।
जीवं कुण्डलिनीं शब्दञ्चाज्ञाचक्रे निधापयेत्॥

इत्यन्तं कङ्कालमालिन्याम्। 'त्रिकोणाख्ये' प्रकान्तमूलाधारत्रिकोणे। तन्मध्ये लङ्कार-चिन्तनमिति। एवं प्रणवोच्चारणेन जीवानयनमिति मतान्तरम्। विसर्गनाशिकामिनीति। विसर्ग उपसर्गः, कामोद्वेग इति यावत्, तं नाशयितुं शीलं यस्याः सा कुण्डलिनी। पत्यौ पदे सहस्रदलकमलस्थ-बिन्दुमयशिवे गमनं साधकेन कार्यमिति शेषः। एतानि लङ्कार-ब्रह्म-कामदेव-डाकिनीशक्ति-घ्राणेन्द्रियाणि पृथ्वीं नीत्वा पृथिव्यां विलाप्य पृथिवीं गन्धतत्त्वे विलाप्य जीवात्मानं कुण्डलिनीं गन्धतत्त्वं प्रणवेनाकृष्य सोऽहंमन्त्रेण स्वाधिष्ठाने समानये-दिति शेषः। एवं सर्वत्र बोध्यम्। जीवं कुण्डलिनीं शब्दतत्त्वमाज्ञाचक्रे नीत्वा शब्दतत्त्वं तत्रस्थाहङ्कारे अहङ्कारं महत्तत्त्वे महत्तत्त्वं हिरण्यगर्भाख्यसूक्ष्मप्रकृतौ प्रकृतिं परबिन्दौ विलापयेत्। तदुक्तं **मन्त्रतन्त्रप्रकाशे**—

अहङ्कारे हरेद् व्योम सशब्दं तन्महत्यपि।
महच्च सर्वशक्तीनामव्यक्ते कारणे परे॥
सच्चिदानन्दरूपं यद् वैष्णवं कारणं परम्।
पृथिव्यादिक्रमात् सर्वं तत्र लीनं विचिन्तयेत्॥

इति। सर्वशक्तीनामव्यक्ते हिरण्यगर्भाख्य-सूक्ष्मप्रकृतौ महद्धरेत्। प्रकृतिश्च परे परबिन्दु-रूपकारणे हरेदित्यर्थः। अत्र—

समाधिकालात् प्रागेवं विचिन्त्याऽतिप्रयत्नतः।
स्थूलसूक्ष्मक्रमात् सर्वं चिदात्मनि विलापयेत्॥

इत्याचार्यविधानात् स्थूलानां सूक्ष्मे लयः। पृथिव्यादिकमनाहतपर्यन्तं, तेषामुक्तक्रमेण लये पृथिव्याश्रितत्वेन पादघ्राणेन्द्रिययोः पृथिवीप्रपञ्च-समुदायस्य च पृथिवीस्थाने विलापनम्। एवं जलस्थाने पाणि-रसनेन्द्रिय-जलप्रपञ्चानाम्। वह्निस्थाने पायु-चक्षुरिन्द्रिय-वह्निप्रपञ्चा-नाम्। वायुस्थाने उपस्थ-त्वगिन्द्रिय-वायु-प्रपञ्चानाम्। आकाशस्थाने वाक्श्रोत्रेन्द्रिया-काशप्रपञ्चानां लयः। आज्ञाचक्रे सूक्ष्ममहदहङ्कारादिकं तेषामुक्तक्रमेण कारणे लयः। ततः क्षकाराद्यकारान्तवर्णान् विलोमेन विलाप्य 'स्थूलसूक्ष्मक्रमात् सर्वमि'त्यत्र सर्वमित्युपादानाद् ब्रह्ममात्रावस्थितये आज्ञाचक्रार्ध्वस्थित-पूर्वोपदर्शित-बिन्दुबोधिन्यादि-सकलकारणशरीरमपि विलोमेनाऽऽदिकारणे परंबिन्दौ विलापयेदिति। तत्प्रकारमाह—

सङ्कल्प्यैवं ततो न्यासस्थानाद् वर्णांश्च संहरेत्।
प्रतिलोमे ले क्ष-लयो लकारस्य हकारके॥
ह-लयश्च सकारे च सलयश्च षकारके।

क्रमेणैव-म-पर्यन्तं लयमुत्पाद्य यत्नतः ॥ इति ॥

तथा—तदर्णौ संहरेद् बिन्दौ कलायां तं नियोजयेत् ।
तां नादेनान्तरं नादं नादान्ते संहरेत् पुनः ।
तमुन्मन्यां समायोज्य विष्णुवक्त्रे नयेच्च ताम् ॥
तं पुनर्गुरुवक्त्रे तु योजयेत् साधकोत्तमः ।
ततश्च योजयेद् वर्णान्निलयेत् परमे शिवे ॥ इति ।

'विष्णुवक्त्रे' पुंबिन्दौ ।

सूर्यबिन्दुर्मुखं प्रोक्तमधस्तादिन्दुपावकौ । इत्यादि—
बिन्दुः पुरुष इत्युक्तो विसर्गः प्रकृतिः स्मृता ।

इत्यादि-वचनयोरेकवाक्यतया तस्यैव वक्त्रत्वात् ।

नीत्वा तां पुंसि बिन्द्वात्मनि तमथ परात्मन्यथो कालतत्त्वे
तद्वै शक्तौ चिदात्मन्यपि च नयतु तां केवले धाम्नि शान्ते ।

इति केशवाचार्यवचनैकवाक्यत्वाच्च । अत्र स्वस्वकारणे संहरणदर्शनात् नादान्तस्य व्यापकशक्तौ, तामुन्मन्यां, तां समन्यां, तां विष्णुवक्त्रे इति बोध्यम् । एवंप्रकारेण वर्णानां संहरणे षट्चक्राणां संहारः, पद्मदलानां वर्णमयत्वात् । तदुक्तं विश्वसारे—

आदिवर्णात्मकं पत्रं पद्मानां परिकीर्त्तितम् ॥

इति । अथ वर्णपद्मोभयसंहरणप्रकारमाह सम्मोहनतन्त्रे—

वादि-सान्तान् दलस्थार्णान् संहरेत् कमलासने ।
तं षट्पत्रमये पद्मे बादिलान्ताक्षरान्विते ।
स्वाधिष्ठाने समायोज्य बोधयेदाज्ञया गुरोः ॥ इत्यादि—
द्विपत्रे हक्षलसिते योजयित्वा ततः सुधीः ।
तदर्णौ संहरेद् बिन्दौ तं कलायां नियोजयेत् ॥

इत्यन्तवचनम् । ततश्च मूलकमले चतुर्वर्णं संहृत्य तत्पद्मं स्वाधिष्ठाने संहरेत् । एवं-क्रमेणाऽऽज्ञाचक्रस्थ-हक्षपर्यन्तं संहृत्य तत्पद्मं बिन्दौ, बिन्दुं बोधिन्याम् एवं पूर्ववत् सर्वं परंबिन्दौ विलापयेदिति । एवञ्चाऽऽज्ञाचक्रसंहरणे तत्कर्णिकास्थ-हाकिनीतरलिङ्ग-प्रणवादीनां निराधारस्थित्यसम्भवात् प्रकृतिपर्यन्त-संहरणानन्तरं तानपि परंबिन्दौ संहरेत् । शुद्धपद्मसदने किम्भूते ? मोक्षे धामनि मुक्तिसम्पादकस्थाने इत्यर्थः । योगीन्द्रं विशेषयति—गुरुपादपद्मयुगलालम्बीति । गुरूपदेशेनैव सर्वसिद्धिरित्यतस्तत्पदाश्रितः सन्निति भावः । समाधौ यत इति । समाधिलक्षणमाह कुलार्णवे—

यदत्र नात्र निर्भासः स्तिमितोदधिवत् स्मृतम् ।

[ कुण्डलिन्या मूलाधारे प्रत्यावर्त्तनप्रकारः ]

**लाक्षाभं परमामृतं परशिवात् पीत्वा पुनः कुण्डली**
**नित्यानन्दमहोदयात् कुलपथान्मूले विशेत् सुन्दरी ।**
**तद्दिव्यामृतधारया स्थिरमतिः सन्तर्पयेद् दैवतं**
**योगी योगपरम्पराविदितया ब्रह्माण्डभाण्डस्थितम् ॥ ५३**

---

स्वरूपशून्यं यद् ध्यानं तत् समाधिर्विधीयते ॥

तथान्यत्र—समत्वभावना नित्यं जीवात्म-परमात्मनोः ।

समाधिमाहुर्मुनयः प्रोक्तमष्टाङ्गलक्षणम् ॥ इति ॥

"योगश्चित्तवृत्तिनिरोधः" इति पातञ्जलसूत्रम् । तस्मिन् यतः तदभ्यासयुक्त इत्यर्थः ॥ ५२

उक्तप्रकार-सकलयोगचिन्तनानन्तरं यत् कर्त्तव्यं तदाह—लाक्षाभमिति । अस्यार्थः—कुण्डलिनी सुन्दरी परशिवात् परमामृतं पीत्वा नित्यानन्दमहोदयान्निःसृत्य कुलपथात् चित्रिणीनाड़ीमध्यस्थ-ब्रह्मपथं प्राप्य मूले मूलाधारे पुनः प्रविशेदित्यन्वयः । पीत्वेति पूर्वोक्त-तत्तद्ध्यानानन्तरं शिवशक्त्योः सामरस्यं विभाव्य सामरस्यानन्देन परशिवादुत्पन्न-परमामृतेन कुण्डलिनीं तर्पयेत् । तत् तर्पणामृतं पीत्वेत्यर्थः ।

साङ्गत्यं तु तयोः कृत्वा पाययित्वा परामृतम् ॥

इति पूर्वोक्तवचने 'पाययित्वे'त्यनेन पानकार्यप्रेरणबोधनात् ।

अमृतं विशेषयति—लाक्षाभमिति । अलक्तरसवद्रक्ताभमित्यर्थः । नित्यानन्द-महोदयादिति । नित्यानन्दस्य महोदयो महाप्रकाशो यत्र तस्मादित्यर्थः । मूले—विशे-दिति । येन प्रकारेणोत्ताननं पुनस्तेन प्रकारेण मूलाधारे आनयनम् । तेन यदा लिङ्गादि-भेदक्रमेणोर्ध्वं गच्छति तदा तद्रूपेणैव पुनराधारमायाति । तदुक्तं श्रीमदाचार्यस्वामिना—

सुधाधारासारैश्चरणयुगलान्तर्विगलितैः

प्रपञ्चं सिञ्चन्ती पुनरपि रसाम्नायमहसा ।

---

लाक्षाभमिति । इदानीमस्या आगमनं स्वस्थाने इति तदाह । सा कुण्डलिनी पूर्णा-नन्दस्य महान् उदयो यस्मात् परमशिवात् सदाशिवात् परमामृतं पीत्वा तेनैव कुलपथेन मूले मूलाधारपद्मे । सा कीदृशी ? सुन्दरी । अमृतं कीदृशम् ? लाक्षाभं रजःसम्बन्धात्, ईदृशी भावनैव कर्त्तव्या, महाग्रन्थोक्तत्वात् । अतो योगी ध्यानपरम्पराक्रमेण ज्ञातया तद्दिव्यामृतधारया स्थिरमतिः सन् ब्रह्माण्डभाण्डस्थितं सर्वदैवतं सन्तर्पयेत् ॥ ५३ ॥ [ अस्मिन् पद्ये "पूर्णानन्दमहो-दयादि"ति पाठः ]

[ षट्चक्रयोगक्रमज्ञानफलम् ]

## ज्ञात्वैतत् क्रममुत्तमं यतमना योगी यमाद्यैर्युतः
## श्रीदीक्षागुरु-पादपद्म-युगलामोदप्रवाहोदयात् ।

अवाप्य स्वां भूमिं भुजगनिभमध्युष्टवलयं
स्वमात्मानं कृत्वा स्वपिषि कुलकुण्डे कुहरिणी ॥

इति । अत्र श्लोके—'रसाम्नायमहसे'ति । आम्नायते कथ्यते विधीयत इति यावत्, तेनाम्नायो विधानम् । महः प्रकाशः । 'पुन'रित्यनेन पूर्वरूपरसविधानप्रकाशेन स्वां भूमिं मूलाधारमवाप्य इत्यर्थात् तथा प्रतीयते । लयक्रमेण गमने तु पुनः सृष्टिक्रमेणाऽऽगमनम् ।

तदुक्तं यथा—ततः सा कुण्डली शक्तिर्मुद्राकारा सुरेश्वरी ।
पुनस्तेन प्रकारेण गच्छत्याधारपङ्कजे ॥

इति । तथा भूतशुद्धिप्रकरणे—

परात्मनः पृथिव्यादि तद्वत् तत्त्वानि च क्रमात् ।
जीवं कुण्डलिनीं चापि स्वस्थानं प्रापयेत् क्रमात् ॥ इति ॥

विशेषस्तु—प्रकाशमाना प्रथम-प्रयाणे प्रतिप्रयाणेऽप्यमृतायमाना ॥ इति ॥ तदनन्तरं तद्दिव्यामृतधारया पूर्वदर्शित-शिवशक्तिसामरस्योत्पन्न-परमामृतस्य ब्रह्मरन्ध्राद् मूलाधारपर्यन्त-गलितधारया । अत एवोक्तं तृतीयश्लोके—"ब्रह्मद्वारं तदास्ये प्रविलसति सुधाधारगम्यप्रदेशम्" इति । स्थिरमतिः स योगी । दवतमिष्टदैवतं षट्चक्रस्थ-डाकिन्यादिदैवतं च संतर्पयेदित्यर्थः ।

तेनाऽमृतेन देवेशि तर्पयेत् परदेवताम् ।
षट्चक्रदेवतास्तत्र संतर्प्याऽमृतधारया ॥

इति पूर्वोक्तवचनात् । अमृतधारां विशेषयति—योगपरम्पराविदितयेति । योगस्य गुरूपदेशपरम्पराप्राप्तत्वाद् योगपरम्परेत्युक्तिरिति भावः । तेन गुरूपदेशपरम्पराविदितयेति फलितार्थः । अमृतं विशेषयति—ब्रह्माण्डभाण्डस्थितमिति । ब्रह्माण्डस्य भाण्डमाधारपात्रं कुण्डलिनी, तस्याः सर्वेषां योनिरूपत्वात् तत्र स्थितं कुण्डलिनीपात्रस्थितमित्यर्थः ॥ ५३

उक्तयोगक्रमज्ञानफलमाह—ज्ञात्वैतदिति । श्रीदीक्षागुरुपादपद्मयुगलामोद-प्रवाहोदयादिति । आमोद आनन्दस्तस्य प्रवाहोऽविच्छिन्नोत्तरोत्तरसम्बन्धस्तेन नित्यानन्द

---

ज्ञात्वैतदिति । एतदुत्तमं क्रमं ज्ञात्वा संयतमनाः सन् योगी जनो यमाद्यभ्यासेषु श्रीदीक्षागुरुपादपद्मयुगलामोदप्रवाहोदयात् संसारे न हि जन्यते । न हि कदा संक्षये संक्षीयते ।

संसारे न हि जन्यते न हि कदा संक्षीयते संक्षये
नित्यानन्दपरम्पराप्रमुदितः शान्तः सतामग्रणीः ॥ ५४

[ षट्चक्रश्लोकाध्ययनफलम् ]

योऽधीते निशि सन्ध्ययारथ दिवा योगी स्वभावे स्थितो
मोक्षज्ञाननिदानमेतदमलं शुद्धश्च गुप्तं परम्।
श्रीमत् श्रीगुरुपादपद्मयुगलालम्बी यतान्तर्मना-
स्तस्यावश्यमभीष्टदैवतपदे चेतो नरीनृत्यते ॥ ५५

---

इति यावत्, तस्योदयो यस्मात् तादृशपादपद्मयुगलाज् ज्ञात्वेत्यर्थः। दीक्षागुरुरिति। प्रथमोपस्थितत्वेन गौरवातिशयेन च तद्ग्रहणम्। तदभावे अन्यगुरोरपि ज्ञातव्यम्।

अत एवोक्तम्—मधुलुब्धो यथा भृङ्गः पुष्पात् पुष्पान्तरं व्रजेत्।
ज्ञानलुब्धस्तथा शिष्यो गुरोर्गुर्वन्तरं व्रजेत् ॥

इति। नित्यानन्दपरम्पराप्रमुदित इति। नित्यानन्दधारारूप-हर्षयुक्त इत्यर्थः। सतां योगिरूपप्रशस्तजनानामग्रगण्य इत्यर्थः ॥ ५४ ॥

षट्चक्रश्लोकाध्ययनफलमाह—योऽधीत इति। स्वभावे स्थित आत्मभावे नियुक्त इत्यर्थः। यतान्तर्मना इति। यतं योगाभ्यासेन स्थिरीकृतमन्तरात्मनि मनो येन तादृश इत्यर्थः। स्पष्टमन्यत ॥ ५५ ॥

इति श्रीपूर्णानन्दयतिविरचितश्रीतत्त्वचिन्तामण्यन्तर्गत-
षट्चक्रविवरण-श्लोकार्थपरिष्कारिण्या-
मष्टमं प्रकरणं समाप्तम्

---

प्रलयेऽपि तस्य क्षयो नास्तीत्यर्थः। स कीदृशः? पूर्णानन्दपरम्परया प्रमुदितं स्वान्तर्यस्य स तथा। सतामग्रणीरपि भवति ॥ ५४ ॥ [ अत्र मते "पूर्णानन्दपरम्पराप्रमुदितस्वान्तः" इति पाठः ]

योऽधीते इति। अथैतत् सुगुप्तक्रमं यः स्वीयभावस्थितः सन् निशि सन्ध्ययोर्दिवा अधीते तस्याऽवश्यमेव अभीष्टदैवतपदे चित्तं मुहुर्नृत्यति। यतं निश्चलम् अन्तर्मनो यस्य स तथेति ॥ ५५

इति षट्चक्रभेदटिप्पणी समाप्ता

विश्वनाथकृता

# षट्चक्रविवृतिः

॥ * ॥ श्रीश्रीगुरवे नमः ॥ * ॥

## [ प्रतिज्ञा ]

टीका श्रीविश्वनाथेन नत्वा संतन्यतेऽम्बिकाम् ।
कैवल्य-कलिका-तन्त्र-द्वितीय-पटलस्य च ॥

बृद्धरूपी परमेश्वरो वशिष्ठाय कुलभावमुक्त्वा कुलाचारं विना तस्मिन् नाधिकारः, अतस्तदुपदेष्टं गुरुसम्मानपूर्वकमाह—यज्ज्ञातेनेत्यादि । तथाच कालिकापुराणे—

यः पूजयेद् वामभावैर्न तस्य ऋणशोधनम् ।
पितृ-देव-नरादीनां जायते च कदाचन ॥
सोऽभ्यस्य त्रिपुरायोगं तेन योगेन संयुतः ।
जायते यदि सुप्राज्ञस्तदा मोक्षमवाप्नुयात् ॥—( ७४।१३३-३४ )

'त्रिपुरायोगं' कुण्डलिनीयोगं, कुण्डलिन्याः सर्वदेवात्मकत्वात् । उक्तं—"सर्वदेवमयी सा हि" इति ॥ * ॥

## [ इड़ादिनाड़ीत्रयनिरूपणम् ]

मेरोर्मेरुदण्डस्य बाह्यप्रदेशे क्रोड़े शशिमिहिरशिरे इड़ापिङ्गलानाड्यौ । "मेरुदण्ड-बहिःपार्श्वे चन्द्रसूर्यात्मके" इति मायातन्त्रात् । तयोः स्थितिप्रकारमाह टीकाकार-धृततन्त्रे—वाममुष्कात् तु सम्भूता नाड़ी दक्षिणगामिनी ।

सुषुम्णाकलिता जाता वामभागं समाश्रिता ॥
हृद्गता दक्षभागस्था जत्रुमध्यं समाश्रिता ।
वामं तु नासिकाद्वारं प्राप्नोति गिरिजेऽमले ॥
नाड़ी दक्षिणमुष्कात् तु सञ्जातोत्तरगामिनी ।
सुषुम्णाकलिता जाता भागं दक्षिणमाश्रिता ॥
हृद्गता वामभागस्था जत्रुमध्यं समाश्रिता ।
दक्षिणं नासिकाद्वारं प्राप्नोति गिरिजेऽमले ॥

चापाकृतिर्भूत्वा दक्षिणगामिनी उत्तरगामिनीति ध्येयम् । मध्ये नाड़ी सुषुम्णेति । मध्ये मेरुदण्डस्य मध्यस्थविवरे ।

मेरुदण्डबहिःपार्श्वे चन्द्रसूर्यात्मिके शिरे ।
मध्ये सुषुम्णा························ ॥

इति मायातन्त्रात् । स्पष्टमाह सारसमुच्चये—

या मुण्डाधारदण्डान्तरविवरगता हारनीहारगौरी
सौधीं धारां नमोऽम्भोरुहकुहरविधोः संस्रवन्तीं वहन्ती ।
तस्या वज्राख्यनाड्याः खगमुदरदरीमध्यगं यो विदध्यात्
तस्या ब्रह्माण्डभाण्डप्रलयमपघनं स्याद् घनं मृत्युमृत्योः ॥

सा कीदृशी ? हारनीहारगौरी मुक्ताहारनीहारगौरी । "गौरोऽरुणे सिते पीते" इत्यमरः । एतेन सुषुम्णान्तर्गताया वज्राया मेरुदण्डान्तर्विवरगतात्वकथनेन सुषुम्णाया अपि मेरुदण्डान्तर्विवरगतात्वसिद्धिः । यद्वा—[या] मुण्डाधारदण्डे यदन्तरविवरं तत्र [विवर]गता, अर्थात् सुषुम्णाया विवरगता ।

अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये ।
छिद्रात्मीय-विना-बहिरवसरमध्येऽन्तरात्मनि च ॥

इत्यमरः । एवञ्च 'सुषुम्णाकलिते'ति परम्परया आश्रितेत्यर्थः । यद्वा—तत्र तत्र स्थाने मेरुदण्डं भित्त्वा सुषुम्णाकलिता इत्यर्थः । गौतमीयेऽपि—

विश्वं शरीरमित्युक्तं पञ्चभूतात्मकं मुने ।
चन्द्रसूर्याग्नितेजोभिर्जीवब्रह्मैक्यरूपकम् ॥
तिस्रः कोट्यस्तदर्द्धेन शरीरे नाड्या मताः ।
तासु मुख्या दश प्रोक्तास्तासु तिस्रो व्यवस्थिताः ॥
प्रधाना मेरुदण्डेऽत्र चन्द्रसूर्याग्निरूपिणी ।
इड़ा वामे स्थिता नाड़ी शुक्ला चन्द्रस्वरूपिणी ॥
शक्तिरूपा तु सा नाड़ी साक्षादमृतविग्रहा ।
दक्षिणे या पिङ्गलाख्या पुंरूपा सूर्यविग्रहा ॥
सर्वतेजोमयी सा तु सुषुम्णा वह्निरूपिणी ।

मेरुदण्डे मेरुदण्डान्तरविवरे । शारदायामपि—

षण्णवत्यङ्गुलायामं शरीरमुभयात्मकम् ।
गुदध्वजान्तरे कन्दमुत्सेधाद् द्व्यङ्गुलं विदुः ॥
तस्माद् द्विगुणविस्तारं वृत्तरूपेण शोभितम् ।
नाड्यस्तत्र समुद्भूता मुख्यास्तिस्रः प्रकीर्त्तिताः ॥
इड़ा वामे स्थिता नाड़ी पिङ्गला दक्षिणे मता ।

तयोर्मध्यगता नाड़ी सुषुम्णा वंशमाश्रिता ॥
पादाङ्गुष्ठद्वये याता शिफाभ्यां शिरसा पुनः ।
ब्रह्मस्थानं समापन्ना सोमसूर्याग्निरूपिणी ॥

भट्टाः—शिफाभ्यां मूलाभ्याम् । शिरसा अग्रभागेन । वंशं पृष्ठवंशम् आश्रित्य विवरगतात्वमुक्तम् । या मुण्डाधारदण्डान्तरविवरगतेत्यनेनाहुः । तन्त्रान्तरे तु—

व्योम प्रोद्भिद्य नासाग्रे गतौ चन्द्र-दिवाकरौ ।
अधोवक्त्रं महापद्मं क्रोड़ीकृत्य सुषुम्णया ॥
व्याघुट्य नासिकामध्यं गतं चित्रा तु तद् गता ।
ऊर्ध्वं भित्त्वा तु लिङ्गं वै इतरान् पुष्करान् तथा ॥
बहिरुद्गमनाकाङ्क्षाकाङ्क्षिणी मोक्षदायिनी (?) ।
जीवेनाहतसम्बन्धात् स्थिता सप्तमसंन्नि[वि]धौ ॥

तद् गता सुषुम्णायां गता (1) । सा तु तत्समदेशं गता, लिखिष्यमाणाविरोधात् (2) । अत एव "सप्तमसंन्नि[वि]धौ" इत्युक्तम् । नासिकामध्यं नासिकाद्वयमध्यस्थानं न तु नासिकाद्वयमध्यं गता तत्र इड़ापिङ्गले गते । अत एव "कुम्भयेच्च सुषुम्णया" इति सङ्गच्छते । त्रितयेति । यतः सोमसूर्याग्निरूपा अतस्त्रितयगुणमयी । सुषुम्णा कादृशी ? स्मेरं प्रस्फुटितं तथाच प्रस्फुटितकनकधूस्तूरपुष्पमिव ग्रथितं वपुर्यस्याः सा तथा । यथा कनकधूस्तूरपुष्पस्य मध्ये अन्यत् पुष्पम् एवम्भूतग्रथित-तमवपुरिति भावः । केचित् तु—ग्रथिततमवपुरिति पाठमाहुः । कुतः सुषुम्णा उत्पन्ना तदाह—कन्दमध्यादिति । कन्दरूपमाह

शारदायाम्—गुदध्वजान्तरे कन्दमुत्सेधाद् द्व्यङ्गुलं विदुः ।
तस्माद् द्विगुणविस्तारं वृत्तरूपेण शोभितम् ॥
तत्र नाड्यः समुद्भूता............इत्यादि ।

गोरक्षसंहितायान्तु—ऊर्ध्वं मेढ्रादधो नाभेः कन्दयोनिः खगाण्डवत् ।
तत्र नाड्यः समुत्पन्नाः सहस्राणां द्विसप्ततिः ॥

इत्युक्तम् । कन्दयोनिः कन्दरूपोत्पत्तिस्थानं, नाड़ीनामित्यर्थः । वज्राख्यां नाड़ीमाह—वज्राख्येति । मेढ्रदेशात् लिङ्गमूलात् शिरःपर्यन्ता इत्यर्थः । कुत्र सा ? तदाह । अस्या मध्ये सुषुम्णाया मध्ये ज्वलन्ती उज्ज्वलन्तीत्यर्थः । "मध्यमं चावलग्नञ्च मध्योऽस्त्री" इत्यमरः ।

मायातन्त्रेऽपि—मध्ये सुषुम्णा तन्मध्ये वज्राख्या लिङ्गमूलतः ॥ इति ॥ * ॥

——०——

(1) Or—सुषुम्नात्र (2) Or—लिखिष्यामः न विरोधात् ।

## [ चित्रिणीनाड़ीस्थितिः ]

चित्रानाड़ीमाह—तन्मध्य इत्यादिना। तन्मध्ये वज्रामध्ये। प्रणवविलसिता आज्ञाचक्रस्थप्रणवाधारत्वात्। सा कीदृशी ? सकलसरसिजान् भित्त्वा एतत्पद्मग्रथनरचनया देदीप्यते। पद्मान् किम्भूतान् ? मेरुमध्यान्तरस्थान् मेरुमध्ये यदन्तरं विवरं परम्परया तत्स्थान्।

मध्ये सुषुम्णा तन्मध्ये वज्राख्या लिङ्गमूलतः।
तन्मध्ये चित्रिणी सूक्ष्मा बिसतन्तुसहोदरा।
मूलमूलात् सहस्रारस्तदन्तर्ब्रह्मनाड़िका॥

तथा—मूलादिषट्सरोजातं चित्रिणीग्रथितं प्रिये।
लिङ्गाधोर्ध्वनाभिबुक्ककण्ठभ्रूमध्यदेशजम्॥

इति मायातन्त्रात्। 'मूलमूलात् सहस्रार'स्तन्मूलाधारमूलात् सहस्रार इति। तथाच सहस्रारं चित्रिण्या ग्रथितम्। अत्र च—

तस्या मध्ये विचित्राख्या अमृतस्राविणी शुभा।
सर्वतेजोमयी सा तु योगिनोहृदयङ्गमा।
विसर्गाद् बिन्दुपर्यन्तं व्याप्य तिष्ठति तत्त्वतः॥

इति गौतमीयवचनस्य बिन्दुपर्यन्तम् इन्दुपर्यन्तमिति वा पाठः। ललाटस्थबिन्दुपर्यन्तम् इन्दुपर्यन्तं वा व्याप्य सहस्राराधोदेशपर्यन्तगा तद्वतीत्यर्थो बोध्यः। केन चित्रायां पद्मानि सन्ति तदाह तन्त्रचूड़ामणौ—

तयैव ग्रथितं पद्मं मूलादिपद्मपञ्चकम्।
कलिकाकाररूपेण डाकिन्याद्यवलम्बितम्॥

'तयैव' चित्रयैव। 'पद्मं' मूलादिषड़िति शेषः। 'पद्मपञ्चकं' स्वाधिष्ठानादिपञ्चकम्। कलिकाकाररूपेण ग्रथितमिति सामान्यत उक्त्वा विशेषरूपेणोक्तम्। एतेन मूलाधारपद्मं विकसितम्। एवं समस्तपद्मान्यधोमुखान्येव। तदुक्तं कौलिकतन्त्रे ताराकल्पे—

सप्तपद्मं मयैवोक्तं सुषुम्णाग्रथितं प्रिये।
अधोवक्त्रादिमान्तञ्च(?) नाख्येयं यस्य कस्यचित्॥

येन तस्याश्चित्रात्वं तदाह श्रीक्रमे—

तस्याश्चान्तर्गता तिष्ठेत् चित्राख्या योगिवल्लभा।
पञ्चवर्णोज्ज्वला देवि पञ्चभूतप्रकाशिनी।
पञ्चदेवाः पर्वलग्नाः सप्तान्या नाड्यो मताः॥

अन्यत्रापि—ब्रह्मा जनार्दनो रुद्र ईश्वरश्च सदाशिवः।
चित्राख्यनाड्यन्तरस्थाः पञ्चभूताधिदेवताः॥

अत्र पञ्चभूतानां पञ्चाधिदेवता उक्ताः। भ्रूमध्ये तु परशिवोऽस्ति, लिखिष्यमाणवचनात् ॥

## [ ब्रह्मनाडीनिरूपणम् ]

ब्रह्मनाडीमाह—तस्यान्तरिति। तस्यां चित्रायां तद्ब्रह्मनाडी प्रसिद्धब्रह्मनाडी। हरमुखकुहरात् मूलाधारस्थ-स्वयम्भूलिङ्गमुखविवरात्। आदिदेवान्तसंस्था ब्रह्मपर्यन्ता। मायातन्त्रेऽपि—"शिरा स्याद् ब्रह्मपर्यन्तमि"त्यादि। विद्युन्मालेव विलासो यस्याः सा। पद्मसूत्रतुल्या, अतः सूक्ष्मा। शुद्धज्ञानिनः प्रबुध्यन्ते ज्ञायन्ते यया सा तथा। अमृतस्राविणीत्वात् सकलसुखयुता। भावो मनोधर्मः, स्वभावः आत्मधर्मः, शुद्धो भावः स्वभावो यस्याः सा इति पञ्चम्यन्तबहुव्रीहिः। "भावो हि मानसो धर्मः" इत्युक्तेः। येन द्वारेण कुण्डलिन्या ब्रह्मणि गमनं तद् द्वारमाह—ब्रह्मद्वारमिति। तदास्ये ब्रह्मनाड्या आस्ये।

मूलाधारात् सहस्रारस्तदन्तर्ब्रह्मनाड़िका।
शिरा स्यात् ब्रह्मपर्यन्तं तदन्तर्द्वारमुत्तमम् ॥

इति मायातन्त्रात्।

ब्रह्मद्वारमुखं नित्यं मुखेनावृत्य तिष्ठति।
येन द्वारेण गन्तव्यं ब्रह्मस्थानं निरामयम्।
मुखेनाच्छाद्य तद् द्वारं प्रसुप्ता परमेश्वरी ॥

इति गोरक्षसंहितावचनाच्च। सुधेति सुधाकणस्रुतिप्रदेशं ग्रन्थिस्थानम्। एतद्द्वारं सुषुम्णाया नाड्या वदनं धीरा वदन्ति ॥ * ॥

## [ मूलाधारपद्मनिरूपणम् ]

आधारपद्ममाह—अथेत्यादिना।

षण्णवत्यङ्गुलायामं शरीरमुभयात्मकम्।
गुदध्वजान्तरे कन्दमुत्सेधाद् द्व्यङ्गुलं विदुः।
तस्माद् द्विगुणविस्तारं वृत्तरूपेण शोभितम् ॥

इति शारदोक्तकन्द एव मुख्यनाड़ी एव ग्रन्थिस्तदूर्ध्वं ध्वजाधः सुषुम्णास्यलग्नम्। तथा च

मायातन्त्रे—मुख्यनाड़ीत्रयं ग्रन्थेरूर्ध्वं वज्राध ईश्वरि।
रक्तवर्णो वेदवर्णो मूलाधारोऽप्यवाङ्मुखः ॥

इति। उद्यत् प्रस्फुटितम्।

तयैव ग्रथितं पद्मं मूलादिपद्मपञ्चकम्।
कलिकाकाररूपेण डाकिन्याद्यवलम्बितम् ॥

इति वचनात्। पूर्वमेव व्याख्यातं तत्। सुवर्णाभवर्णैरिति। तथाच दक्षिणामूर्त्तौ—

आधारे स्वर्णवर्णेऽस्मिन् वादिसान्तानि संस्मरेत् ।

द्रुतसौवर्णवर्णानि वर्णानि परमेश्वरि ॥ इति ॥

सारसमुच्चये षट्सु पत्रेषु वर्णा बिन्दुयुक्ता उक्ता ग्रन्थगौरवभिया नात्र प्रकटिताः ॥ ❀ ॥

## [ धरामण्डलस्वरूपम् ]

चतुष्कोणचक्रमिति । तथाच मायातन्त्रे—

तत्कर्णिकान्तरे पृथ्वी चतुष्कोणा सुपीतभा ॥ इति ॥

तथा तन्त्रान्तरे—भूगृहं चतुरस्रं स्यादम्भोवज्रविभूषितम् ॥ इति ॥

धरायाः स्वबीजमिति । तथाच शारदायाम्—

वृत्तं दिवस्तत् षड्बिन्दुलाञ्छितं मातरिश्वनः ।

त्रिकोणं स्वस्तिकोपेतं वह्नेरर्द्धेन्दुसंयुतम् ॥

अम्भोजमम्भसो भूमेश्चतुरस्रं सवज्रकम् ।

तत्तद्भूतसमाभानि मण्डलानि विदुर्बुधाः ।

वर्णैः स्वैरञ्जितान्याहुः स्वस्वनामावृतान्यपि ॥ इति ।

तत्तद्भूतसमवर्णानि मण्डलानि । तथा स्वैर्वर्णैः ह-य-र-व-ल-वर्णैर्युक्तानि । तथा स्वस्वनामावृतानि पृथिव्यादीनां स्वस्वनामावृतानीत्यर्थः । एतदनुसारेण सर्वेषु पत्रेषु स्वस्वबीजानि ज्ञेयानि ॥ * ॥

## [ धराबीजध्यानम् ]

चतुर्बाहुरिति । अत्र पद्मे ब्रह्मास्तीत्याह—तदङ्क इत्यादिना । नवीनार्कतुल्यप्रकाशो रक्तवर्णः सृष्टिकारी ब्रह्मा चतुर्बाहुयुक्तः । चतुर्भागवेदो मुखाम्भोजलक्ष्मीर्यस्य स तथा ॥*॥

## [ डाकिनीशक्तिनिरूपणम् ]

अत्र डाकिनी शक्तिरस्तीत्याह—वसेदत्रेति । तथाच भट्टधृततन्त्रे—

मूलाधारं ब्रह्मणः स्थानमेतत् सौवर्णाभं डाकिनी देवताऽत्र ।

इति । एषा डाकिनी अनेकसूर्यप्रकाशा । अतिशयरक्ता इत्यर्थः । तन्त्रान्तरे—

रक्तां रक्तत्रिनेत्रां पशुजनभयकृच्छूलखट्वाङ्गहस्तां

वामे खड्गं दधानां चषकमपि सुधापूरितं चैकवक्त्राम् ।

इति । शुद्धबुद्धेः प्रकाशं वहन्तीत्यन्वयः ॥ * ॥

## [ त्रैपुरत्रिकोणस्वरूपम् ]

मध्ये अवान्तरदेवतादिकमभिधाय प्रकृतमाह—वज्राख्येति । वज्राख्याया वक्त्रदेशे । सामीप्ये सप्तमी, अधोभागे इति यावत् ।

मुख्यनाड़ीत्रयं ग्रन्थेरूर्ध्वं वज्राध ईश्वरि ! ।

इति मायातन्त्रात्। कर्णिकामध्यसंस्थं त्रैपुराख्यं त्रिकोणम्। तत् कामरूपाख्यं त्रिकोणम्। कन्दर्पो वह्निः समन्ताद् भ्रमति। नाम प्रकर्षे। जीवेशो वायुश्च निवसति। तथाच मायातन्त्रे—

तत्कर्णिकान्तरे पृथ्वी चतुष्कोणा सुपीतभा।
तन्मध्ये योनिमध्ये च वह्निवाय्वोः समाश्रये॥ इति॥

श्रीक्रमेऽपि—कर्णिकायां स्थिता योनिः कामाख्या परमेश्वरि।
अपानाख्यं हि कन्दर्पमाधारे तत्त्रिकोणके।
स्वयम्भूलिङ्गं तन्मध्ये पश्चिमाभिमुखं प्रिये॥ इति।

रुद्रयामलेऽपि—भ्रमद्योनिगतं ध्यायेत् कामं बन्धूकसन्निभम्।
ज्वलत्कालानलप्रख्यं तड़ित्कोटिसमप्रभम्॥ इति च।

तदेवाह—जीवेश इत्यादिना। बन्धूकपुष्पसमूहमभिहसन् तदधिकरक्तवर्ण इति भावः। "बन्धूको बन्धुजीवकः" इत्यमरः। "आधारे तत्त्रिकोणके" इत्युक्तत्वात्। तथा—

मूलाधारे त्रिकोणाख्ये इच्छाज्ञानक्रियात्मिके।
मध्ये स्वयम्भूलिङ्गस्तु कोटिसूर्यसमप्रभः॥

इति गौतमीयात्। तथा—

अधोमुखो लिङ्गरूपी हेमाभो भ्रमणे रतः॥ इति॥ *॥

## [ स्वयम्भूलिङ्गस्वरूपम् ]

पुनरपि मायातन्त्राच्चाह—तन्मध्ये इति। त्रिकोणमध्ये लिङ्गरूपि स्वयम्भूलिङ्गम् द्रुतसुवर्णकलाकोमल इति। सुवर्णवर्णयोगित्वात् कोमलत्वाच्च तथाभिहितम्। पश्चिमास्यः अधोमुखः। ज्ञानध्यानाभ्यां प्रकाश्यते यः स तथा। प्रथमकिसलयाकाररूपो नूतन-पल्लवाङ्कुराकारः। विद्युदिति। तथाच पूर्णचन्द्रादधिकरससमूह इत्यर्थः। स्निग्धसन्तानं स्निग्धसमूहं हसतीति स्निग्धसन्तानहासी। काशीवासीत्यादिविशेषणम्। सरितामावर्त्तश्चक्र-वज् जलानां भ्रमणं तद्रूपप्रकाशो यस्य स तथा। "स्यादावर्त्तोऽम्भसां भ्रमः" इत्यमरः॥*॥

## [ कुण्डलिनीशक्तिस्वरूपम् ]

तल्लिङ्गं सार्द्धत्रिवलयेनावेष्ट्य कुण्डलिनी शक्तिरस्तीत्याह—तस्योर्ध्वे इत्यादिना। बिसतन्तुसोदरतुल्या सा चासौ कला प्रकृतिश्चेति सा तथा। अतः सूक्ष्मा। नवीन-चपलामाला तस्या विलसनशोभया सह आस्पदमास्पर्द्धा यस्याः सा तथा। "तड़ित् सौदामिनी विद्युच्चञ्चला चपलापि च" इत्यमरः। सुप्ता निद्रिता शिवोपरि लसन्ती

सार्द्धत्रिवृत्ता आकृतिः शरीरं यस्याः सा तथा। सा तु अधोवक्त्रा। यथा श्रीक्रमे—

अधोवक्त्रा स्थिता देवी ऊर्ध्वपुच्छातिशोभना।
अत्र विद्युल्लताकारा कुण्डली परदेवता॥
परिस्फुरति सर्वात्मा सुप्ता हि भुजगाकृतिः।
ब्रह्मद्वारमुखं नित्यं मुखेनावृत्य तिष्ठति॥
येन द्वारेण गन्तव्यं ब्रह्मद्वारं मनोमयम्।
मुखेनाच्छाद्य तद्द्वारं प्रसुप्ता परमेश्वरी॥
मस्तके मणिवद् भिन्ना स्वयम्भूलिङ्गवेष्टिनी॥ इति।

योगान्तरेऽपि—मुखेनाच्छाद्य तद्द्वारं कुण्डलीशक्तिरुज्ज्वला।
निद्रावशगता देवी प्रसुप्तभुजगोपमा॥ इति।

तथा मायातन्त्रेऽपि—सार्द्धत्रिवलयानन्दा नन्दिता भास्करप्रभा॥ इति॥

कूजन्तीति। उत्थिता सतीति शेषः। तथा च तन्त्रान्तरे—

झिल्लीवाऽव्यक्तमधुरा कुजन्ती सततोत्थिता॥ इति॥

कोमलकाव्यै[वाक्यै]र्वाचं कूजन्तीत्यर्थः।

तत् प्राप्य कुण्डलीरूपं प्राणिनां देहमध्यगम्।
वर्णात्मनाविर्भवति गद्यपद्यादिभेदतः॥

इति शारदोक्तेः। तत् चैतन्यम्। श्वासोच्छ्वासविभञ्जनेन वायुना यथा जगतां जीवः जीवात्मा हंसः धार्यते। [तदुक्तं—]

विभर्त्ति कुण्डलीशक्तिरात्मानं हंसमाश्रिता।
हंसः प्राणाश्रयो नित्यं प्राणो नाड़ीसमा[पथा]श्रयः॥
आधारादुद्गतो वायुर्यथावत् सवदेहिनाम्।
देहं प्राप्य स्वनाड़ीभिः प्रयाणं कुरुते बहिः।
द्वादशाङ्गुलमानेन तस्मात् प्राण इतीरितः॥ इति।

भट्टाः—कुण्डली शक्तिरात्मानं परमात्मानं बिभर्त्ति तद्योगभागिनी भवतीत्यर्थः। कीदृशी ? हंसं जीवात्मानमाश्रिता जीवाधिष्ठाना सतीत्यर्थः। हंसः प्राणाश्रयः, प्राणवायुसमाश्रयः इत्यर्थः। प्राणो नाड़ीसमाश्रयः। कथं तस्य नाड़ीसमाश्रयत्वम् ? इत्यत आह—आधारादिति। प्रयाणं कुरुते इति प्राण इति प्राणपदव्युत्पत्तिरपि दर्शितेत्यन्तेनाहुः।

दक्षिणामूर्त्तौ तु—उच्छ्वासे चैव निश्वासे हंस इत्यक्षरद्वयम्।
तस्मात् प्राणस्तु हंसाख्य आत्माकारेण संस्थितः॥
षटशतान्यधिकान्यत्र सहस्राण्येकविंशतिः।

अहोरात्रं चरेद् वायुः स जपो मोक्षदायकः ॥

इति । अन्यत्रापि—सः कारेण बहिर्याति हंकारेण विशेत् पुनः ॥

इति । प्रोद्दामदीप्तश्रेणी (?) ॥ * ॥

## [ परशक्ति-स्वरूपम् ]

तस्याः कुण्डलिन्या मध्ये परमा नाम्नी शक्तिरुच्यते—तन्मध्ये इत्यादिना । परमा उत्कृष्टा । परा परानाम्नी अतिसूक्ष्मा । तथाच भट्टधृततन्त्रे—

सूक्ष्मा कुण्डलिनी मध्ये ज्योतिर्मात्रा परा मता ॥ इति ॥

सा एव परमात्मस्वरूपा । तथा च श्रुतिः—

तस्याः शिखाया मध्ये तु परमा सा व्यवस्थिता ॥ इति ॥

नित्या ध्वंसप्रागभावरहिता । आनन्दपरम्परा आनन्दसमूहयुक्ता । अतिचपलायमाना विद्युल्लता इव लसन्ती दीधितिर्दीप्तिर्यस्याः सा तथा । यस्याः कलायाः प्रभया ब्रह्माण्डादि-कटाहान्तं जगत् शरीरं भासते सा विजयते । नित्यज्ञानस्य उदयो यस्यां सा ॥ * ॥

काव्यबन्धैर्वाक्यैर्बृहस्पतीन् सेवते । गौरवे बहुवचनम् ॥ * ॥

## [ स्वाधिष्ठानचक्र-स्वरूपम् ]

स्वाधिष्ठानाख्यपद्ममाह—सिन्दूरेत्यादिना । अङ्गच्छदैः षट्पत्रैः विद्युत्प्रकारैर्वाद्यैः पुरन्दरान्तैर्वादिलान्तैः सबिन्दुकं परिवृतं पद्मम् । तथा च मायातन्त्रे—

तदूर्ध्वे तु महेशानि स्वाधिष्ठानमृतुच्छदम् ।

रक्तवर्णं कर्णिकायामब्जमर्द्धेन्दुसंयुतम् ।

मण्डलं वारुणं देवि तदूर्ध्वे मणिपूरकम् ॥ इति ॥

दक्षिणामूर्त्तौ—स्वाधिष्ठाने विद्रुमाभे बादिलान्तानि संस्मरेत् ।

विद्युत्पुञ्जसमाभानि विद्युद्भासितमस्तके ॥

इत्यादि । विशदप्रकाशं शुक्लवर्णम् । शारदायाम्—"तत्तद्भूतसमाभानी"ति प्रागुक्तम् । अम्भोजं षड्दलपद्मम् अर्द्धचन्द्रयुतम् । वं बीजं मकराधिरूढम्, "स्वाधिष्ठानं विष्णुगेहं प्रदिष्टं बालार्काभं राकिणी देवतात्र" ॥ इति वचनात् ॥ * ॥

## [ विष्णुस्वरूपम् ]

तस्याङ्के इत्यादि । नीलद्युतिरूपां मनोज्ञश्रियं शोभाम् आदधानः । गौतमीये—

स्वशब्देन परं लिङ्गं स्वाधिष्ठानं ततो विदुः । इति ।

नीलाम्बुजोदरसदृशी कमनीयता शोभा यस्याः सा । नानायुधेति । तदुक्तं तन्त्रान्तरे—

श्यामां शूलाब्जहस्तां डमरुकसहितां तीक्ष्णटङ्कं वहन्तीं

देवीं रक्तत्रिनेत्रां द्वितयदललसद्दंष्ट्रदन्तप्रभाभिः । इति ।

स मोहाद्भुतान्धकारसमूहे भानुतुल्यस्तन्नाशको भवतीति । सुधेति अमृततुल्यकाव्यसमूहसम्पत्तिं भजन्ते । अत्र पश्यन्ती शक्तिरस्ति । प्रमाणं विशुद्धपद्मव्याख्याने लिखिष्यते ॥*॥

## [ मणिपुरपद्मस्वरूपम् ]

मणिपूरपद्ममाह—तस्योर्ध्वे इत्यादिना । तथाच—

मणिवद्भिन्नं तत् पद्मं मणिपूरं तथोच्यते । इति ।

नीलवर्णे नीलवर्ण-डादिफान्तवर्णैर्युक्ते । तथा च दक्षिणामूर्त्तौ—"सुनीले मणिपूरके । डफान्तानि महानीलप्रभानि परिचिन्तयेदि"ति । वह्नेर्मण्डलं बीजं चाह—वैश्वानरस्येत्यादिना । वैश्वानरस्य वह्नेर्मण्डलं रक्तवर्णं त्रिकोणम् । तद्बाह्ये त्रिभिः स्वस्तिकैर्दकाराकारैर्युक्तम् । मायातन्त्रे—

दशपत्रं पयोजातं कर्णिकायां महेश्वरि ।

वाह्नेयं मण्डलं रक्तं त्रिकोणं स्वस्तिकान्वितम् ॥ इति ।

स्वबीजं रेफः । "वर्णैः स्वै रञ्जितान्यासन्" इति प्रागुक्तेः प्रातःसूर्यसमरक्तवर्णम् । मणिपूरं तु नीलं, "रुद्रस्थानं लाकिनी देवतात्रे"ति वचनात् । तामाह—रुद्रमूर्त्तिरित्यादिना । शुद्धसिन्दूररागः अतिशयरक्तवर्णः । वेदबाहूज्ज्वलाङ्गीत्यादि । तदुक्तं तन्त्रे—

कृष्णां देवीं त्रिवक्त्रां त्रिनयनसहितां कुब्जिनीमुग्ररूपां

वज्रं शक्तिं सदण्डामभयवरकरां दक्षवामे दधानाम् ।

इत्यादि । ज्ञानेति । ज्ञानसमूहेन सह लक्ष्मीस्ताम् ॥ * ॥

## [ अनाहतपद्मस्वरूपम् ]

अनाहतपद्ममाह—तस्योर्ध्वे इत्यादि । बन्धूकपुष्पकान्तिस्वरूपरक्तवर्णं कादिठान्तैः द्वादशवर्णैः सिन्दूरवर्णैर्युक्तम् । तथाच दक्षिणामूर्त्तौ—

पिङ्गवर्णे महावह्निकलिकाभानि संस्मरेत् ।

कादिठान्तानि वर्णानि चतुर्थेऽनाहते प्रिये ॥ इति ।

तन्मध्ये षट्कोणपद्मं वायुमण्डलम् । तथाच मायातन्त्रे—

अनाहतं द्वादशारं रक्ताभं हृदि सुव्रते ।

तन्मध्ये पावनं पद्मं षट्कोणं धूम्रवर्णकम् ॥ इति ॥ * ॥

## [ वायुबीजस्वरूपम् ]

वायुबीजमाह—तन्मध्ये इत्यादिना । पवनाक्षरं यं । प्रमाणमाधारपद्मव्याख्याने उक्तम् । धूसरं ईषत् पाण्डुरम् । हस्तचतुष्टययुक्तं कृष्णसाराधिरूढम् । "रक्तमनाहत-

मीश्वरगेहन्तु काकिन्यपीहोक्ता" इति वचनात्। तदेवाह—तन्मध्ये करुणानिधानमित्यादिना। ईशाभिधमीश्वरनामानम्। हंसाभं सूर्यप्रभम्। अभयवरदपाणिद्वययुक्तम्। तत्र काकिनी नवतड़ित्पीता गौरवर्णा त्रिनेत्रा पाशकपालवराभयान् चतुर्भिर्भुजैः बिभ्रती। कङ्कालेति अस्थिमालाधरा। "स्यात् शरीरास्थि कङ्कालः" इत्यमरः। तथाच तन्त्रे—

……………………काकिनी मेघ(द)संस्थाम्।

पाशं शूलं कपालं डमरुमपि करैर्धारिणीं पीतवर्णां

दध्यन्ने सक्तचित्तां स्ववयवनमितां वारुणीसक्तचित्ताम्॥

शूलडमरुस्थाने वराभयं तथा अस्थिमालेति तन्त्रान्तरे उक्तम्।

बाणलिङ्गं तु तन्मध्येऽधोमुखे शक्तिके इति।

त्रिस्त्रिकोणयुक्ते इति क्रमात्। तथा—

तन्मध्ये बाणलिङ्गन्तु सूर्यायुतसमप्रभम्।

शब्दब्रह्ममयः शब्दो न हेतुस्तदहेतुकः॥

अनाहताख्यं तत्पद्मं पुरुषाधिष्ठितं परम्॥

"पुरुषेण जीवात्मना" इति गौतमीयाच्च। त्रिकोणं बाणलिङ्गं जीवात्मानश्चाह—एतन्नीरजेत्यादिना। कनकं बन्धूकपुष्पसदृशं, बन्धूकः पुष्पविशेषः तद्वदङ्गरागोज्ज्वलः।

हेमबन्धूककुसुमशरच्चन्द्रनिभानि च।

इति योगिन्येकवाक्यत्वात्। स्वयम्भूबाणलिङ्गेतरलिङ्गविशेषणं—हेमादि। मौलौ मस्तके सूक्ष्मविभेदयुक्तो विवरयुक्तो मणिरिव दीप्तचिह्नालयः। शर्वस्य देवस्य पीठालयं निर्वातदीपशिखाकारहंसेन जीवात्मना शोभितम्। मायातन्त्रेऽपि—"आत्मा तत्र प्रदीपाभः" इति। भानोरित्यस्य मण्डलपदेनैकदेशेन सहान्वयः। तेन मण्डलमण्डितमन्तरं मध्यं यस्य स चासौ लसत्किञ्जल्कश्चेति स तथा। तस्य शोभाधरम्। "किञ्जल्कः केसरोऽस्त्रियाम्" इत्यमरः॥ * ॥

## [ विशुद्धपद्मस्वरूपम् ]

विशुद्धपद्ममाह—विशुद्धाख्यमिति। हिमच्छायायुक्तस्य नागस्योपरि लसितशरीरस्य चतुर्भिर्भुजैः पाशाङ्कुशादिलसितैः शोभितशरीरस्य दीप्तबुद्धेः उद्दीप्तज्ञानस्य। हिमाभः शुक्लः। सदाशिव इत्याख्यायुक्तः। सिद्धः प्रसिद्धः। तथा तन्त्रान्तरेऽपि—

सदाशिवस्थानमिदं विशुद्धं शाकिन्यथेहापि च धूम्रवर्णा। इति।*।

सुधासिन्धोः शुद्धा शुक्ला। तथा च तन्त्रान्तरे—

देवीं ज्योतिःस्वरूपां त्रिनयनविलसत्पञ्चवक्त्रां सुदंष्ट्रीं

हस्ताम्भोजेषु चापं शूलमपि दधतीं पुस्तकं ज्ञानमुद्राम्। इति।

पुस्तकं ज्ञानमुद्रामिति शरं पाशमिति तन्त्रान्तरे उक्तम्। सुधांशोश्चन्द्रस्य मण्डलम्। तथाच स्वच्छन्दसंग्रहे—अमृताद्यास्तथाकाशं चन्द्रबिन्दुं तदूर्ध्वतः।

कण्ठोर्ध्वे परमेशानि लम्बिका चतुरङ्गुले ॥ इति।

मतिशीलस्य ज्ञानशीलयुक्तस्य शुद्धेन्द्रियस्य जनस्य महामोक्षद्वारसम्पत्तिं दधत् मण्डलमित्यर्थः। स जीवो विपदामन्धकारस्वरूपाणां ध्वंससूर्यप्रकाशः। अत्र वैखरी शक्तिरस्ति। तथाच भट्टधृततन्त्रे—सूक्ष्मा कुण्डलिनी मध्ये ज्योतिर्मात्रा परा मता।

अश्रोत्रविषयात् तस्मात् किञ्चिदेवोर्ध्वगामिनी ॥
स्वयंप्रकाशा पश्यन्ती सुषुम्णानाभिमाश्रिता।
सैव हृत्पङ्कजं प्राप्य मध्यमा नादरूपिणी ॥
ततः संजल्पमात्रा स्यादविभक्तोर्ध्वगामिनी।
सैवोरुकण्ठतालुस्था शिरोघ्राणरदाश्रिता ॥
जिह्वामूलोष्ठनिस्यूता कृतवर्णपरिग्रहा।
शब्दप्रपञ्चजननी श्रोत्रग्राह्या तु वैखरी ॥ इति।

## [ आज्ञाचक्रस्वरूपम् ]

आज्ञाचक्रमाह—आज्ञा नामेत्यादिना। गौतमीये—"आज्ञासंक्रमणं तत्र गुरोराज्ञेति कीर्त्तितम्।" इति। चन्द्रतुल्यक्लेदजनकं ध्यानस्थानं प्रकाशस्वरूपम्। हक्षाभ्यां विशुद्धाभ्यां कलाभ्यामक्षराभ्यां युक्तं द्विपत्रमतीवशुभ्रम्। मायातन्त्रेऽपि—"आज्ञाख्यं द्विदलं शुभ्रम्" इति। दक्षिणामूर्त्तावपि—

आज्ञायां विद्युदाभायां शुभ्रौ हक्षौ विचिन्तयेत्।

हाकिनीति। तन्त्रान्तरेऽपि—

आज्ञापुरं शारदचन्द्रशुभ्रं हाकिन्यथोक्ता शिवगेहमेतत्।

विद्या पुस्तकम्। मुद्रा ज्ञानमुद्रा अङ्गुष्ठतर्जनीमिलिता। तन्त्रे—

आज्ञास्थां शुक्लवर्णां डमरुकसहितामक्षसूत्रं कपालं
विद्यां मुद्रां दधानां त्रिनयनविलसदुक्तषट्कोणयुक्ताम् (?)। इति।

सूक्ष्मञ्च तत्प्रकाशस्वरूपं चेति तत् तथा। मायातन्त्रेऽपि—

आज्ञाख्यं द्विदलं शुभ्रं कर्णिकायां मनोलयम्। इति।

सिद्धं नित्यम्। सिद्धशब्दा नित्यार्थ इति वैयाकरणाः। इतरशिवपदम्—इं कालं तरति इतीतरं शिवस्य परशिवस्य पदं, इतरञ्च तत् शिवपदञ्चेति तत्। लिङ्गचिह्नेन लिङ्गाकारेण प्रकाशो यस्य तत्। विद्युन्मालेव प्रकाशो यस्य तत्। योगिनीहृदये—

इतरञ्च पुनस्तथा शरच्चन्द्रनिभं सदा। इति।

आनन्दलहर्यामपि—तवाऽऽज्ञाचक्रस्थं तपनशशि-कोटिद्युतिधरं

परं शम्भुं वन्दे परिमिलितपार्श्वं परचिता ।

ताराषोढ़ान्यासाधिकारतन्त्रे—

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।

ततः परशिवो देवि षट् शिवाः परिकीर्त्तिताः ॥

इति मूलाधारादि-विशुद्धपद्मेषु पञ्चशिवन्यासमभिधाय—

आज्ञाचक्रे च देवेशि हक्षवर्णसमन्वितम् ।

परं शिवं ब्रह्मरूपं हाकिनीसहितं न्यसेत् ॥

इत्युक्तम् । स च सहस्रारनिर्गणपरशिवस्यांशस्वरूपी अपरः शिवो ज्ञेयः । अत एव ब्रह्मशिवत्वाद् ब्रह्मस्वरूपमित्युक्तम् । न तु ब्रह्म इत्युक्तम् । परमकुलपदम् एतत् पर्यन्तं परमकुलपदमित्युपसंहारेणोक्तम् । तथाच श्रीमते—

तत्रैतद् दक्षिणं षट्कमाज्ञापूर्वं कुलोद्भवम् । इति ।

आनन्दलहर्यामपि—महीं मूलाधारे कमपि मणिपूरे हुतवहं

स्थितं स्वाधिष्ठाने हृदि मरुतमाकाशमुपरि ।

मनोऽपि भ्रूमध्ये सकलमपि भित्त्वा कुलपथं

सहस्रारे पद्मे सह रहसि पत्या विहरसि ॥ इति ॥

अत्र कं जलं स्वाधिष्ठाने मणिपूरे हुतवहमिति व्यत्ययेनाऽन्वयः ॥*॥ ब्रह्मसूत्रेति ब्रह्मसूत्रस्य ब्रह्मनाड्याः प्रबोधो यस्मात् तत् । वेदानामादिबीजं प्रणवः, तदत्र चिन्तयेत् ॥ * ॥ विलसितपरमोऽपूर्वसिद्धप्रसिद्धो यस्य सः ॥ * ॥

## [ आज्ञाचक्रस्थप्रणवस्वरूपम् ]

अत्रान्तरात्मा अस्तीत्याह—शुद्धबुद्धेत्यादिना । शुद्धबुद्धः शुद्धस्वभावः स चासौ अन्तरात्मा चेति सः । प्रदीपस्येव आभा दीप्तिर्यस्य ज्योतिषः एवम्भूतो ज्योतिः । प्रणवाभ्यां विरचितौ स्वरूपवर्णौ यस्य सः [वर्णशब्दः ?] । श्रीक्रमेऽपि—

भ्रूमध्ये अन्तरात्मानमरूपं सर्वकारणम् ।

ॐकारज्योतीरूपन्तु प्रदीपाभं जगन्मयम् ॥ इति ।

अत एव प्रकाशः ज्योतिःस्वरूपः । तदूर्ध्वे पूर्वोक्तान्तरात्मोर्ध्वे अर्द्धचन्द्रः, चन्द्रार्द्धे बिन्दु-रूपी मकारः, तदुपरि नाद इति व्यत्ययेनाऽन्वयः । एवं नादप्राग् बोधिनी, लिखिष्यमाण-योगिनीहृदयात् ज्ञेया । असौ नादः अतीवशुक्ल इत्याह—वनेत्यादिना । वनं जलं तद्वद् धवलवर्णः यश्च पीयूषाधारश्चन्द्रः तत्समूहहासी तदधिकशुक्ल इति भावः । योगिनीहृदयेऽपि—

इन्दौ तदर्द्धे बोधिन्यां नादे नादान्त एव च । इति ।

इन्दौ बिन्दौ । तदर्द्धे अर्द्धचन्द्रे । स्वच्छन्दसंग्रहेऽपि—

तत्र बिन्दोर्यथा बिन्द्वावरणे स तदूर्ध्वतः ।
सूर्यकोटिप्रतीकाशमतिदीप्तं महद्गुणम् ।।
तन्मध्ये शतकोटीनां संख्या योजनपङ्कज[श्चक]म् ।
तत्कर्णिकायामासीनः शान्त्यतीतेश्वरः प्रभुः ।।
पञ्चवक्त्रो दशभुजो विद्युत्पुञ्जनिभाकृतिः ।
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिरनुक्रमात् ।।
परिवार्य स्थिताश्चैताः शान्त्यतीतेश्वरस्य च ।
वामभागे समासीना शान्त्यतीता मनोन्मनी ।।
पञ्चवक्त्रधराः सर्वा दशबाह्विन्दुभूषणाः ।
बिन्दुतत्त्वं समाख्यातं कोट्यर्बुदशतैर्वृतम् ।।
अर्द्धचन्द्रस्तदूर्ध्वे तु रो[बो]धिनी तस्य चोपरि ।
ज्योत्स्ना ज्योत्स्नावती कान्तिः सुप्रभा विमलापि च ।।
अर्द्धचन्द्रस्थिता ह्येताः कलाः पञ्च प्रकीर्त्तिताः ।
रु[ब]न्धिनी रो[बो]धिनी बोधा [रोधा]ज्ञानबो[रो]धा तमोपहा ।।
निबो[रो]धिका कलाः पञ्च कथिताः सुरसुन्दरि ।
ब्रह्मादिपरमेशानां परप्रा[मा]प्तिनिबो[रो]धनात् ।
नि[रो]बोधिकेति सा प्रोक्ता तस्या भेदा वरानने ।।
बो[रो]धिन्याख्यं यदुक्तं ते नादस्तस्योपरि स्थितः ।
पद्मकिञ्जल्कसङ्काशः कोटिसूर्यसमप्रभः ।।
पुरैः परिवृतोऽसंख्यैर्मध्ये पञ्चकलावृतः ।
इन्धिका दीपिका चैव रेचिका मोचिका तथा ।।
ऊर्ध्वगा मध्यगा तासां पञ्चमी परमा कला ।
चन्द्रकोटिसमप्रख्यं तन्मध्येऽर्बुदयोजनम् ।।
पद्ममध्ये समासीनमूर्ध्वगामिनमीश्वरम् ।
चन्द्रायुतप्रतीकाशं पञ्चवक्त्रं त्रिलोचनम् ।।
इन्धिका[ऐन्दवा]द्यैरावृतं च शूलपाणिं जटाधरम् ।
तस्योत्सङ्गगतामूर्ध्वगामिनीं परमां कलाम् ।।

ध्यायेदिति शेषः ।। * ।। निरालम्बामिति तद्वक्ष्यमाणाम् । टीकाकारधृततन्त्रे—

त्यजेत् शैथिल्यमङ्गानां नासाग्रे रोपयेद् दृशौ ।
मुखं विवृणुयात् किञ्चिद् दन्तैर्दन्तान् न संस्पृशेत् ॥
रसनामन्तरा कुर्यादनङ्गे धारयेन्मनः ।
इयं सा परमा मुद्रा निरालम्बेति पञ्चमी ॥ इति ॥

इह स्थाने एवं मुद्रां बद्ध्वा सदाभ्यासाद् धृतपवनात् पवनसुहृदां वह्नीनां कलाः पश्यति । तदनन्तरं तन्मध्यान्तःप्रविलसितरूपान् ज्वलद्दीपाकारान् पश्यति । पश्चात् नवीनसूर्य-प्रकाशाकारं गगनभूमध्यमिलितं पश्यति । इह स्थाने भगवान् साक्षात्कारविषयो भवति ।

ननु सर्वव्यापित्वादपरिच्छिन्नस्य ईश्वरस्य कथं परिच्छित्तिस्थाने अभिव्यक्तिरित्यत आह—राहुरिति । यथा अम्बरगतो राहुर्न दृश्यते किन्तु शशिसूर्ययोर्मण्डलमेव दृश्यते तथायं चिदात्मा एवम्भूतकर्मविशेषकरणादत्रैव साक्षाद् भवति । प्राणनिधने मरण-काले इह स्थाने प्राणान् वायूनूर्ध्वगामिन्या नाड्या समारोप्य वेदान्तविदितं "नित्यं विज्ञान-मानन्दं ब्रह्मे"ति श्रुतिविदितं परं नित्यं देवमित्यादिविशेषितं पुरुषं प्रविशति । तथा गीतायामपि—प्रयाणकाले मनसाचलेन भक्त्या युक्तो योगबलेन चैव ।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् स तं परं पुरुषमुपैति दिव्यम् ॥ इति ॥ * ॥

## [ आज्ञायां महानाददर्शनफलम् ]

लयस्थानं वायोरिति । तदुपरि पूर्वोक्तनादोपरि । चकारात् नादस्यापि लयस्थानम् । यत्र वायुर्नादश्च अथैनं जगदधरीकृत्य ब्रह्मरन्ध्रस्यादिस्थाने प्रलीयते तद् वायोर्नादस्यापि लयस्थानं नादान्तमिति यावत् । अत्र अर्द्धनारीश्वरोऽस्तीत्याह—महानन्दमित्यादिना । महान् आनन्दो यत्र तं महानन्दस्वरूपम् । शिवार्द्धं शिवाया अर्द्धं शिवस्याकारम् अर्द्धनारीश्वरमित्यर्थः ।

तथा च श्रीक्रमे—चेतसा संप्रपश्यन्ति नादान्ते वृषभध्वजम् ।
तमर्द्धदेहं वरदं कारणत्रयमातरम् ।
पुटद्वयविनिष्क्रान्तो वायुर्यत्र प्रलीयते ॥

स्वच्छन्दसंग्रहेऽपि—हलाकारस्तु नादान्तो[न्ते] भित्त्वा सर्वमिदं जगत् ।
अधःशक्त्या विनिर्भेद्य ऊर्ध्वशक्त्यवसानकः ॥
नाड्यां ब्रह्मबिले लीनस्त्वव्यक्तो ध्वनिलक्षणः ।
अतो ब्रह्मबिलं ज्ञेयं रुद्रकोट्यर्बुदैर्युतम् ॥
तत्र ब्रह्मशिवो ज्ञेयः शशाङ्कशतसन्निभः ।
दशबाहुस्त्रिनेत्रश्च पञ्चवक्त्रेन्दुशेखरः ॥
ब्रह्माणी त्वं परा शक्तिः ब्रह्मणोत्सङ्गगामिना ।
द्वारं सा मोक्षमार्गस्य रोधयित्वा व्यवस्थिता ॥ इति ।

हलाकारो लाङ्गलसदृशः। 'देवीस्थानं सहस्रारं प्रविशेदकुलं प्रिये।' इति श्रीक्रमात् ॥*॥

## [ सहस्रारपद्मस्वरूपम् ]

अकुलाख्यसहस्रारपद्ममाह—तदूर्ध्वे इत्यादिना। शङ्खिन्या नाड्याः शिखरे अग्रे शून्यदेशे चित्रिण्या मेरुदण्डस्य च शून्यदेशे। तेन सहस्रारं न मेरुदण्डस्य मध्ये न वा चित्रिण्या ग्रथितम्। मायातन्त्रेऽपि—

मूलादिषट्सरोजातं चित्रिणाग्रथितं प्रिये।
लिङ्गाधोर्ध्वनाभिवक्षःकण्ठभ्रूमध्यदेशजम् ॥ इति।

अत एव स्वच्छन्दसंग्रहे—

द्वादशार्णं ललाटोर्ध्वं रूपेणार्द्धावसानकम्।
द्व्यङ्गुलोर्ध्वशिरोदेशं परं व्योम प्रकीर्त्तितम् ॥ इति।

श्रीक्रमे—आसव्यकर्णाद् देवेशि शङ्खिनी च शिरोपरि।

हलाद्यनन्तरम्—शङ्खिनीनालं संप्राप्य चास्थिशून्यं बिभर्त्ति यः।

अमृतं यत् त्रिकूटस्थं परमानन्दलक्षणम् ॥
सहस्रारं महापद्मं रक्तकिञ्जल्कशोभितम्।
द्रुतहेमाम्बुजं जातधारपातप्रवर्षणम् ? ॥
विसर्गाधः पद्ममिति सर्गः शक्तिर्निशाकरः ॥

इति नारदोक्तेन विसर्गस्याधः सहस्रारपद्मधारिण्या ऊर्ध्वस्थितायाः शक्तेरधः पद्मम्। निर्वाणपद्धत्यामपि—कुलरूपं भवेच्छक्तिः विसर्गमण्डलं प्रिये।

सहस्रारं महापद्मं रक्तकिञ्जल्कशोभितम् ॥ इति।

सारसमुच्चयेऽपि "सहस्रारपद्मं विसर्गादधस्तात्" इति। पूर्णपूर्णेन्दुशुभ्रं पूर्णं पीयूषपूर्णं तच्च पूर्णेन्दुशुभ्रञ्चेति तत्। बालसूर्यरश्मिसमः केसरसमूहो यस्य तत्। पद्मन्तु शुक्लवर्णम्। यथा मायातन्त्रे—महाशून्ये सहस्रारं निशाकरसहोदरम्।

अधोवक्त्रं कर्णिकायाश्चन्द्रोर्ध्वे शक्तिरूपिणी ॥ इति।

ललाटाद्यैरकाराद्यैः समस्तमातृकाक्षरैर्युक्तम् ॥ * ॥

तन्मध्ये पूर्णचन्द्रः। स्निग्धसन्तानं हसतीति स्निग्धसन्तानहासी। तस्यान्तश्चन्द्रमण्डलस्य मध्ये त्रिकोणम्। तत् तु अकथादित्रिरेखात्मकम्। तत्त्रिकोणे हलक्षवर्णत्रयम्। तदन्तस्त्रिकोणमध्ये शून्यं परलिङ्गं परलिङ्गस्य तेजोवर्णत्वात् शून्यं शून्याकारमिति यावत्। तथाच गौतमीये—

सहस्रारे हिमनिभे सर्ववर्णविभूषिते।
अकथादित्रिरेखासु हलक्षत्रयभूषिते ॥

तन्मध्ये परबिन्दुश्च सृष्टिस्थितिलयात्मकम् ॥ इति ।

**योगिनीहृदये**—सूक्ष्मरूपं समस्तार्णवृतं परमलिङ्गकम् ।

बिन्दुरूपं परानन्दकन्दं नित्यपदोदितम् ॥ इति ।

व्याख्यातञ्च अमृतानन्दस्वामिना यथा परलिङ्गस्य पर तेजोरूपत्वादवर्णत्वं सूक्ष्मरूपम्, अतीन्द्रियगोचरम्, अत एव बिन्दुरूपं समस्तार्णवृतम् । नित्यत्वञ्च मातृकाया उत्पत्तिविनाशरहितत्वात् । पदात् पदं प्राप्य उदितं प्रकाशितम् । तदेवाह—परमामोदसन्तानराशेः परं कन्दं सूक्ष्ममिति । शशिसमस्तकलाशुद्धरूपम् । "नित्यं विज्ञानमानन्दं ब्रह्म" इति श्रुतिबोधितो यः परशिवः स द्विधा भूत्वा परमशिवाख्यः सगुणः शिवः प्रकाशात्मा अत्र परबिन्दुचक्रे निवसति इत्याह—इह स्थाने इत्यादिना । परशिवसमाख्यानसिद्धप्रसिद्धं यस्य सः । तदुक्तं

**सङ्केतपद्धत्याम्**—अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः ।

हकारोऽन्त्यकलारूपो विमर्शाख्यः प्रकीर्त्तितः ।

अनयोः सामरस्यं यत् परस्मिन् महसि स्फुटम् ॥ इति ।

तत्र अमृतानन्दस्वामिनः—"अ इति ब्रह्म"इति श्रुत्या अकारवाच्यः परशिवस्तस्यांशित्वेन परमशिवोऽप्यकारवाच्यः प्रकाशरूपब्रह्मांशित्वात् । विमर्शाख्यः विमर्शिनी [सा]शक्तिरित्यन्तेनाहुः । सर्वात्मा "पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम्" इति श्रुतेः । रसो द्रव्यविशेषः पर इति प्रसिद्धस्तस्य विसरः समूहस्तद्वत् सितः शुक्लः । "सन्दोहविसरव्रजाः" इत्यमरः । अज्ञानमोहान्धस्य हंसः सूर्यः ॥ * ॥

## [ सहस्रारे परमशिवस्थितिः ]

सुधाधारासारमतितरां विमुञ्चन् यतः स्वात्मज्ञानं स्वस्य शिवाभेदज्ञानं दिशति । भगवान् ऐश्वर्यादियुक्तः स परमशिवः परमहंस इत्याह—समास्ते इत्यादिना । सकलसुखसमूहस्य लहरी तरङ्गः तस्य परीवाहः । "जलोच्छ्वासाः परीवाहाः" इत्यमरः । परम इति नाम्ना समुचितः परमहंस इत्यर्थः । स च मायावच्छिन्नः । तथाच तन्त्रान्तरे—

सरोरुहमधोमुखं प्रविलसत् सहस्रच्छदं

क्रमादरुणकेसरप्रकरभास्वरनिर्मलम् ।

तदन्तरपि चिन्तयेदमृतरोचिषो मण्डले ।

पुराणपुरुषं परं परिगतं महामायया ॥ इति ॥

मायोपाधिविनिर्मुक्तं शुद्धमित्यभिधीयते ।

मायासम्बन्धतश्चेशो जीवोऽविद्यावशस्तथा ॥

इति वेदान्तोक्तेः ॥ * ॥ शिव इत्यादि स्पष्टम् । परमपुरुषमिति भारते—

अव्यक्तं मन इत्याह शरीरं परमुच्यते ।

अव्यक्तके पुरे शेते पुरुषस्तेन चोच्यते ।। इति ।

खगतिः खेचरः स्यात् । यद्वा खे ब्रह्मणि गतिः स्यात् । "खं ब्रह्म" इत्याद्युपनिषत् ।।*।।

## [ अमाकलास्वरूपम् ]

ऊर्ध्वशक्तिरूपां कलामाह—तत्रास्ते इत्यादिना । प्रातःसूर्यतुल्या चन्द्रस्य षोडशकला अमा नाम्नीति यावत् ।

अमा षोडशभागेन देवि प्रोक्ता महाकला ।
संस्थिता परमा माया देहिनां देहधारिणी ।।

इति वचनात् । सूक्ष्मत्वात् शतधाविभक्तमृणालतन्तुभागैकरूपा क्षयोदयरहितत्वान्नित्या । अधोमुखी सृष्ट्यन्मुखी । पूर्णानन्दसमूहो यस्याम् । या अभिगलत्पीयूषधारा तस्या धरा ।

स्वच्छन्दसंग्रहे—ब्रह्माणी त्वं परा शक्तिः ब्रह्मणोत्सङ्गगामिनी ।
द्वारं सा मोक्षमार्गस्य रोधयित्वा व्यवस्थिता ।।
तां भित्त्वा तु वरारोहे ऊर्ध्वशक्तिं परां शिवाम् ।
शक्तितत्त्वात्मिकां देवीं प्रसुप्तभुजगाकृतिम् ।।
शक्तितत्त्वं समाख्यातं भुवनैराश्रितं महत् ।
शक्तिं तत्त्वात्मिकामूर्ध्वशक्तेरुपरि संस्थिताम् ।। इति ।

योगिनीहृदयेऽपि—शक्तौ पुनर्व्यापिकायां समनोन्मनीगोचरे ।। इति ।। * ।।

## [ निर्वाणकलास्वरूपम् ]

व्यापिनीतत्त्वं शक्तितत्त्वस्वरूपमाह—निर्वाणाख्य इत्यादिना । सूक्ष्मत्वात् सहस्रधा विभजितस्य केशभागस्यैकभागतुल्या । अर्द्धचन्द्रवत् कुटिला । सर्वार्कतुल्यप्रभा द्वादशादित्यप्रभा । परात् षोड़श्याः कलायाः परतः । तदन्तर्गता चन्द्रमण्डलान्तर्गता न तु षोड़श्याः कलाया अन्तर्गता । यथा सारसमुच्चये षोड़शीं कलामभिप्रेत्य—

एतस्याः परतः स्थिता भगवती भूताधिदेवाधिपा
निर्वाणाख्यकलार्द्धचन्द्रकुटिला सा षोड़शान्तर्गता ।
बालाग्रस्य सहस्रधा विभजितस्यैकेन भागेन या
सूक्ष्मत्वात् सदृशी त्रिलोकजननी या द्वादशार्कप्रभा ।। इति ।।

स्वच्छन्दसंग्रहे—षोड़शान्तमिति ख्यातं व्योमस्थानेन्दुमण्डलम् ।। इति ।।

तत्रैव—आधारं भुवनानाञ्च प्रवक्ष्यामि समासतः ।
सूक्ष्मा चैव सुसूक्ष्मा च तथा चैवामृता मृता ।।
चतुर्दिक्षु स्थितास्तासां मध्यस्था व्यापिनी स्मृता ।
पञ्चवक्त्रा त्रिनेत्रा च सुतेजस्का च पञ्चमी ।। इति ।। * ।।

## [ परबिन्दुस्वरूपम् ]

समनापदमाह—एतस्या इत्यादिना। परं उत्तरकालं मातीति परमा ध्वंसरहिता नित्येत्यर्थः। सूक्ष्मत्वात् केशाग्रस्य कोटिभागैकभागरूपा अतः अतिगुह्या। निरवधि विलसन्ती या अमृतधारा तस्या धरा। मुनिमनसि लसिततत्त्वबोधं शिवाभेदज्ञानं वहन्ती।

अहन्तेदन्तयोरैक्यमिति विद्या निगद्यते॥

इति परापञ्चाशिका वचनाद् ब्रह्मणोऽतिनैकट्येन तथोक्तम्। तथा—

समनान्तर्वरारोहे पाशजालमनन्तकम्।

इति वचनात् अत्रापि पाशजालम्। एतस्या निर्वाणकलाया मध्यदेशे इति। समीप्ये सप्तमी। तथा च मध्यदेशसमीपे किञ्चिदुपरीत्यर्थः। तथाच स्वच्छन्दसंग्रहे—

चिदानन्दस्वरूपा तु परा शक्तिस्तदूर्ध्वतः।
समना नाम सा शक्तिः सर्वकारणकारणम्॥
सर्वाण्डा[न्ता]नि बिभर्त्तीयं शिवेन समधिष्ठिता।
अत्र रूढः स भगवान् शिवः परमकारणम्।
शिवः सर्वस्य कर्त्तेयं शक्तिः कारणमुच्यते॥ इति॥ * ॥

## [ परब्रह्मस्थानम् ]

उन्मनीपदमाह—तस्या मध्यान्तराले इत्यादिना। तस्याः समनाया मध्यान्तराले। अत्र सामीप्ये सप्तमी। शिवतनुप्राप्तिस्थानम् उन्मनीति यावत्। स्वच्छन्दसंग्रहे—

शिवतनुं समाख्यातं तदूर्ध्वं शक्तितनुतः॥ इति॥

तथा तत्रैव—शिवशक्तिद्वयञ्चैव शिवतनुं प्रकीर्त्तितम्।

सूक्ष्मार्थशक्त्यवच्छिन्नं शिवतनुमित्यर्थः। तथाच तत्रैव—

यावत् सा समना शक्तिस्तदूर्ध्वे उन्मनी स्मृता।
नात्र कालकलाभावः[नं] न तत्वं न च देवताः॥
सुनिर्वाणं परं शुद्धं रुद्रवक्त्रं तदुच्यते।
शिवशक्तिरिति ख्याता निर्विकल्पा निरञ्जना॥ इति॥

"तत्त्वातीतं वरारोहे'—इत्यादि अग्रे लिखिष्यते। मनःसहितत्वात् समना। "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" इति श्रुत्या मनोऽतीतत्वादुन्मनीत्यमृतानन्दस्वामिनः।

शक्तिमध्यगतो नादः समनान्तं प्रसर्पति॥

इति स्वच्छन्दसंग्रहात् नात्र कालकलांशस्य भानम्॥*॥ परमकुलपदमिति परमुन्मन्याः परं अकुलपदम् अकुलाख्यपरशिवात्मकपदं विश्वस्य विश्रामस्थानत्वात्। पदमिति अमलं

सत्त्वादित्रिगुणमु(यु)क्तम्। शाश्वतं नित्यम्। योगेन प्राप्तं नित्यानन्दमभिधानं यस्य तत्। "नित्यं विज्ञानमानन्दं ब्रह्म" इति श्रुतेः। शुद्धबोधस्य शुद्धज्ञानस्य प्रकाशो यस्मात्। तथाच टीकाकारधृततन्त्रे "उन्मन्यन्ते परशिवः" इति। **स्वच्छन्दसंग्रहे** उन्मनीमभिधाय—तत्त्वातीतं वरारोहे वाङ्‌मनो नैव गोचरम्। "यतो वाचो निवर्त्तन्ते" इत्यादि श्रुतेः। तत्त्वं "तत्त्वमसि" इति श्रुतेः।

स्वाभाविके परे धाम्नि विवरं तत्त्वसंज्ञकम्॥

इति शिवतन्त्रात्। श्रीमते—

अकुलेश्वरदेवस्य सम्बन्धः प्रथमः स्थितः।
रूपातीतः परो बिन्दुः शक्त्या वेष्टितभास्वरः।
अतो नादो विरोधी च अर्द्धचन्द्रसमुत्क्रमात्॥
एतत् तु पञ्चमप्रोक्तं ज्ञानरत्नं महोदयम्।
तत्र तद्दक्षिणं षट्कमाज्ञापूर्वं कुलोद्भवम्॥ इति॥ *॥

## [ कुण्डलिन्युत्थापनप्रकारः ]

यमनियमसमभ्यासशीलः [ नियतनिजचित्त ] इति। **गौतमीये**—

अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयार्जवम्।
क्षमा धृतिर्मिताहारः शौचञ्चेति यमा दश॥
जपः सन्तोष आस्तिक्यं दानं देवस्य पूजनम्।
सिद्धान्तश्रवणञ्चैव ह्रीर्मतिश्च तपो हुतम्।
दशैते नियमाः प्रोक्ता योगशास्त्रविशारदैः॥ इति॥

तथाच एतद्द्वयाभ्यासशीलः श्रीनाथवक्त्राद् गुरुवक्त्राद् मोक्षवर्त्मप्रकाशं क्रमं ज्ञात्वा हुङ्कारेण मूलाधारस्थितवह्निपवनयोराक्रमेण तप्तां कुण्डलिनीं कृत्वा ब्रह्मद्वारस्य मध्ये तां रचयति। **रुद्रयामले**—

हुङ्कारेण समुत्थाप्य शक्तिं स्वाधारसंस्थिताम्। इति।

ततः सा प्रबोधिता तल्लिङ्गत्रयं स्वयम्भूबाणेतरलिङ्गत्रयं भित्त्वा भेदं कृत्वा तच्छिद्रेण ब्रह्माख्याया इति ल्यब्लोपे पञ्चमी ब्रह्मनाडीमारुह्य सकलसदनं प्राप्य परमरसयुक्तशिवे परमशिवे प्रदीपाभे देदीप्यते। ततः सा शुद्धस्वभावा सूक्ष्मतालक्षणेन तड़िदिव लसत्तन्तुरूपा तन्मोक्षानन्दं घटयति। नयवशात् नीतिवशात्। समाधौ यतो योगीशः तां कुलकुण्डलिनीं जीवात्मना सार्द्धं मोक्षधाम्नि परमशिवे सच्चिदानन्दरूपे भगवतीं चैतन्यरूपां ध्यायेत्।

**तन्त्रान्तरे**—ध्यै चिन्तायां स्मृतो धातुश्चिन्तातत्त्वेन निश्चला।
एतद्ध्यानमिह प्रोक्तं सगुणं निर्गुणं द्विधा।

सगुणं वर्णभेदेन निर्गुणं केवलं तथा ॥

अन्यत्रापि—मज्जीवब्रह्मणोरैक्यं सोऽहमस्मी[हं स्यादि]ति वेदनम् ।

तन्निर्गुणमिदम् । इत्यादि ॥ * ॥

## [ कुण्डलिन्याः प्रत्यावर्त्तनप्रकारः ]

ततो लाक्षाभं रक्तवर्णं परमामृतं कुण्डलिनी पीत्वा पूर्णानन्दमहोदयात् परशिवात् शिव-सकाशात् प्राक्प्रतिपादितोन्मन्यादिसृष्टिमार्गेण कुलपथात् कुलपथमारुह्य ब्रह्मारुह्य मूलाधारे स्वस्थाने प्रविशेत् । ततो योगी तद्दिव्यामृतधारया योगपरम्पराप्राप्तया ब्रह्माण्डस्थितं शरीरस्थं दवतं डाकिन्यादिकं तर्पयेत् प्रीणयेत् । श्रीनाथवक्त्रादिति यदुक्तं तत् **गोरक्ष-संहितादौ** स्पष्टीकृतम् । यथा—

प्रबुद्धा वह्नियोगेन मनसा मरुता हुता ।
सूचीव गुणमादाय व्रजत्यूर्ध्वं सुषुम्णया ॥
ज्वलन्ती भुजगाकारा पद्मतन्तुनिभा शुभा ।
उद्घाटयेत् कवाटञ्च यथा कुञ्चिकया दृढम् ॥
कुण्डलिन्या तथा योगी ब्रह्मद्वारं प्रभेदयेत् ॥

कृत्वा संपुटितौ करौ दृढतरं बद्ध्वा तु पद्मासनं
गाढं वक्षसि सन्निधाय चिबुकं ध्यानञ्च तच्चेतसि ।
वारं वारमपानमूर्ध्वमनिशं प्रोत्सारयन् पूरयन्
प्राणं मुञ्चति मोक्षमेति शनकैः शक्तिप्रभावाद् यतः ॥

कुञ्चिकया कुलुपकारीत्याख्यया । निर्वाणपद्धत्यामपि—

आदौ पूरकयोगेन स्वाधारे योजयेन् मनः ।
गुदमेढ्रान्तरे योनिस्तामाकुञ्च्य प्रबोधयेत् ॥
भ्रमद्योनिगतं ध्यायेत् कामं बन्धूकसन्निभम् ।
ज्वलत्कालानलप्रख्यं तड़ित्कोटिसमप्रभम् ॥
तदूर्ध्वे तु शिखा सूक्ष्मा चिद्रूपा परमा कला ।
तया सहितमात्मानमेकीभूतं विचिन्तयेत् ॥
गच्छन्ती ब्रह्ममार्गेण लिङ्गभेदक्रमेण तु ।
अमृतं यद्विसर्गस्थं परमानन्दलक्षणम् ॥
द्रुतरक्तं तेजसाढ्यं धारापातप्रवर्षणम् ।
पीत्वा कुलामृतरसं पुनरेव कुलं विशेत् ॥
सा च प्राणः समाख्यातस्तन्त्रेऽस्मिन् परमेश्वरि ।

एवमभ्यस्यमानस्य अहर्निशनिबन्धनात् ।
चतुर्विधा तु या सृष्टिरस्यां योनौ प्रजायते ॥
पुनः प्रलीयते तस्यां कालाग्न्यादिशिवान्तिकम् ।
योनिमुद्रा परा सा तु बन्धस्तस्याः प्रकीर्त्तितः ॥

चतुर्विधेति । नैयायिकमते पुरुषात् सांख्यमते प्रकृतिपुरुषाभ्यां पातञ्जलमते प्रकृतितः मीमांसामते अदृष्टात् सृष्टिः । तत्र योगो द्विविधः । यथा शारदायाम्—

पिण्डं भवेत् कुण्डलिनी शिवात्मा पदञ्च हंसः सकलान्तरात्मा ।
रूपं भवेद् बिन्दुरमन्दकान्तिरतीतरूपं शिवसामरस्यम् ॥
पिण्डादियागं शिवसामरस्यात् सबीजयोगं प्रवदन्ति सन्तः ॥
शिवे लयं नित्यगुणाभियुक्ते निर्बीजयोगं फलमव्यपेक्षम् ॥ इति ॥

तथान्यत्र—दिक्कालादिविवर्जिते परशिवे चैतन्यमात्रात्मके ।

इत्यादि । स्वच्छन्दसंग्रहेऽपि—

पिण्डं कुण्डलिनी शक्तिः पदं हंसः प्रकीर्त्तितः ।
रूपं बिन्दुरिति ख्यातं रूपातीतस्तु चिन्मयः ॥

तन्त्रान्तरेऽपि—पिण्डे युक्ताः पदे युक्ता रूपे युक्ताः षड़ानन ।
रूपातीते तु ये युक्तास्ते मुक्ता नात्र संशयः ॥

मतभेदे अनेकानि पद्मान्याह स्वच्छन्दसंग्रहेऽपि—

अधश्चोर्ध्वं सुषुम्णायाः सहस्रदलसंयुतम् ।
रक्तं श्वेतञ्च साहस्रदलस्थं शक्तिसंयुतम् ॥
ऊर्ध्वाधो मुखमूलन्तु कर्णिकाकेशरान्वितम् ।
शक्तिरूपं महादेवि कुलाकुलमयं शुभम् ॥
पङ्कजद्वयमीशानि स्थितं शाश्वतमव्ययम् ।
तयोर्मध्ये सुषुम्णान्तस्त्रिशदाधारपङ्कजम् ॥
शक्तिरूपं शिवाकारं सर्वाध्यासं निजालयम् ।

नीत्वेति शेषः । तथा कियत् कियदूर्ध्वे पङ्कजानि । तदाह तत्रैव—

आधारपङ्कजस्योर्ध्वे सार्द्धद्व्यङ्गुलकोपरि ।
तैजसं साष्टपत्रञ्च पीतकर्णिकया युतम् ॥
हृल्लेखा कर्णिकामध्ये स्थिता लिङ्गादिदेवता ।
एतस्माद् द्व्यङ्गुलस्योर्ध्वे स्वाधिष्ठानं षड़स्रकम् ॥
आग्न्यञ्च राकिणीशक्ति-पूर्वाभिः शक्तिभिर्युतम् ।

ततश्च भावयेद् देवि नाभिमष्टाङ्गुलोपरि ॥
तत् पद्मं मणिपूरञ्च दशपत्रं सुशोभितम् ।
लाकिनीमध्यगं तच्च तामर्थादाभिरावृतम् ॥
चतुर्दशाङ्गुलादूर्ध्वे मणिपूराख्यपङ्कजात् ।
पङ्कजं काकिनीमध्यं वायव्यं द्वादशारकम् ॥
तत्रस्थकालरात्र्यादिशक्तिभिश्च समावृतम् ।
तत्रस्थसूर्यबिम्बे च नादो यानादिपीठकम् ॥
एकादशाङ्गुलादूर्ध्वे विशुद्धं षोड़शाच्छदम् ।
मध्यगा शाकिनी बाह्यपत्रेषु परमेश्वरि ॥
अमृताद्यच्तरान्तस्था चन्द्रबिम्बं तदूर्ध्वगा ।
कण्ठोर्ध्वे परमेशानि लम्बिका चतुरङ्गुली ॥
आज्ञाचक्रं द्विपत्राब्जं हक्षद्विदलसंयुतम् ।
हंसवती क्षमा पार्श्वद्वये मध्ये तु हाकिनी ॥ * ॥

तन्त्रान्तरे ब्रह्मणः स्वाधिष्ठानमुक्तं यथा—

स्वाधिष्ठानं षड्दलोपेतमुद्यद्विद्युत्प्रेक्षं वादिलान्तैश्च वर्णैः ।
युक्तं सावित्रीसहितं विरिञ्चिं ध्यायेदस्मिन् राकिणीं देवताञ्च ॥

**योगिनीहृदये**—एताश्चतस्रः शक्तयस्तु का पू जा उ इति क्रमात् ।
पीठाः कन्दे पदे रूपे रूपातीते क्रमाद् विदुः ॥

एतास्तत्र पूर्वोक्ता अम्बिकादयश्चतस्रः कामरूपादिपीठत्वेन परिणताः । तथा च मूलाधारे कामरूपं, हृदि पूर्णगिरिः, भ्रूमध्ये जालन्धरः, सहस्रारे उड्डीयानः । न च "एकमेवाद्वितीयं ब्रह्म" इत्यादि श्रुत्या ब्रह्मण एकत्वमभिहितम् । शक्तिस्तावत् केति चेत् ? तद्ब्रह्मशिवशक्तिसामरस्यपरत्वमेव । यथा कुलार्णवे—

अद्वैतं केचिदिच्छन्ति द्वैतमिच्छन्ति चापरे ।
मम तत्त्वं न जानन्ति द्वैताद्वैतविवर्जितम् ॥

**स्वच्छन्दसंग्रहेऽपि**—अनयोः सामरस्यं यत् परस्मिन् महसि ध्रुवम् ।

कूर्मपुराणे ईश्वरगीतायां शिववाक्यम्—

एकया मम सायुज्यमनादिनिधनं स्फुटम् ।
पुंसोऽभूदन्यया भूतिमन्यया तत्तिरोहितम् ॥

एकया मायात्मिकया शक्त्या विशिष्टस्य मम अनादिनिधनं सायुज्यं सहयोगं अर्द्धनारीश्वरात्मकमभूत् । अन्यया आद्यया ज्ञानात्मिकयेति यावद् विशिष्टपुंसो भूतिमुत्पत्तिं

जानीहि। अन्यथा चिच्छक्त्या तत्तिरोहितं, तयैव क्षणे तिरोहितम्, ब्रह्माविनाभूतम्।
अत एव तैत्तिरीयवाक्यम्—

यत् तु मे निष्कलं रूपं चिन्मात्रं केवलं शिवम्।
सर्वोपाधिविनिर्मुक्तमनन्तमपरं परम्॥

कलिकापुराणेऽपि—चितिशक्तिं निराकारां परंब्रह्मस्वरूपिणीम्॥
जन्मखण्डे राधिकां प्रति कृष्णवाक्यम्—

यदा तेजःस्वरूपोऽहं तेजोरूपाऽसि त्वं तदा।
न शरीरी यदाहञ्च तदा त्वमशरीरिणी॥

तन्त्रेऽपि—न शिवेन विना शक्तिः न शक्त्या रहितः शिवः।
अतस्तयोरभेदश्च चन्द्रचन्द्रिकयोरिव॥

वेदान्तेऽपि "चिच्छक्तिर्ब्रह्माश्रिता।" तथा—

मायोपाधिविनिर्मुक्तं शुद्धमित्यभिधीयते।
मायासम्बन्धतश्चेशो जीवोऽविद्यावशस्तथा॥

इत्युक्तम्। तदेव सामरस्यं परंब्रह्म सगुणशिव-शक्त्यादिनानारूपेण परिणमते। यथा

विश्वसारे—कालेन प्रेरयेन् मायां सृष्टेरुत्पत्तिहेतवे।
या मूलप्रकृतिः प्रोक्ता सा माया परिकीर्त्तिता॥
योऽयं सदाशिवः प्रोक्तः स एव पुरुषः परः।
एकं ब्रह्म द्विधा भूत्वा सृष्टिरेषा विधीयते॥
अर्द्धेन वनिता भूत्वा अर्द्धेन पुरुषस्तथा।
तावुभौ च समौ कृत्वा सृष्टिव्यक्तिं नयेत् सुधीः॥

मायावच्छिन्नेश्वरस्य षड़ङ्गान्याह कूर्मपुराणादौ—

सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः।
अनन्तशक्तिश्च विभोर्विधिज्ञाः षड़ाहुरङ्गानि महेश्वरस्य॥ * *॥

## [ ग्रन्थकृत्परिचयः ]

नारायणो वैदिकश्च भट्टाचार्यः समीरितः।
तस्यात्मजो वामदेवभट्टाचार्यस्तथैव च।
तस्यात्मजो विश्वनाथस्तेनेयं रचिता मुदा॥

इति षट्चक्रविवृतिटीका सम्पूर्णा।

---

शिवोक्त-

# पादुकापञ्चकम्

[ गुरोरधिवासस्थानम् ]

**ब्रह्मरन्ध्रसरसीरुहोदरे नित्यलग्नमवदातमद्‌भुतम् ।**
**कुण्डलीविवरकाण्डमण्डितं द्वादशार्णसरसीरुहं भजे ॥ १**

---

पञ्चवक्त्र-कृत-पञ्चपादुकास्तोत्रमंहसमुदायनाशकम् ।
तस्य रोचिरमलाख्यटीकया कोऽपि कालीचरणः प्रकाशयेत् ॥

अथ त्रिलोकोद्धारकर्त्ता सदाशिवः स्तोत्ररूपेण श्रीगुरुध्यानयोगं कथयिष्यन् तदर्थं प्रथमतो गुरोरधिवासस्थानं निरूपयति—ब्रह्मरन्ध्रेति । अस्यार्थः—ब्रह्मरन्ध्रसरसीरुहस्य ब्रह्मरन्ध्रविशिष्टं यत् सरसीरुहं सहस्रदलकमलं तस्योदरे तन्मध्ये, तत्कर्णिकायामिति यावत् । द्वादशार्णसरसीरुहं द्वादशवर्ण-विशिष्टं पद्मं भजे सेवे इत्यर्थः । अत्र भजे इति क्रियया अस्मत्कर्त्तृत्वोपस्थितेः शिववाक्यात् शिवेन स्वीयभजनीयत्वं दर्शयता सर्वेषां शिवोक्तमन्त्रो-पासकानां भजनीयत्वं सूचितम् । एवं सर्वत्र बोध्यम् । ब्रह्मरन्ध्रस्थानमाह कङ्काल-मालिनीतन्त्रे सहस्रदलपद्ममुपक्रम्य—

तत्कर्णिकायां देवेशि अन्तरात्मा ततो गुरुः ।
सूर्यस्य मण्डलं तत्र चन्द्रमण्डलमेव च ।
ततो वायुर्महानामा ब्रह्मरन्ध्रं ततः स्मृतम् ॥ इति ॥

केचित् तु तादृशपद्मोदरे तत्कर्णिकास्थत्रिकोणोदरे इति वदन्ति । तन्न । अत्रोदर-शब्दस्य मध्यवाचकत्वात् पद्ममध्यं कर्णिकैव प्रतीयते, न तु कर्णिकामध्यत्रिकोणमध्यम्, अनुपस्थितेः । व्यक्तमाह श्यामासपर्याधृत-वचनम्—

शिरःपद्मे सहस्रारे शुक्लवर्णे त्वधोमुखे ।
तरुणारुणकिञ्जल्के सर्ववर्णविभूषिते ।
कर्णिकान्तःपुटे तत्र द्वादशार्णसरोरुहे ॥ इत्यादि ॥

अत्र 'कर्णिकान्तःपुटे' इति सुव्यक्तम् । द्वादशार्णेति द्वादशवर्णाः सहखफ्रेंहसक्षमलवरयूम् इति गुरुमन्त्रात्मक-द्वादशवर्णास्तद्विशिष्टपद्ममिति तन्त्रज्ञाः ।

केचित् तु द्वादशवर्णो वाग्भवबीजं तद्युक्तपद्ममिति वदन्ति । तन्न । तथात्वे—

[ अकथादि-त्रिकोण-स्वरूपम् ]

**तस्य कन्दलितकर्णिकापुटे क्लृप्तरेखमकथादिरेखया ।**
**कोणलक्षितहलक्षमण्डलीभावलक्ष्यमबलालयं भजे ॥ २**

---

कर्णिकान्तःपुटे तत्र द्वादशार्णसरोरुहे ।
तेजोमये कर्णिकान्तश्चन्द्रमण्डलमध्यगे ॥
अकथादित्रिरेखीये हलक्षत्रयभूषिते ।
हंसपीठे मन्त्रमये स्वगुरुं शिवरूपिणम् ॥

इति वचने 'मन्त्रमये' वाग्भवबीजरूप-गुरुमन्त्रमये इत्यनेन द्वादशार्णेत्यस्य पौनरुक्त्यापत्तेः । द्वादशार्णेति द्वादश अर्णाः वर्णाः यत्र तदिति व्युत्पत्त्या सरोरुहे द्वादशवर्णयोगः प्रतीयते ।

यद्यप्यत्र द्वादशवर्णानां विशेषाभिधानं तद्योगस्थानञ्च नाभिहितं तथापि—

हंसाभ्यां परिवृत्तपत्रकमले दिव्यैर्जगत्कारणै-
र्विश्वोत्तीर्णमनेकदेहनिलयं स्वच्छन्दमात्मेच्छया ।

इति गुरुगीतायां 'हंसाभ्यां परिवृत्तपत्रे'त्यनेन तादृशसरोरुहस्य हंसयुक्तपत्रं प्रतीयते । तयोरेव षड़ावृत्त्या द्वादशवर्णा भवन्ति, तद्युक्तं पत्रम् । अत्र पत्रावच्छेदे वर्णयोगकथनात् पत्रस्यापि द्वादशसंख्यकत्वं व्यक्तीभूतमिति सुधीभिर्भाव्यम् । द्वादशवर्णसरोरुहं विशेषयति—नित्येति । नित्यलग्नमविनाभावसम्बन्धेन सहस्रदलपद्मेन मिलितम् । अवदातं शुक्लवर्णम् । अद्भुतं ब्रह्मतेजोमयत्वादिनाऽत्याश्चर्यम् । कुण्डलीविवरकाण्डमण्डितमिति । कुण्डल्या विवरं सहस्रदल-कमल-कर्णिकास्थ-शिवसमीपे कुण्डलीगमनपथरूपं छिद्रम् । तदधिकरणभूतकाण्डं नालं चित्रिणी नाड़ी तेन भूषितम् । यथा मृणालोपरि पद्मस्थितिस्तद्वत् चित्रिणीनाड़ीरूप-मृणालभूषितमित्यर्थः ॥ १ ॥

उक्तपद्मकर्णिकायामकथादित्रिकोणमध्ये गुरुश्चिन्तनीयः, अतस्तज्ज्ञानाय त्रिकोणं निरूपयिष्यन्नाह—तस्येति । अस्यार्थः—कन्दलितकर्णिकापुटे इति । कन्दलं परस्पराक्रमणपूर्वकं वाग्विवादः । अत्र लक्षितलक्षणया परस्पराक्रमणमात्रं गृह्यते । पुटम् आधारभूतस्थानम् । ततश्च तस्य पूर्वोक्त-सहस्रदलकमल-द्वादशदलकमलोभयस्य कन्दलिते परस्पराक्रान्ते कर्णिकापुटे कर्णिकात्मकाधारस्थाने अबलालयं भजे सेवे इत्यन्वयः ।

केचित् तु तस्य द्वादशदलस्येति व्याख्यायन्ति । तन्न । तथात्वे श्रीनाथस्य सहस्रदलकमल-द्वादशदलकमलोभयस्थले स्थितिविधायकवक्ष्यमाणवचनानामसङ्गत्यापत्तेः ।

अबला शक्तिः । सा चात्र बिन्दुत्रयाङ्कुरभूत-वामा-ज्येष्ठा-रौद्री-नामक-त्रिशक्तिरूपरेखात्रयमिलित-त्रिकोणरूपा कामकला, तद्रूपालयमित्यर्थः । कामकलायास्तद्रूपत्वमाह

[ त्रिकोणमध्यस्थ-मणिपीठ-स्वरूपम् ]

**तत्पुटे-पटुतडित्-कडारिम-स्पर्द्धमान-मणि-पाटलप्रभम् ।**
**चिन्तयामि हृदि चिन्मयं वपुर्नादबिन्दुमणिपीठमण्डलम् ॥ ३**

यामले—अथ कामकलां वक्ष्ये तत्तद्देवात्मरूपकम् ।

इत्यपक्रम्य—त्रिबिन्दुः सा त्रिशक्तिः सा त्रिमूर्त्तिः सा सनातनी ।

इत्याद्युक्तम् । 'सा' कामकला, पूर्वदर्शित-त्रिशक्तिरूपा इत्यर्थः ।

अबलालयं विशेषयति—क्लृप्तरेखमकथादिरेखयेति । अकारादि-षोड़शस्वरैः वामा रेखा, ककारादि-षोड़शवर्णैर्ज्येष्ठा रेखा, थकारादिषोड़शभी रौद्री रेखेति रेखात्रयेण क्लृप्ता चिह्निता रेखा यत्र, तादृशाबलालयमित्यर्थः । तदुक्तं बृहच्छ्रीक्रमे कामकलाप्रकरणे—

बिन्दोरङ्कुरभावेन वर्णावयवरूपिणी ।। इति ।

पुनः किम्भूतम् ? कोणलक्षितहलक्षमण्डलीभावलक्ष्यमिति । कोणेषु उक्तत्रिकोणस्यान्तरालेषु सम्मुख-दक्षिण-वामकोणेषु लक्षितैः प्रकाशितैः हलक्षवर्णैः मण्डलीभावेन तत्तद्वर्णाङ्कित-स्थानरूपेण लक्ष्यते ज्ञायते असौ तादृशमित्यर्थः । अत्र त्रिकोणस्य विशेषज्ञानं विना सम्यग्ध्यानं न भवतीत्यतः प्रमाणान्तरेण त्रिकोणं विशेषयति । अत्र त्रिकोणं बामावर्त्तेन लेखनीयम् । तदुक्तं शाक्तानन्दतरङ्गिण्याम्—

वामावर्त्तेन विलिखेदकथादित्रिकोणकम् ।। इति ।

काल्यूर्ध्वाम्नाये—त्रिबिन्दुं परमं तत्त्वं ब्रह्म-विष्णु-शिवात्मकम् ।
वर्णमयं त्रिकोणं तु जायते बिन्दुतत्त्वतः ।। इति ।

तथा—अकारादि-विसर्गान्ता ब्रह्मरेखा प्रजापतिः ।
ककारादि-तकारान्ता विष्णुरेखा परात् परा ।
थकारादि सकारान्ता शिवरेखा त्रिबिन्दुतः ।।

तन्त्रजीवने—रजःसत्त्वतमोरेखा योनिमण्डलमण्डिता ।।

तथा—उपरिष्टात् सत्त्वरेखा रजोरेखा स्ववामतः ।
तमोरेखा दक्षभागे रेखात्रयमुदाहृतम् ।।

एतद्वचनपर्यालोचनयापि अकथादीनां वामावर्त्तत्वमायातम् । स्वतन्त्रतन्त्रे—

अकथादित्रिपंक्त्या तु हलक्षमध्यमण्डितम् ।। इति ।

एतेन हलक्षवर्णानां त्रिकोणमध्ये स्थितिरित्युक्तम् । अलं विस्तरेण ।। २ ।।

उक्तत्रिकोणमध्ये मणिपीठोपरि गुरुस्थितिरित्यतस्तत्र मणिपीठं वर्णयति—तत्पुटे इति । अयमर्थः—तत्पुटे उक्तत्रिकोणमध्ये नादबिन्दुमणिपीठमण्डलं हृदि मनसि चिन्त-

[ हंसत्रिकोणयोः स्वरूपम् ]

**ऊर्ध्वमस्य हुतभुक्शिखात्रयं तद्विलासपरिबृंहणास्पदम् ।**
**विश्वघस्मरमहोच्चिदोत्कटं व्यामृशामि युगमादिहंसयोः ॥ ४**

---

यामीत्यन्वयः। नादबिन्दुमणिपीठमण्डलमिति। नादबिन्दुभ्यां सह मणिपीठमण्डलम् अथवा नादश्च बिन्दुश्च मणिपीठमण्डलञ्च तदित्यर्थः।

केचित् तु नादबिन्दुरूपमणिपीठमण्डलमिति वदन्ति। तन्न। तथात्वे नादस्य शुक्ल-वर्णत्वाद् बिन्दो रक्तवर्णत्वात् पटुतडित्कडारिमेत्यादिविशेषणस्याऽसंलग्नापत्तेः। तथाहि—

परशक्तिमयः साक्षात् त्रिधासौ भिद्यते पुनः।
बिन्दुर्नादो बीजमिति तस्य भेदाः समीरिताः॥

इति शारदावचनस्य परशक्तिमयो बिन्दुः ते बीजनादबिन्दवः वह्नीन्द्वर्कस्वरूपिणः इत्य-र्थकत्वे नादस्य चन्द्रस्वरूपत्वात् शुक्लत्वं, बिन्दोः सूर्यस्वरूपत्वाद् रक्तत्वमायातम्। व्यक्तमाह षट्चक्रवर्णने पूर्णानन्दः—

तदूर्ध्वे नादोऽसौ बलधवलसुधाधारसन्तानहासी॥ इति।

बृहच्छ्रीक्रमे—बालसूर्यप्रतीकाशमासीद् बिन्दुमदक्षरम्॥ इति।

एवञ्च तयोः शुक्ल-रक्तत्वे मणिपाटलप्रभत्वं सर्वथाऽसम्भवम्। अतः प्रदर्शितार्थ एव साधीयान्। एवञ्चाधो नादः, ऊर्ध्वे बिन्दुः, मध्ये मणिपीठमण्डलं चिन्तनीयमिति व्यवस्था। कङ्कालमालिनीतन्त्रे गुरुध्याने—

सहस्रदलपद्मस्थमन्तरात्मानमुत्तमम्।
तस्योपरि नादबिन्दोर्मध्ये सिंहासनोज्ज्वलम्।
तस्मिन्निजगुरुं नित्यं रजताचलसन्निभम्॥ इत्यादि॥

मणिपीठमण्डलं विशेषयति—पटुतडित्कडारिमस्पर्द्धमानमणिपाटलप्रभमिति। स्वकार्यसुसम्पादनयोगत्वं पटुत्वम्। ततश्च स्वप्रकाशरूप-स्वकार्यसुसम्पादनविरोधि-दोष-राहित्येन सर्वव्यापकातिप्रकाशमानानां तडितां कडारिम्णा सदृशकडारिम्णा पिङ्गलवर्णेन स्पर्द्धमानैर्मणिभिः पाटलप्रभमित्यर्थः। मणिपीठस्य मणिमयसर्वाङ्गत्वात्। अस्य नाद-बिन्दुमणिपीठमण्डलस्य वपुश्चिन्मयं ज्ञानमित्यर्थः।

अन्ये तु चिन्मयं वपुः द्वादशस्वरस्वरूपं वाग्भवबीजं गुरुमन्त्रं वपुश्चिन्तयामीति वदन्ति। तन्मन्दम्। गुरोः शुक्लवर्णत्वात् तद्बीजस्यापि शुक्लत्वेन मणिपाटलप्रभत्वविशेषणं न सङ्गच्छते॥ ३॥

हंसपीठोपरि नादबिन्दुमध्यस्थ मणिपीठोर्ध्वत्रिकोणे गुरोरधिवासः। अतस्तयो-

ज्ञानार्थं हंसत्रिकोणयोः स्वरूपं ज्ञापयिष्यन्नाह—ऊर्ध्वमिति। अस्यार्थः—अहम् आदिहंसयोर्युगं व्यामृशामि। एवमस्य मणिपीठस्योर्ध्वं हुतभुक्शिखात्रयं व्यामृशामि। तद्विलासेन हुतभुक्शिखात्रयस्य सुप्रकाशेन परिबृंहणास्पदम् उद्दिश्यमानमणिपीठरूपास्पदं व्यामृशामीति तत्प्रतिबन्धकविषयचिन्तादित्यागेन स्वस्वस्थाने स्थिरतरं भावयामीति प्रत्येकं क्रियान्वयः। हुतभुक्शिखात्रयमिति। हुतभुक्शिखादित्रयं हुतभुक्शिखात्रयम्। शाकपार्थिवादित्वाद् मध्यपदलोपे तत्पदसिद्धिः। हुतभुग् वह्निस्तच्छिखा वह्निबिन्दोरङ्कुरभूतदक्षिणादीशपर्यन्तगता वामा रेखा। आदिना ईशानकोणस्थ-चन्द्रबिन्दोरङ्कुरभूतेशानादिमरुत्कोणपर्यन्तगता ज्येष्ठा रेखा। मरुत्कोणस्थ-सूर्यबिन्दोरङ्कुरभूत-तदादिवह्निबिन्दुसङ्गता रौद्री रेखा। एवं त्रिबिन्दुत्रिरेखामिलितत्रिकोणं कामकलारूपम्। तदुक्तं बृहच्छ्रीक्रमे—

बिन्दोरङ्कुरभावेन वर्णावयवरूपिणी।
बिन्द्वग्रे कुटिलीभूता याम्यादीशानमागता॥
मनोरमा शक्तिरूपा सा शिखा चित्कला परा।
शक्तीशानगता रेखा प्रत्यगाग्नेयमात्रगा॥
ज्येष्ठा सा परमेशानी त्रिपुरा परमेश्वरि।
व्यक्तीभूय पुनर्वामे प्रथमाङ्कुरमागता।
इच्छया नादसंलग्ना रौद्री श्रृङ्गाटमागता॥ इति।

'सा शिख'ति आग्नेयमात्रगा वह्निसम्बन्धिनी मात्रा सा शिखा वह्निशिखेत्यर्थः। माहेश्वरीसंहितायाम्—सूर्यश्चन्द्रस्तथा वह्निरिति बिन्दुत्रयं भवेत्।
ब्रह्मा विष्णुस्तथा शम्भुरिति रेखात्रयं मतम्॥ इति।

एतत् त्रिकोणमध्ये गुरुस्थितिं स्पष्टमाह प्रेमयोगतरङ्गिणीधृतवचनं सहस्रदलमुपक्रम्य—

तन्मध्ये तु त्रिकोणन्तु विद्युदाकारमुत्तमम्।
बिन्दुद्वयञ्च तन्मध्ये विसर्गरूपमव्ययम्।
तन्मध्ये शून्यदेशे च शिवः परमसंज्ञकः॥

इति। अत एव शङ्कराचार्येणाप्याऽऽनन्दलहर्यामिदं सुव्यक्तमभिहितम्। "श्रीनाथस्य विसर्गारूढत्वादिति ललितारहस्यकारेणोक्तञ्च। विसर्गस्तु त्रिकोणोर्ध्ववर्तिचन्द्रसूर्यरूपबिन्दुद्वयमिति। आदिहंसयोर्युगमित्यत्रादिनाऽन्तरात्मसंज्ञकपरमहंस एव गृह्यते, न तु दीपकलिकाकार-जीवात्महंसः। अयं हंसः प्रकृतिपुरुषरूपः। तदुक्तमागमकल्पद्रुमे पञ्चशाखायाम्—हङ्कारो बिन्दुरित्युक्तो विसर्गः स इति स्मृतः।
बिन्दुः पुरुष इत्युक्तो विसर्गः प्रकृतिः स्मृतः॥
पुंप्रकृत्यात्मको हंसस्तदात्मकमिदं जगत्॥ इति।

[ श्रीगुरुध्यानयोगः ]

**तत्र नाथचरणारविन्दयोः कुङ्कुमासवझरीमरन्दयोः ।**
**द्वन्द्वमिन्दुमकरन्दशीतलं मानसं स्मरति मङ्गलास्पदम् ॥ ५**

केचित् तु—अस्य मणिपीठस्योर्ध्वमादिहंसयोर्युगं व्यामृशामीति व्याख्यायन्ति। तन्मन्दं, पूर्वोक्तकङ्कालमालिनीवचनबोधितहंसोर्ध्वं नादबिन्दुमध्यस्थ-मणिपीठे नादबिन्दोरधःस्थ-हंसस्थितेः सर्वत्रासम्भवात्। एतेन हुतभुक्शिखासखमिति केषाञ्चित् कल्पितपाठो निरस्तः ; तथात्वे ऊर्ध्वमस्येत्यस्य वैयर्थ्यापत्तेः। यद्वा—अस्य मणिपीठमण्डलस्योर्ध्वमादिहंसयोर्युगं व्यामृशामि। कङ्कालमालिनीवचने नादबिन्दुमध्यस्थितमणिपीठाधःस्थले हंसस्थितिः प्राप्ता। अत्र मणिपीठोर्ध्वस्थितिकथने महान् विरोधः। अतस्तयोरविवादाय हंसं विशेषयति—हुतभुक्शिखात्रयमिति। ततश्चाधःस्थले हंस इत्यानुपूर्विकस्य स्थितिः। ऊर्ध्वं पूर्वोक्तत्रिकोणाकारकामकलारूपेण परिणतस्य तस्य स्थितिरित्यविरोधः, कामकलाया हंसरचितमूर्त्तिकत्वात्।

पुनर्विशेषयति—विश्वघस्मरमहोच्चिदोत्कटमिति।

ङ भक्षे लृ घसौ चाथ घसि ङ क्षरणे व्युसक्।

तथाच—देञ् याचे चदि ह्लादे दीप्तौ चुदक् नुदिच्छिदिर।

इति धातुपाठात घसधातोर्भक्षणार्थत्वम्। चिदो दीप्त्यर्थत्वम्। ततश्च विश्वेषां घस्मरः भक्षिका अर्थात् संहारिका या महोचित् महाप्रकाशस्तया उत्कटं दूरतरं सर्वाधिकबलवदित्यर्थः॥ ४॥

श्रीनाथचरणारविन्दचिन्तनाधिकरणपीठं निरूप्येदानीं तद्ध्यानयोगं सूचयंस्तौति—तत्रेति द्वाभ्याम्। अस्यार्थः—तत्र मणिपीठस्थ-त्रिकोणमध्ये नाथचरणारविन्दयोर्द्वन्द्वं मानसं स्मरति ध्यायते इत्यन्वयः। चरणद्वन्द्वं विशेषयति—कुङ्कुमासवपरीमरन्दयोरिति।

वीप्सेत्थम्भाव-चिह्नेषु तेषु भागे परिप्रती॥

इति वोपदेवीयात् परेर्भोगार्थत्वम्। ततश्च कुङ्कुमासवानां लाक्षारसाभ-परमामृतानां यः परिभोगः स एव मरन्दो मकरन्दो ययोस्तादृशयोरित्यर्थः। "झरीमरन्दयो-" रिति पाठे झरी झरणं निःसरणमिति यावत्। ततश्च "कृदभिहितभावो द्रव्यवत् प्रकाशते" इत्युक्तेः कुङ्कुमासवानां झरी अर्थात् झरणाश्रयकुङ्कुमासवो मरन्दो ययोरित्यर्थः। द्वन्द्वं कीदृशम्? इन्दुमकरन्दशीतलम्। इन्दोश्चन्द्रस्य यो मकरन्दोऽमृतकिरणरूपस्तद्वत् शीतलम्। यथा चन्द्रामृतकिरणेन उत्तापनिवृत्तिस्तथा पदद्वन्द्वसेवनेन दुःखतापशान्तिरिति

**निसक्तमणिपादुकानियमिताघकोलाहलं**
**स्फुरत्किसलयारुणं नखसमुल्लसच्चन्द्रकम् ।**
**परामृतसरोवरोदितसरोजसद्रोचिषं**
**भजामि शिरसि स्थितं गुरुपदारबिन्दद्वयम् ॥ ६**

---

भावः । मङ्गलास्पदमभिप्रेतार्थसिद्धिस्थानम् । तच्चरणस्थाने मनोऽभिनिवेशे सर्वाभीष्ट-सिद्धिरिति तात्पर्यम् ॥ ५ ॥

निसक्तेति । अस्यार्थः—अहं शिरसि स्थितं पूर्वोक्तपीठोपरिस्थितं गुरुपदार-बिन्दद्वयं भजामि ध्याये इत्यन्वयः । पदारबिन्दद्वयं विशेषयति—**निसक्तमणिपादुकानिय-मिताघकोलाहलमिति** । निसक्तमणिपादुकया सेवितमणिपादुकाद्वारा नियमितो निरस्ती-कृतोऽघकोलाहलः पापानां प्रादुर्भावो येन तादृशमित्यर्थः । यद्वा—निसक्तो निबद्धो मणिर्यत्र पादुकायां सा मणिपीठमण्डलरूप-पादुका तया नियमितोऽघकोलाहलो येनेत्यर्थः ; तत्पादुकोपरि गुरुचरणचिन्तनेन पापनाशात् । अथवा—निसक्त आरुद्धो मणिर्गुरुचरणरूप-चिन्तामणिर्यासु पञ्चपादुकासु ताभिर्नियमिताघकोलाहलमित्यर्थः । ततश्च पञ्चपादुकाध्यानपूर्वकं तदुपरि गुरुचरणचिन्तनेनैव पापनाशात्, पापनाशे पञ्चपादुकानां ध्यानरूपत्र्यापारसाध्यत्वेन द्वारत्वमिति । **स्फुरत्किसलयारुणं**—स्फुरतां किसलयानां पल्लवानामरुणतुल्यमरुणं यत्रेति । आम्रकेन्दकादिपल्लवानां प्रथमोद्गमे रक्त-वर्णत्वात् तत्रैव दृष्टान्तः । **नखसमुल्लसच्चन्द्रकं** नखा एव समुल्लसच्चन्द्राः निर्मल-प्रकाशमानचन्द्रस्वरूपा यत्रेत्यर्थः । **परामृतसरोवरोदितसरोजसद्रोचिषं** परामृतसरोवरे उदितं यत् सरोजं पद्मं तद्वत् सद्रोचिषं निर्मलप्रकाशो यस्येति । अयम्भावः—**श्रीनाथस्य** चरणाभ्यां निरन्तरं परमामृतं निःसरति । अत एवोक्तं **पूर्णानन्देन**—

सुधाधारासारं निरवधि विमुञ्चन्नतितरां
यतः स्वात्मज्ञानं दिशति भगवान्निर्मलमतेः ॥

इति । एवं परामृतं सरोवरस्वरूपं तदुपरिस्थितं चरणं पद्मवत् प्रकाशते इति ।

ननु उक्तपद्मद्वयकर्णिकापुटे गुरुस्थितिर्विधीयते । तत् किमधःस्थितद्वादशदलकमल-कर्णिकायां किं वा ऊर्ध्वस्थसहस्रदलकर्णिकायामित्याकाङ्क्षायामत्र वदन्ति । **बृहच्छ्रीक्रमे**—

सर्वोपरि ततो ध्यायेत् पश्चिमाननपङ्कजम् ।
स्रवन्तममृतं दिव्यं देव्यङ्के कमलान्तरे ॥

इति । देव्यङ्के गुरुशक्त्यङ्के । **यामले**—

छत्रं मूर्ध्नि सहस्रपत्रकमलं रक्तं सुधावर्षिणम् ॥ इति ।

गुरुगीतायाम्—हंसाभ्यां परिवृत्तपत्रकमले दिव्यैर्जगत्कारणै

विश्वोत्तीर्णमनेकदेवनिलयं स्वच्छन्दमात्मेच्छया ।

तत्तद्योग्यतया स्वदेशिकतनुं भावैकदीपाङ्कुरं

प्रत्यक्षाक्षरविग्रहं गुरुपदं ध्यायेद् द्विबाहुं गुरुम् ॥

इति । **श्यामासपर्याधृतवचनम्**—

शिरःपद्मे सहस्रारे शुक्लवर्णे त्वधोमुखे ।

तरुणारुणकिञ्जल्के सर्ववर्णविभूषिते ॥

कर्णिकान्तःपुटे तत्र द्वादशार्णसरोरुहे ।

तेजोमये कर्णिकान्तश्चन्द्रमण्डलमध्यगे ॥

अकथादित्रिरेखीये हलक्षत्रयमण्डिते ।

हंसपीठे मन्त्रमये स्वगुरुं शिवरूपिणम् ॥

इति । एवमादिवचनैर्द्वादशदलकमलकर्णिकायां गुरोरधिष्ठानं विहितम् । **कङ्कालमालिनी-तन्त्रे**—सहस्रदलपद्मस्थ-मन्तरात्मानमुत्तमम् ।

तस्योपरि नादबिन्दोर्मध्ये सिंहासनोज्ज्वलम् ।

तस्मिन्निजगुरुं नित्यं रजताचलसन्निभम् ॥ इत्यादि ॥

**यामले**—सहस्रदलपङ्कजे सकलशीतरश्मिप्रभं

वराभयकराम्बुजम्—इत्यादि ।

**पुरश्चरणरसोल्लासे**—श्रीमहादेव उवाच—

सहस्रारे ततो नित्ये पङ्कजे परमाद्भुते ।

पद्मस्य बीजकोशे तु भावयेत् स्वगुरुं सदा ॥

श्रीपार्वत्युवाच—

सहस्रारे महापद्मे सदा चाधोमुखे प्रभो ।

गुरुस्थितिः कथं देव ! सततं वद निश्चयम् ॥

महादेव उवाच—

शृणु प्रिये प्रवक्ष्यामि यदेतत् पृष्टमुत्तमम् ।

सहस्रारं महापद्मं सहस्रदलसंयुतम् ॥

सदाशिवपुरं तत् तु नित्यानन्दमयं सदा ।

नानागन्धयुतं पद्मं सहजानन्दमन्दिरम् ॥

सदा चाधोमुखं पद्मं बीजमूर्ध्वमुखं सदा ।

[ स्तोत्रपाठफलम् ]

## पादुकापञ्चकस्तोत्रं पञ्चवक्त्राद्विनिर्गतम् ।
## षडाम्नायफलप्राप्तं प्रपञ्चे चातिदुर्लभम् ॥ ७

त्रिकोणाकाररूपेण कुण्डलीसंयुतेन च ॥

इत्यादि । बालाविलासतन्त्रे—

श्रीदक्षिणामूर्त्तिरुवाच—

प्रातरुत्थाय धवले सहस्रारे गुरुं स्मरेत् ।
अधोमुखे महापद्मे सर्ववर्णविभूषिते ॥
अकथादित्रिरेखाढ्य-हलक्षत्रयभूषिते ।
तदन्तश्चन्द्रबिम्बस्थ-हंसपीठे स्मिताननम् ॥

श्रीदेव्युवाच—

अधोमुखे गुरुस्तत्र कथं तिष्ठति च प्रभो ।

श्रीदक्षिणामूर्त्तिरुवाच—

अधोमुखस्य पद्मस्य कर्णिकामध्यसंस्थितम् ।
चन्द्रबिम्बञ्चोर्द्धवक्त्रं तत्र हंसस्ततः स्थितिः ॥

इति । एतदादिभिर्वचनैः सहस्रदलकर्णिकायां गुरोरवस्थितिर्विधीयते । एवञ्चोभयकल्पे विहिते श्रीनाथस्य आज्ञया तयोरेकतरमवधार्याऽनुष्ठातव्यमिति सिद्धान्तः ।

अत एवोक्तं कुलार्णवे एकादशोल्लासे—

पारम्पर्यागमाम्नायं मन्त्राचारादिकं प्रिये ।
सर्वं गुरुमुखाल्लब्धं सफलं स्यान्न चान्यथा ॥ इति ॥ ६ ॥

स्तोत्रफलश्रुतिमाह—पादुकापञ्चकस्तोत्रमिति । पदरक्षणाधारः पादुका तासां पञ्चकम् । (१) पद्मम् (२) तत्कर्णिकास्थले अकथादित्रिकोणम् (३) तदन्तर्नाद-बिन्दुमणिपीठमण्डलम् (४) तदधःस्थहंसः (५) पीठोपरि त्रिकोणम् समुदायेन पञ्च-संख्यकम् ।

अथवा—(१) पद्मम् (२) त्रिकोणम् (३) नादबिन्दू (४) मणिपीठमण्डलम् (५) तदूर्ध्वस्थ-त्रिकोणाकार-कामकलारूपेण परिणतो हंस इति पञ्चसंख्यकम् । तस्य स्तोत्रम् । फलश्रुतिसहितसप्तश्लोकात्मकमित्यर्थः ।

पञ्चवक्त्राद्विनिर्गतमिति । शिवस्य पञ्चवक्त्राणि यथा लिङ्गार्चनतन्त्रे—

सद्योजातं पश्चिमे तु वामदेवं तथोत्तरे ।

अघोरं दक्षिणे ज्ञेयं पूर्वे तत्पुरुषं स्मृतम् ॥
ईशानं मध्यतो ध्येयं चिन्तयेद् भक्तितत्परः ॥

इति। तेभ्यो विनिर्गतं तैरुक्तम्। षड़ाम्नायफलप्राप्तमिति। षड्मुखानि यथा पूर्वोक्तानि पञ्च। षष्ठवक्त्रन्तु पूर्ववक्त्रस्याधस्तात् गुप्तं तामसम्। एतत् तु शिवतन्त्रे सद्योजातादिषवड़क्त्रन्यासे "ॐ हं ह्रीं श्रौं ह्रीं तामसाय स्वाहा" इत्यनेन तत्रोक्तध्याने "नीलकण्ठमधोवक्त्रं कालकूटस्वरूपिणम्" इत्यनेन च प्रकटितम्। मिलित्वा षड़वक्त्राणि भवन्ति। एभिः षडवक्त्रैराम्नायते कथ्यतेऽसौ इति षड़ाम्नायः शिवोक्तस्तोत्रसमुदायः। तस्य फलं तत्तन्मन्त्रसमुदायविहितकर्मफलं प्राप्यते येनेत्यर्थः। प्रपञ्चे लिङ्गाद्याब्रह्मपर्यन्तमायाप्रकटितसंसारे। अतिदुर्लभमिति अतिदुःखेन लभ्यते यत् तदतिदुर्लभं तल्लाभकरणपुण्यपुञ्जजनकजन्मान्तरीयतपसः क्लेशस्वरूपत्वाद् दुःखलभ्यत्वमिति भावः ॥ ७ ॥

इति श्रीकालीचरणकृता पादुकापञ्चकस्तोत्रस्य
अमलानाम टिप्पणी समाप्ता।

❀ तत् सत् ❀





# ĀGAMĀNUSANDHĀNA SAMITI.

The object of the Society is the preservation and promulgation of a knowledge of the Āgama by the publication of Texts and other works on the Shāstra, by the copying and suitable distribution of Texts and other works dealing with the Āgamas.

## LIST OF PUBLICATIONS

**Vol. I.** *Tantrābhidhāna with Bījanighantu, Mudrānighantu Mantrābhidhān, Mātrikānighantu etc.*—A Tantrik Dictionary. ( Revised and enlarged 2nd Ed. )

**Vol. II.** *Shatchakranirūpana.*—A work on Kundalinīyoga with two lucid Commentaries. *Pādukapānchaka*—with Commentary. Edited by Tārānātha Vidyāratna. Illustrative English introduction by Svmisree Bhairavanaudanāthā. ( 3rd Ed. thoroughly revised with variant readings. )

**Vol. III** ( **Vols. XVIII** and **XIX** in the 2nd Ed.)—*Prapanchasāra Tantra.*—A Tantrik Compendium by Shamkarāchārya. with the Commentary of Padmapāda and a gloss thereon. The book contains the general rules applicable to all the different forms of Tantrik Sādhana and worship as also a summary of each of the different systems.

**Vol. IV.** *Kulachūdâmaninigama.* Introduction by Akshaya Kumāra Maitra, C I.E., K I.H.

**Vol. V.** *Kulārnava Tantra.* The most authoritative work on Kula Dharma. Edited by Tārānātha Vidyāratna. Introduction by Arthur Avalon.

**Vol. VI.** *Kālīvilāsa Tantra.*—Edited by Mahāmahopādhyāya Pārvatī Charana Tarkatīrtha. Introduction by Arthur Avalon.

**Vol. VII.** *Shrīchakrasambhāra.*—Edited by Kazi Dawasamdup. A Buddhist Tibetan Tantra Foreword on the Vajrayāna by Arthur Avalon— ( *ont of print* ).

**Vol. VIII.** *Tantrarāja* ( *Kādimata* ). Part I. Commentary by Subhagānanda-nātha. Edited by Mahāmahopādhyāya Lakshmana Shāstrī. This along with vol. XII gives a detailed account of Kādimata, one of three schools into which Shāktas of the Shrīkula are divided. Full Summary ( 37 pages ) in English by Arthur Avalon.

**Vol. IX.** *Karpūrādi-stotra.* The famous hymn to Kālī by Mahākāla. Text, with Introduction and Commentary containing the esoteric interpretation of the hymn by Vimalānanda-Svāmī. Translated by and with notes of Arthur Avalon.

**Vol. X.** *Kāmakalāvilāsa.* Commentary by Natanānandanātha. Edited by Mahāmahopādhyāya Sadāshiva Mishra. Complete translation by and notes of Arthur Avalon. This is a poetic description by Punynānda of the unfolding of the Divine creative impulse.

**Vol. XI.** *Kaulopanishad, Tripurāmopanishad, Bhāvanhpanishad.* Commentaries on these and the Prayoga on the Bhāvana by Bhāskararāya, *Bahvrichopanishad, Arunopanishad,* with Commentary ; *Kālikopanishad.* Introduction by Arthur Avalon. Edited by Sītārāma Shāstrī. The Prayoga by Bhāskara shows how Upani*sh*adik teachings can and ought to be imbibed.

**Vol. XII.** *Tantrarāja.* Part II. Commentary by Subhagānandanātha. Edited by Mahāmahopādhāya Sadāshiva Mishra. Summary ( 74 pages ) in English by Arthur Avalon. This part gives the philosophy of Tantrik rituals. It also contains a description of the four stages of uttered sound. The student of astronomy will find much of interest in Ch. 25.

**Vol. XIII.** *Mahānirvāna Tantra,* with the Commentary of Hariharānanda Bhāratī. Printed from Mss. of Raja Rammohun Roy.

**Vol. XIV.** *Kaulāvalīnirnaya.* By Jnānānanda Paramahamsa. A compilation from various original Tantras. It gives an account of the rituals of Kula Dharma and also contains an account of the three classes into which mankind is divided and other important particulars necessary for an adequate knowledge of the Sampradāya.

**Vol. XV.** *Brahmasamhitā* with the commentary of Jīva Gosvamī and *Vishnusahasranāma* with the commentary of Shamkarāchārya. Both these are highly venerated by Vai*shn*avas. The Brahma Samhitā was greatly valued by Shrī-Chaitanyadeva the founder of the present day Bengal Vai*shn*avism. Jīva Gosvāmī wrote the commentary in compliance with the desire of Chaitanyadeva. These books show that there can be no conflict between the Vai*shn*ava Tantras and those of other schools.

**Vols. XVI, XVII.** *Shāradātilaka Tantra* : By Lak*sh*ma*n*adeshikendra. Commentary by Rāghavabha*tt*a named *Padārthādarsha*—with a Summary ( 72 pages ) in English. This is similar in character to the Prapanchasāra. The text and the commentary which is very lucid are exhaustive will be of help for a proper understanding of also the Prapanchasāra the language of which is at times rather involved. An alphabetical index of the verses is appended to the book. Dr. Winternitz, in his History of Indian Literature, says :—"It is Sir John Woodroffe ( under the pseudonym of Arthur Avalon ) who by a series of essays and the publication of the most important Tantra texts has enabled us to form a just judgment and an objective historical idea of this religion and its literature".

**Vol. XX.** *Chidgaganchandrikā*—By Kalidāsa, a valuable treatise on Kashmirian Shaiva philosophy. Edited by Svāmi Trivikrama Tirtha.—with an illuminating English introduction.

**Vol. XXI.** *Tārābhaktisudhārnava*—By Narasimha Thakkur. Edited by Panchānan Bhattāchārya, Tarka-Sānkhya-Vedāntatirtha. It is an exhaustive work dealing with Dwitia Mahāvidya Tārā and throws a flood of new light on the subject.

कृष्णदास संस्कृत सीरीज

१०८

# षट्चक्रनिरूपणम्

सम्पादकः

गोस्वामी प्रह्लाद गिरि वेदान्तकेशरी







कृष्णदास अकादमी · वाराणसी

# घोषणा पत्र.

१. प्रबन्ध का नाम - षट्चक्र निरूपणम् !

2. विषय —— योगतन्त्र.

3. लेखक का नाम और पता — गोस्वामी प्रह्लाद गिरि, वेदान्त केसरी, के-22/2, रामानन्द मठ, दुर्गाकुण्ड, वाराणसी-२२१००१.

४. संस्था का नाम जहाँ कोई डी. लिट् निबन्ध दाखिल है। ×

५. निबन्ध का प्रकाशन (किस सिरिज में)
(क) मैं प्रमाणित करता हूँ कि (i) मेरी उपर्युक्त रचना नवीन व्याख्या के साथ प्रथम बार सन् १९८८ में प्रकाशित हुई है।
(ख) यह रचना शोध ग्रन्थ नहीं है।
(ग) मैं गत पाँच वर्षों से उत्तरप्रदेश में रह रहा हूँ।

लेखक हस्ताक्षर.

गोस्वामी प्रह्लाद गिरि

कृष्णदास संस्कृत सीरीज
१०८

श्रीपूर्णानन्दयतिविरचितम्

# षट्चक्रनिरूपणम्

कालीचरणकृत 'श्लोकार्थपरिष्कारिणी'-शंकरकृत 'षटचक्रभेदटिप्पणी'-विश्वनाथकृत 'षट्चक्रविवृत्ति' संस्कृतव्याख्यासमेत-सविमर्श 'प्रह्लाद' हिन्दीव्याख्यासहितम्

हिन्दीव्याख्याकारः सम्पादकश्च
गोस्वामी प्रह्लाद गिरिः
वैदान्तकेशरी




कृष्णदास अकादमी, वाराणसी
१९८८

KRISHNADAS SANSKRIT SERIES
108
****

# ṢAṬCHAKRANIRŪPAṆA

OF

## SHREE PURNANAND YATI

Edited With

*'Shlokarthaparishkarini' of Kalicharan, 'Shatchakra-bhedatippani' of Shankar, 'Shatchakravivritti' of Vishwanath. Sanskrit Commentaries, 'PRAHLAD' HINDI COMMENTARY & CRITICAL NOTES*

Hindi Commentator & Editor
**Goswami Prahlad Giri**
*Vedantakeshari*




KRISHNADAS ACADEMY
*VARANASI-221001*
1988

## समर्पणम्



**यत् करोषि यदश्नासि यज्जुहोषि ददासि यत् ।**
**यत् तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम् ॥**

इति श्रीमद्भगवद्गीतावचनानुसारं
प्रातःस्मरणीय-पूज्य-परमगुरुवर्यं-
सर्वतन्त्र-स्वतन्त्र-महामाहेश्वर-महामहोपाध्याय-
**ब्रह्मलीन-**
पण्डित रामेश्वर झा 'शिवयोगि' महोदयानां
पुण्यस्मृतौ सादरम्...............

**दीपावली**
**वि. सं. २०४५**
**वाराणसी**

**प्रह्लादः**

# सम्पादकीय

बाल्यावस्थासे ही तन्त्र-मन्त्रके प्रति मेरी रुचि रही है। मैं केवल मन्त्र-यन्त्रको ही तन्त्र मानता था, अतः इष्टोपासनापूर्वक मन्त्र-यन्त्रोंसे कार्यसिद्धिके लिए तान्त्रिक उपासना करता था, योगतन्त्रके सम्बन्धमें अज्ञानी था तथा यह भी उस समय नहीं जानता था कि योगतन्त्रसे भी किस प्रकार मोक्षप्राप्ति होती है। वस्तुतः इसी योगतन्त्रका ही अनुसन्धान करता था, किन्तु अज्ञानवश योगतन्त्रको ही तन्त्रोपासना मानता था, तन्त्रमें योगतन्त्र नामक शब्दका मेरी स्मृति पटलमें उद्‌भासित नहीं हुआ था। अतः तन्त्रका नाम लेकर ज्ञानार्जन हेतु अनेक साधु-सन्तोंसे मिलता था, किन्तु मुझे सन्तोषकी प्राप्ति नहीं होती थी। इसी बीचमें मेरे पूज्य गुरुवर्य स्वर्गीय-म० म० पण्डितराज डॉ० गोपालशास्त्री दर्शनकेशरी 'शिव'जी ( जो अपने गुरुवर्यसे शक्तिपातद्वारा शिवस्वरूपमें प्रतिष्ठित थे ) मुझे उनके गुरु महामहोपाध्याय पण्डित रामेश्वर झा 'शिवयोगी'जीके पास साथमें लेकर गये। जैसे ही हम उनके निवास-स्थान ( श्रीरामेश्वर जोशीजीके घर, कोल्हुआ, वाराणसी ) पर पहुँचे, वैसे ही उन्होंने कहा—"मैं जिसे खोजता था, वही आ गया है।" तब उनसे मैंने पूछा—"क्यों ?" उन्होंने कहा—"तुम भी तो मुझे खोज रहे हो।" रामकृष्ण परमहंसने सच ही कहा है—"गुरु अपने आप मिल जाते हैं, जब जिज्ञासा तीव्र हो जाती है।"

अद्‌भुत घटनाएँ घटती थीं नित्य-प्रतिदिन। उनके पास कौन आ रहा है—इसे कमरेके अन्दरमें रहकर बिना देखे पहलेसे ही वे बता देते थे।

समयके साथ मैं भी प्रतिदिन प्रातः-सायं उनका दर्शन करता था। पहले पहले मुझे उन्होंने विशेषरूपसे इष्टोपासना, तन्त्रोपासना आदिका ज्ञान प्रदान किया, जिसकी मैं पहलेसे ही उपासना करता आ रहा था। तथापि मेरी जिज्ञासा शान्त नहीं हुई। कालक्रमसे मुझे उन्होंने प्रत्यभिज्ञाशास्त्र, कश्मीरी शैवागम आदिका ज्ञान प्रदान किया। पुनः श्रीचक्रोपासना तथा साधनाकी शिक्षा उन्होंने प्रदान की। पहलेसे मैं योगाभ्यास करता आ रहा था अतः उन्होंने अन्तमें योगतन्त्रका ज्ञान अर्थात् षट्‌चक्रनिरूपण करके कुण्डलिनी-जागरणकी साधना करनेका ज्ञान प्रदान किया। उनके सान्निध्यमें रहकर मैं भी साधनामें रत रहा। जब उनके निर्वाणका समय आ गया तब उससे कुछ माह पूर्व उन्होंने मुझे शक्तिपातसे शिवस्वरूपमें प्रतिष्ठापित कर दिया। यह तो स्वानुभूति ही है, वर्णनातीत है। कुछ माहके पश्चात् 'मैं स्वरूपमें स्थित हो रहा हूँ' कहकर उन्होंने निर्वाणको प्राप्त किया। वे अद्वितीय शैवागमके 'शिवयोगी'

साक्षात् शिव थे। षट्चक्रके चिन्तनसे, कुण्डलिनी-जागरणसे जो फल प्राप्त होते हैं, वे सारे फल उनमें विद्यमान थे।

मेरी बहुत दिनसे यही इच्छा थी कि आगम शास्त्रपर कुछ विचार करूँ। संयोगसे प्रकाशक महोदयने मेरे पास आकर 'षट्चक्रनिरूपणम्'की व्याख्या हिन्दीमें करनेको कहा। अतः प्राप्त-गुरुज्ञानसे यथाशक्ति मैंने इसका विवेचन किया है। तान्त्रिक योगियोंके लिए कहाँतक मैं सहायक बन सका हूँ—इसका स्वयं विचार करेंगे। ग्रन्थ, टीका तथा षट्चक्रयोगके सम्बन्धमें विशेषरूपसे भूमिकामें सुविस्तृत विवेचन किया गया है, अतः पाठक उसके अवलोकन करनेका कष्ट करेंगे।

जिनकी कृपा एवं सहायतासे मेरा कार्य निर्विघ्न समाप्त हुआ है उन्हें कृतज्ञता-का प्रकट करना अपना परम कर्तव्य समझता हूँ। अतः—

सर्वप्रथम मैं अपने पूज्य गुरुवर्य स्वर्गीय **म० म० पण्डितराज डॉ० गोपाल-शास्त्री दर्शनकेशरी 'शिव'जी** (काशीपण्डितसमाध्यक्ष, राष्ट्रपतिसम्मानित)का स्मरण करता हूँ कि जिनकी कृपासे मैं आज संस्कृतवाङ्मयमें निर्वाध प्रविष्ट हुँ। साथमें मुझे अपने शक्तिपातके द्वारा शिवस्वरूपमें प्रतिष्ठित करानेवाले सर्वतन्त्र-स्वतन्त्र महामाहेश्वर प्रातःस्मरणीय पूज्य परमगुरुवर्य स्वर्गीय **महामहोपाध्याय पण्डित रामेश्वर झा 'शिवयोगी'जी** (राष्ट्रपतिसम्मानित)का हृदयमें स्वात्मैकस्वरूपसे चिन्तन करता हूँ। इन्हींके चरणकमलयुगलालम्बी होनेसे मुझे चक्रज्ञानकी प्राप्ति हुई है, अतः उन **'शिवयोगी'**जीको इस ग्रन्थका समर्पण करना उचित समझता हूँ। साथ ही श्रीनेपाली संस्कृत महाविद्यालय, मङ्गलागौरी, वाराणसीके प्राचार्य पूज्य गुरुवर्य स्वर्गीय **दामोदरशर्मा भारद्वाजजी** (जिनका स्वर्गवास विगत १०-९-१९८७ ई० सन्को हुआ है)को अपने श्रद्धासुमनोंका अर्पण करता हूँ कि जो मेरे अच्छे पथ-प्रदर्शक रहे। साथ-साथ पूज्य गुरुवर्य **आचार्य पञ्चानन गिरिजी** (एम० ए० अंग्रेजी), बोध गया मठ, वैजनत्था, वाराणसी,के चरणकमलयुगलमें श्रद्धावनत हूँ कि जिनके आशीर्वादसे आज मेरी लेखनी अविरामगतिसे कार्यरत है।

अन्तमें इस ग्रन्थके प्रकाशक **'कृष्णदास अकादमी'**के सञ्चालकजीको अशेष धन्यवाद प्रदान करता हूँ कि जिन्होंने इसे प्रकाशित कर तन्त्रागम योगियोंका बड़ा उपकार किया है तथा प्राचीन तन्त्रागमकी रक्षा की है। सर्वान्तमें पाठकोंको मेरी हार्दिक शुभकामनाएँ। इति शिवम्।

दीपावली
वि० सं० २०४५ **—प्रह्लाद**
वाराणसी

# भूमिका

प्रत्येक प्राणीका परम लक्ष्य है—परमपुरुषार्थ मोक्षको प्राप्त करना। अतः वह अपनी रुचिके अनुसार मोक्षके मार्गका अनुसरण करता है। सभी मार्ग उसी एक मात्र चौराह—ईश्वरको प्राप्त करते हैं। महिम्नः स्तोत्रमें भी कहा गया है—

"रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव।"

'हे ईश्वर ! जिस प्रकार नदियाँ टेढ़े-मेढ़े विभिन्न मार्गोंसे जाकर एक मात्र सागरको प्राप्त करती हैं, उसी प्रकार विभिन्न रुचिवाले पुरुष भिन्न-भिन्न मार्गोंका अनुसरणकर एक मात्र आपको ही प्राप्त करते हैं।'

विभिन्न रुचियोंके कारण मार्ग भी अनेक हो गये हैं; जैसे—कर्ममार्ग, उपासनामार्ग, योगमार्ग तथा ज्ञानमार्ग। इन सभी मार्गोंका लक्ष्य एक मात्र परमपुरुषार्थ मोक्षको प्राप्त करना है। उपासनाके अन्तर्गत तन्त्रोपासना आती है, किन्तु योग तथा तन्त्र दोनों मिलकर योगतन्त्रमार्ग नामक एक और मार्गका निर्देशन करते हैं। प्रस्तुत कुण्डलिनीयोग योगतन्त्रके अन्तर्गत आता है। कुण्डलिनीयोगके अन्य नाम जैसे—लययोग तथा षट्चक्रभेद हैं। इसी षट्चक्रभेदके विधानको बतलानेवाला ग्रन्थ **'षट्चक्रनिरूपणम्'** है।

**ग्रन्थकारका परिचय :—**

तन्त्रागम साहित्यको व्यवस्थित रूप प्रदान करनेवाले बहुतसे तान्त्रिक समय-समयपर अवतरित हुए हैं। उन तन्त्रावतारोंमें **परमहंस स्वामी पूर्णानन्द यति** अन्यतम हैं, कि जिन्होंने **'षट्चक्रनिरूपणम्'**की रचना की है। स्वामी पूर्णानन्द यति जीका जन्म बङ्ग प्रान्तके म्यैनसिंह जिलेके एक प्रतिष्ठित ब्राह्मण परिवारमें हुआ था। ये षोलहवीं शताब्दीके एक महान् तान्त्रिक साधक थे। जब इन्होंने गुरुसे दीक्षाग्रहणकर गुरूपदिष्ट साधनासे पूर्ण आनन्दको प्राप्त किया, तब गुरुने इनका नाम पूर्णानन्द रक्खा, जो कि आगे चलकर परमहंस स्वामी पूर्णानन्द यतिके नामसे प्रसिद्ध हुए।

**ग्रन्थका परिचय :—**

परमहंस स्वामी पूर्णानन्द यति द्वारा विरचित **'श्रीतत्त्वचिन्तामणि'** नामक ग्रन्थ तन्त्रागममें सर्वप्रसिद्ध है। इसमें पचीस अध्याय हैं। प्रथम अध्यायमें तत्त्वबोधका निरूपण किया गया है। द्वितीय अध्यायमें दीक्षाकी आवश्यकता तथा विधियोंका निरूपण किया गया है। तृतीय अध्यायमें दीक्षाके लिए स्थान चयन, कूर्मचक्र, वस्तु-

याग तथा विघ्ननाशक मण्डलके साथ देवताओंके मन्त्र एवं मण्डल, उनकी पूजा आदिका निरूपण किया गया है। पञ्चम अध्यायमें सहायक देवता तथा दीक्षामें उनके स्थान एवं उनकी पूजा, कुम्भके लिए धातु तथा आकार आदिका निरूपण किया गया है। षष्ठ अध्यायमें षट्चक्रोंका निरूपण किया गया है।

प्रस्तुत ग्रन्थ **'षट्चक्रनिरूपणम्'** मूल ग्रन्थ श्रीतत्त्वचिन्तामणिका षष्ठ अध्याय है। इसमें (१) मूलाधार, (२) स्वाधिष्ठान, (३) मणिपूर, (४) अनाहत, (५) विशुद्ध तथा (६) आज्ञा—इन छहों चक्रोंका निरूपण किया गया है। अतः इस ग्रन्थका नाम 'षट्चक्रनिरूपण' है। इसमें कुल पचपन श्लोक हैं। इन श्लोकोंका विषय भेदसे निम्न प्रकारसे विभाजन किया गया है—

(१) श्लोकसंख्या १ से ३ तक विभिन्न नाड़ियोंका निरूपण किया गया है।

(२) श्लोकसंख्या ४ से १३ तक मूलाधार चक्रका निरूपण किया गया है।

(३) श्लोकसंख्या १४ से १८ तक स्वाधिष्ठान चक्रका निरूपण किया गया है।

(४) श्लोकसंख्या १९ से २१ तक मणिपूर चक्रका निरूपण किया गया है।

(५) श्लोक संख्या २२ से २७ तक अनाहत चक्रका निरूपण किया गया है।

(६) श्लोकसंख्या २८ से ३१ तक विशुद्ध चक्रका निरूपण किया गया है।

(७) श्लोकसंख्या ३२ से ३८ तक आज्ञा चक्रका निरूपण किया गया है।

(८) श्लोकसंख्या ३९ से ४९ तक सहस्रारका निरूपण किया गया है।

(९) श्लोकसंख्या ५० से ५५ तक कुण्डलिनीको मूलाधारसे सहस्रार पर्यन्त एवं सहस्रारसे मूलाधार पर्यन्त ले जाने-आनेकी विधि, गुरु प्रशंसा तथा माहात्म्य आदिका निरूपण किया गया है।

**ग्रन्थके टीकाकार एवं उनकी टीकाएँ :—**

**'षट्चक्रनिरूपणम्'** योगतन्त्रका अद्वितीय सुव्यवस्थित ग्रन्थ है। अतः इसके महत्त्वको देखते हुए तान्त्रिक टीकाकारोंने इसकी टीकाएँ की हैं। योगतन्त्र दुरवबोधगम्य होनेसे प्रस्तुत ग्रन्थकी टीकाएँ अल्पसंख्यामें मिलती हैं। ग्रन्थ तथा टीकाओंसे विषयज्ञान तो हो जाता है, किन्तु गुरुपरम्परासे प्राप्त ज्ञानसे ही साधक सिद्ध होता है—यह निष्पक्ष निर्णय है। ग्रन्थका ज्ञान स्पष्ट रूपसे साधकको प्राप्त हो, इस उद्देश्यसे इसकी संस्कृत टीकाएँ की गयी हैं; जो निम्न प्रकारसे हैं—

**(१) श्रीकालीचरणकृत 'श्लोकार्थपरिष्कारिणी'**—संस्कृत टीकाका प्रकाशन ई० सन् १८५८ में हुआ था। इस संस्करणके सम्पादक आनन्दचन्द्र वेदान्तवागीश थे, प्रेस 'सुचारु प्रेस, कलकता' रहा।

(२) ई० सन् १८६९ में **श्रीकालीचरणकृत** टीका तथा **श्रीरमावल्लभकृत संस्कृत टीका**—इन दोनोंका प्रकाशन हुआ था, जिसके सम्पादक श्रीकालीदास भट्टाचार्य थे।

(३) ई० सन् १९४१ में **श्रीविश्वनाथकृत 'षट्चक्रविवृत्ति'** नामक संस्कृत टीकाका प्रकाशन हुआ था। इसके सम्पादक आर्थर एवेलन् महोदय थे।

(४) ई० सन् १९४१ में **श्रीशङ्करकृत 'षट्चक्रभेदटिप्पणी'** नामक संस्कृत टीकाका प्रकाशन हुआ था। इसके सम्पादक आर्थर एवेलन् महोदय थे।

उपर्युक्त 'षट्चक्रविवृत्ति' एवं 'षट्चक्रभेदटिप्पणी'—दोनों टीकाओंका प्रकाशन ई० सन् १९४१ में आर्थर एवेलन् महोदयके प्रवर्तनसे हुआ था।

संस्कृत टीकाओंमें उपर्युक्त चार टीकाएँ प्रसिद्ध हैं। इन टीकाओंमें विशद विवेचन किया गया है। संस्कृतज्ञोंके लिए ये टीकाएँ बहुत ही उपयोगी हैं। जो पाठक संस्कृत नहीं जानते हैं उनके लिए राष्ट्रभाषा हिन्दीका ज्ञान अत्यन्त आवश्यक है। इसलिए कि हिन्दी राष्ट्रभाषा होनेसे प्रायः सभी शास्त्रोंके हिन्दी अनुवाद आज प्रचलित हैं। अतः इस दृष्टिसे 'षट्चक्रनिरूपणम्'की हिन्दी टीकाएँ कुछ विद्वानोंने की हैं, जो कि वर्तमान अप्राप्त हैं। इस आवश्यकताकी पूर्ति हेतु प्रस्तुत संस्करणका प्रकाशन किया गया है। प्रति श्लोकके अर्थके साथ-साथ विमर्शमें श्लोकके प्रतिपदोंके गूढ़ार्थ विवेचन किये गये हैं, जो कि अत्यन्त महत्त्वपूर्ण हैं। इन कारणोंसे यह ग्रन्थ सुबोधगम्य हो गया है।

**षट्चक्रका विवेचन :—**

मानव शरीरमें बहत्तर हजार नाड़ियाँ विद्यमान हैं। ये नाड़ियाँ अपने मूलस्थानसे शरीरके विभिन्न भागमें गयी हैं। जहाँपर अनेक नाड़ियाँ एकत्र हो जाती हैं वहाँपर एक चक्र-सा स्थान बन जाता है। इस प्रकारसे शरीरमें छः चक्र है। इन चक्रोंका आकार कमल फूलके समान होनेसे इन्हें कमल व पद्म भी कहते हैं। नाड़ियोंके विशेष रूपसे बिखर जानेसे दलोंका भी निर्माण हो जाता है। इस प्रकारसे शरीरमें षट्कमल स्थित हैं। (१) मूलाधार, (२) स्वाधिष्ठान, (३) मणिपुर, (४) अनाहत, (५) विशुद्ध, तथा (६) आज्ञा। सहस्रार भी कमलाकार होनेसे उसे भी सहस्रदल कमल कहते हैं। इन कमलोंके निर्माणके प्रकारको जाननेके लिए सबसे पहले नाड़ियोंके ज्ञान आवश्यक हैं। हम उपयोगी नाड़ियोंका सर्वप्रथम विवेचन करेंगे। उसके बाद प्रत्येक चक्रका विवेचन करेंगे। उसके बाद कुण्डलिनीजागरण अर्थात् चक्रभेद आदिका विवेचन करेंगे।

**नाड़ियोंका विवेचन :—**

मानव शरीरमें स्थित बहत्तर हजार नाड़ियोंमें तीन नाड़ियाँ मुख्य मानी गयी हैं—( १ ) इडा, ( २ ) पिङ्गला तथा ( ३ ) सुषुम्णा। ये नाड़ियाँ अपने उद्गम स्थानसे निकलकर शरीरके विभिन्न भागमें गयी हैं। नाड़ियोंके उद्गम स्थानको नाडीकन्द कहते हैं। इस नाडीकन्दसे बहत्तर हजार नाड़ियोंकी उत्पत्ति हुई है। उपर्युक्त तीनों नाड़ियोंका उत्पत्ति स्थान भी वही नाडीकन्द है। गुदासे दो अंगुल ऊपर तथा मेढ्रसे दो अंगुल नीचे चार अंगुल विस्तार पक्षीके अण्डाकार यह नाडीकन्द स्थित है। नाडीकन्दके ऊपर शरीरके पीछले भागमें मेरुदण्ड स्थित है। इडा नाड़ी इसी नाडीकन्दसे निकलकर मेरुदण्डके वाम भागमें होकर आज्ञा चक्रसे होकर नासारन्ध्र पर्यन्त गयी है। इसी प्रकार पिङ्गला दक्षिण भागमें होकर आज्ञा चक्रसे होकर नासारन्ध्र पर्यन्त गयी है। सुषुम्णा कन्दमूलसे निकलकर मेरुदण्डके मध्यमें होकर सहस्रार पर्यन्त गयी है। इडा नाड़ीका अधिष्ठातृ देवता चन्द्र है, अतः इसे चन्द्रनाड़ी भी कहते हैं। यह अमृत विग्रहवाली तथा शुक्ल वर्णवाली है। इससे शीतलताकी अनुभूति होती है। पिङ्गलाका अधिष्ठातृ देवता सूर्य है, अतः इसे सूर्य-नाड़ी भी कहते हैं। यह सूर्यविग्रहा तथा दाडिमीकेसरके समान प्रभावाली है। इससे उष्णताकी अनुभूति होती है। सुषुम्णाको चन्द्रसूर्याग्निरूपा तथा तीन गुणोंवाली कहा गया है। इसका मुखभाग खिले हुए धतूरेके पुष्पके समान है।

इडा, पिङ्गला तथा सुषुम्णा—ये तीनों नाड़ियाँ त्रिवेणीके रूपसे ग्रन्थिभाव-को प्राप्तकर भ्रूमध्यमें अर्थात् आज्ञा चक्रमें मुक्त त्रिवेणी कहलाती हैं तथा ध्वजमूलमें अर्थात् मूलाधार चक्रमें युक्त त्रिवेणी कहलाती हैं।

सुषुम्णा नाड़ीके मध्यमें स्थित छिद्र भागमें वज्रा नाड़ी स्थित है। यह वज्रा नाड़ी मेढ्र प्रदेशसे निकलकर शिरमें स्थित सहस्रार पर्यन्त गयी है। इसी वज्रा नाड़ीके मध्यमें स्थित छिद्र भागमें चित्रिणी नाड़ी स्थित है। यह चित्रिणी नाड़ी सहस्रार पर्यन्त गयी है। इसी चित्रिणी नाड़ीसे समस्त कमल गूँथे हुए हैं, अर्थात् यही एक मात्र नाड़ी समस्त कमलोंका भेदन करती है। इसी नाड़ीके मध्यमें स्थित छिद्र भागको ब्रह्म नाड़ी कहते हैं। यह छिद्र मूलाधार स्थित स्वयम्भू लिङ्गके छिद्रसे आरम्भकर सहस्रारमें स्थित ब्रह्म पर्यन्त है; अतः यह छिद्र ब्रह्म नाड़ी कहलाता है। सुषुम्णा नाड़ीके मुखप्रदेश अर्थात् कन्द एवं सुषुम्णाके सन्धिस्थानको ब्रह्मद्वार कहते हैं। सहस्रारमें स्थित ब्रह्मसे अमृतका धार यहीं तक प्रवाहित होता रहता है।

**मूलाधार चक्र :—**

सुषुम्णा नाड़ीके मुखसे संलग्न ध्वजके नीचे तथा गुदाके ऊपर स्थित प्रदेशमें मूलाधार पद्म विद्यमान है। इसका मुख नीचेकी ओर है। इसके चार दल हैं। दलों-

**विद्युत् - पूर्णेन्दुबिम्ब - प्रकरकर-चय-स्निग्धसन्तान - हासी
काशीवासी विलासी विलसति सरिदावर्त्तरूपप्रकारः ॥ ९ ॥**

पर्यन्तं चम्पककुसुममध्यस्थितशलाकावदुन्नतः श्यामवर्णश्चेत्यर्थः। तदुक्तं **शाक्तानन्दतरङ्गिण्याम्**--

स्वयम्भुलिङ्गं तन्मध्ये सरन्ध्रं पश्चिमाननम्।
ध्यायेच्च परमेशानि शिवं श्यामलसुन्दरम् ॥ इति ॥

यत्तु--मलाधारे स्मरेद् दिव्यं त्रिकोणमतिसुन्दरम्।
तस्यास्त्रिरेखामानीय अधऊर्ध्वंव्यवस्थिताम् ॥
नीलतोयद-मध्यस्थां तडित्कोटि-समप्रभाम्।

इति **यामलवचने** कुण्डलिन्या नीलतोयदमध्यस्थविशेषणेन स्वयम्भुलिङ्गस्य नीलवर्णत्वमायातम्। तन् नीलश्यामयोरेकपर्यायत्वान्न विरुद्धम्। **विद्युत्-पूर्णेन्दुबिम्ब-प्रकरकर-चय-स्निग्धसन्तानहासीति**। विद्युत्-पूर्णचन्द्रबिम्बयोर्यः प्रकृष्टकर उत्तापरहितकिरणः तत्तुल्यकिरणसमूहेन मृदुप्रवाहविशिष्टप्रकाशोऽस्याऽस्तीत्यर्थः। **काशीवासी विलासीति**। अत्र काशीवासतुल्यवासविशिष्टः सन् विलासीत्यर्थः। तेन यथा काशीवासे सुखं भुनक्ति तद्वदत्रापीति भावः। अथवा विलास उल्लासः कामप्रफुल्लभाव इति यावत्, तद्विशिष्ट इत्यर्थः। "कामबीजेन चालित" इति वचनात्। अयं स्वयम्भुः काशीवासी। एतेनास्य विश्वेश्वरत्वं सूचितमिति। **सरिदावर्त्तरूपप्रकार** इति सरिदावर्त्ते यद्रूपं तत्प्रकारः। ततश्च यथा भ्राम्यमाणनदीजलं मध्यनिम्नं तन्मध्ये किञ्चिदुन्नतं शङ्खमध्योन्नतवदिति भावः। अयं स्वयम्भुः कामबीजोपरिस्थितः। तदाह **कालीकुलामृते**--

किञ्जल्कोपरि शृङ्गाटः सरन्ध्रः सुमनोहरः।
तत्र स्थितो महालिङ्गः स्वयम्भुः सर्वदा सुखी।
अधोमुखः क्रियवांश्च कामबीजेन चालितः ॥ इति ॥

**मुखः। ज्ञानध्यानाख्ययोगाभ्यां प्रकश उदयो यस्य। नवीनपल्लवाकारस्येव रूपं यस्य। विद्युत्पूर्णेन्दुबिम्बसमूहानां करवृन्दस्निग्धसमूस्येव हास्यं सविशेषो यस्य। तत्स्थानमपि**

तम्। पश्चिमास्यः अधोमुखः। ज्ञानध्यानाभ्यां प्रकाश्यते यः स तथा। प्रथमकिसलयाकाररूपो नूतनपल्लवाङ्कुराकारः। विद्युदिति। तथाच पूर्णचन्द्राादधिकरससमूह इत्यर्थः। स्निग्धसन्तानं स्निग्धसमूहं हसतीति स्निग्धसन्तानहासी। काशी-

स्वयम्भुलिङ्गस्थ-कुण्डलिनीशक्तिस्वरूपम्

**तस्योर्ध्वे बिसतन्तुसोदरलसत्सूक्ष्मा जगन्मोहिनी**
**ब्रह्मद्वारमुखं मुखेन मधुरं संछादयन्ती स्वयम् ।**

तथान्यत्र--पूर्वोक्ता डाकिनी तत्र कर्णिकायां त्रिकोणकम् ।
यन्मध्ये विवरं सूक्ष्मं रक्ताभं कामबीजकम् ।
तत्र स्वयम्भुलिङ्गञ्चाधोमुखालक्तकप्रभम् ।। इति ।।

**मतान्तरम्** ।। ६ ।।

**स्वयम्भुलिङ्गे** कुण्डलिनीशक्तिस्थितिमाह--**तस्योर्ध्वे** इति द्वाभ्याम् । अनयोरर्थः--**यया** **कुण्डलिन्या** **श्वासोच्छ्वासविभञ्जनेन** प्रवर्त्तनेन **जगतां** **जीवो** जीवात्मा **धार्यते** देहावच्छेदे स्थाप्यते सा देवी **मत्तालिमालास्फुटं** यथा स्यात् तथाकृतिरेवं वक्ष्यमाणक्रमैर्वाचमर्थाज् जनयन्ती सती **अम्बुजगह्वरे** मूलाधारकमलकर्णिकामध्यत्रिकोणगह्वरे **तस्य** स्वयम्भुलिङ्गस्योर्ध्वभागे **बिलसतीति** श्लोकद्वयस्य विशिष्टान्वितार्थः । **बिसतन्तुसोदरलसत्सूक्ष्मा** मृणालसूत्रतुल्यसूक्ष्मेत्यर्थः । **जगन्मोहिनी** जगतां मायारूपिणीत्यर्थः । **ब्रह्मद्वारमुखं** स्वयम्भुलिङ्गच्छिद्रं **मधुरं** मृदु यथा स्यात् तथा **स्वमुखेन** संछादयन्तीत्यर्थः । **नवीनचपलामालाविलास्पदेति** । सर्वेषां नवीनत्वे प्रकाशाधिक्यदर्शनादत्र नवीनोत्कीर्त्तनमधिकप्रकाशप्राप्त्यर्थम् । ततश्चाति-प्रकाशितविद्युन्मालानां विलासस्य स्थिरतरकौतूहलवासस्यास्पद इत्यर्थात्

**काशी । विलासी विलसितुं शीलमस्य । सरिदावर्त्तरूपः प्रकार आकृतिर्यस्य, अति-चञ्चलत्वात् । एवम्भूतः सन् विलसति ।। ६ ।।**

**तस्योर्ध्वे इति । तस्य शिवस्योर्ध्वेऽध इत्यर्थः । मृणालतन्तुसदृशी शरीरकला यस्याः, एवम्भूता सा कूजन्ती कुलकुण्डलिनीति वक्ष्यमाणश्लोकेनान्वयः । यतो बिसतन्तु-सदृशी, अतः सूक्ष्मा । जगतां मोहिनी महामायारूपेणेत्यर्थः । ब्रह्मद्वारमुखं मुखेन मुख-**

वासीत्यादिविशेषणम् । सरितामावर्त्तश्चक्रवज्ज्जलानां भ्रमणं तद्रूपप्रकाशो यस्य स तथा । "स्यादावर्त्तोऽम्भसां भ्रमः" इत्यमरः ।। ९ ।।

तल्लिङ्गं सार्द्धत्रिबलयेनावेष्टच कुण्डलिनी शक्तिरस्तीत्याह—तस्योर्ध्वे इत्यादिना । बिसतन्तुसोदरतुल्या सा चासौ कला प्रकृतिश्चेति सा तथा । अतः सूक्ष्मा । नवीनचपलामाला तस्या विलसनशोभया सह आस्पदमास्पर्द्धा यस्याः सा तथा । "तडित् सौदामिनी विद्युच्चञ्चला चपलापि च" इत्यमरः । सुप्ता निद्रिता शिवोपरि लसन्ती सार्द्धत्रिवृत्ता आकृतिः शरीरं यस्याः सा तथा । सा तु अधोवक्त्रा । यथा श्रीक्रमे—

**शङ्खावर्त्तनिभा नवीनचपलामालाविलासास्पदा**
**सुप्ता सर्पसमा शिवोपरि लसत्सार्द्धत्रिवृत्ताकृतिः ॥ १० ॥**

स्थिरतरातिप्रकाशितविद्युत्समूहप्रकाशतुल्य-प्रकाशवतीति पर्यवसितम् । वाक्यजननक्रममाह—**कोमलकाव्यबन्धरचनाभेदातिभेदक्रमैरिति । कोमलकाव्यं** मृदुशब्दघटित-रूपगुणरसादि-वर्णनात्मक-वाक्यम् । बन्धः पद्मबन्धाश्वबन्धादि-चित्रकाव्यम् । **रचना** तदतिरिक्तगद्यपद्यात्मक-वाक्यम् । **भेद**स्तेषां विशेषः । **अतिभेद**स्तदितरसंस्कृतवाक्यसमुदायः । तयोर्यः **क्रमः** शास्त्रव्यवहारानुरूपरीतिः । तादृशीभी रीतिभिर्वाचं जनयन्तीति परिष्कृतार्थः, कुण्डलिन्याः संस्कृतप्राकृतविशेषाविशेषयावद्वाक्यजनयित्रीत्वात् । तदाह **शारदायाम्**—

भिद्यमानात् पराद् बिन्दोरव्यक्तात्मा रवोऽभवत् ।
तत् प्राप्य कुण्डलीरूपं प्राणिनां देहमध्यगम् ।
वर्णात्मनाविर्भवति गद्यपद्यादिभेदातः ॥ इति ॥

**"गद्यपद्यादी"**त्यादिपदाद् यावद् वाक्य गृह्यते । व्यक्तमाह **कादिमते**—

स्वात्मेच्छाशक्तिघातेन प्राणवायुस्वरूपतः ।
मूलाधारे समुत्पन्नः पराख्यो नाद उत्तमः ॥

कमलेन स्वयमेव सञ्छादयन्ती, सम्यक् प्रकारेणाच्छादयन्तीत्यर्थः । एतेन अमृतवर्त्मसञ्छादनं कृत्वा अमृतं पिबतीत्यर्थः । अस्तदमृतसंयोगेन तन्मुखं मधुरं । शङ्खस्य वेष्टनाकारतुल्या । नवीनविद्युच्छ्रेणीप्रकाश एव स्थानं यस्यास्तत्सदृशीति यावत् । सुप्ता अतः सर्पतुल्या । सर्पो हि सुप्तः कुण्डलाकारो भवति । शिवस्योपरि लसन्ती प्रकाशमाना सार्द्धत्रिवृत्ता आकृतिः शरीरं यस्याः ॥ १० ॥

अधोवक्त्रा स्थिता देवी ऊर्ध्वपुच्छातिशोभना ।
अत्र विद्युल्लताकारा कुण्डली परदेवता ॥
परिस्फुरति सर्वात्मा सुप्ता हि भुजगाकृतिः ।
ब्रह्मद्वारमुखं नित्यं मुखेनावृत्य तिष्ठति ॥
येन द्वारेण गन्तव्यं ब्रह्मद्वारं मनोमयम् ।
मुखेनाच्छाद्य तद्द्वारं प्रसुप्ता परमेश्वरी ॥
मस्तके मणिवद् भिन्ना स्वयम्भूलिङ्गवेष्टिनी ॥ इति ॥

योगान्तरेऽपि—मुखेनाच्छाद्य तद्द्वारं कुण्डलीशक्तिरुज्ज्वला ।
निद्रावशगता देवी प्रसुप्तभुजगोपमा ॥ इति ॥

तथा मायातन्त्रेऽपि—सार्द्धत्रिवलयानन्दा नन्दिता भास्करप्रभा ॥ इति ॥ १० ॥

**कूजन्ती कुलकुण्डली च मधुरं मत्तालिमालास्फुटं**
**वाचं कोमलकाव्य-बन्ध-रचना-भेदातिभेद-क्रमैः ।**

स एव चोर्ध्वतां नीतः स्वाधिष्ठानविजृम्भितः ।
पश्यन्त्याख्यामवाप्नोति तथैवोर्ध्वं शनैः शनैः ।।
अनाहते बुद्धितत्त्वसमेतो मध्यमाभिधः ।
तथा तयोरूर्ध्वगतो विशुद्धौ कण्ठदेशतः ।।
वैखर्याख्यस्ततः कण्ठशीर्षताल्वोष्ठदन्तगः ।
जिह्वामूलाग्रपृष्ठस्थस्तथा नासाग्रतः क्रमात् ।।
कण्ठताल्वोष्ठकण्ठस्थः कण्ठौष्ठद्वयतस्तथा ।
समुत्पन्नान्यक्षराणि क्रमादादिक्षकावधि ।। इति ।।

अलं विस्तरेण । कुण्डलिनीध्यानान्तरमाहाऽन्यत्र--

ध्यायेत् कुण्डलिनीं देवीं स्वयम्भुलिङ्गवेष्टिनीम् ।
श्यामां सूक्ष्मां सृष्टिरूपां सृष्टिस्थितिलयात्मिकाम् ।
विश्वातीतां ज्ञानरूपां चिन्ययेदूर्ध्ववाहिनीम् ।।

**कूजन्तीति । सा कुण्डलिनी मधुरं यथा स्यात् तथा शब्दं कुर्वन्तीत्यर्थः । एतेन लब्धध्वन्यात्मकः शब्दो भवति । तत्र स एव शब्दः कण्ठताल्वाद्यभिवातेन वर्णात्मकत्वेन परिगण्यत इत्याह । कोमलकाव्यबन्धग्रथनाया यो भेदो नानाप्रबन्धो गौडी वैदर्भी**

**कूजन्तीति** । उत्थिता सतीति शेषः । तथा **च तन्त्रा तरे--**

झिल्लीवाऽव्यक्तमधुरा कुजन्ती सततोत्थिता ।। इति ।।

**कोमलकाव्यै**[वाक्यै]र्वाचं कूजन्तीत्यर्थः ।

तत् प्राप्य कुण्डलीरूपं प्राणिनां देहमध्यगम् ।
वर्णात्मनाविर्भवति गद्यपद्यादिभेदतः ।।

इति **शारदोक्तेः** । तत् चैतन्यम् । श्वासोच्छ्वासविभञ्जनेन वायुना तथा जगतां जीवः जीवात्मा हंसः धार्यते [ तदुक्तं –]

विभर्त्ति कुण्डलीशक्तिरात्मानं हंसमाश्रिता ।
हंसः प्राणाश्रयो नित्यं प्राणो नाडीसमा [पथा]श्रयः ।।
आधारातुद्गतो वायुर्यथावत् सर्वदेहिनाम् ।
देहं प्राप्य स्वनाडीभिः प्रयाणं कुरुते बहिः ।
द्वादशाङ्गुलमानेन तस्मात् प्राण इतीरितः ।। इति ।।

**भट्टाः**— कुण्डली शक्तिरात्मानं परमात्मानं विभर्त्ति तद्योगभागिनी भवतीत्यर्थः । **कीदृशी ?** हंसं जीवात्मानमाश्रिता जीवाधिष्ठाना सतीत्यर्थः । हंसः प्राणाश्रयः,

**श्वासोच्छ्वासविभञ्जनेन जगतां जीवो यया धार्यते**
**सा मूलाम्बुजगह्वरे विलसति प्रोद्दामदीप्तावलिः ॥ ११ ॥**

तथा—ध्यायेत् कुण्डलिनीं देवीमिष्टदेवस्वरूपिणीम् ।
सदा षोडशवर्षीयां पीनोन्नतपयोधराम् ॥
नवयौवनसम्पन्नां सर्वाभरणभूषिताम् ।
पूर्णचन्द्रप्रभां रक्तां सदा चञ्चललोचनाम् ॥ इति ॥

"रक्तामि"ति सुन्दरीविषये ज्ञेयमिति **शाक्तानन्दतरङ्गिणीकारः** । वस्तुतस्तु सर्वदेवताविषये एव कुण्डलिनी रक्तवर्णत्वेन ध्येया न तु श्यामवर्णत्वेन, प्रायः सर्वतन्त्रे सर्वसंग्रहे च कुण्डलिन्यास्तडिदाकारत्वकथनात् । "श्यामामि"त्यनेन—

शीतकाले भवेदुष्णा चोष्णकाले च शीतला ।
प्रतप्तकाञ्चनाभा सा श्यामा स्त्री परिकीर्त्तिता ॥

इत्येतद्ववचनाक्रान्तत्वं ज्ञापितम् । न तु श्यामवर्णत्वमतः सर्वशास्त्र-सामञ्जस्यमिति । चक्रभेदनात् पूर्वं ब्रह्मद्वारमध्ये कुण्डलीध्यानमाह **कङ्कालमालिन्याम्**—

कोटिचन्द्रप्रतीकाशां परंब्रह्मस्वरूपिणीम् ।
चतुर्भुजां त्रिनेत्राञ्च वराभयकरां तथा ॥
तथा पुस्तकवीणाञ्च धारिणीं सिंहवाहिनीम् ।
गच्छन्तीं स्वासनं भीमां नानारूपधरात्मिकाम् ॥इति १०-११॥

**पाञ्चाली कवितारं तिक्रमस्तस्य भेदस्य श्रृङ्गारादिनवरसबन्धेन योऽतिभेदस्तत्क्रमैः । मत्तभृङ्गमालेव स्फुटं यथा स्यात्तथा वाचश्च कूजन्ती तस्या एव वैखरीत्वमायातमिति । यया देव्या च श्वासोच्छ्वासविभञ्जनेन जगतां जीवो धार्यते सा मूलाधारपद्मकुहरे प्रकाशते । प्रोद्दामदीप्ता बलिर्यस्याः, दीप्तमिति भावे क्तः ॥ ११ ॥**

प्राणवायुसमाश्रयः इत्यर्थः । प्राणी नाडीसमाश्रयः । कथं तस्य नाडीसमाश्रयत्वम् ? इत्यत आह—आधारादिति । प्रयाणं कुरुते इति प्राण इति प्राणपदव्युत्पत्तिरपि दर्शितेत्यन्तेनाहुः ।

**दक्षिणामूर्त्तौ तु**—उच्छ्वासे चैव निश्वासे हस इत्यक्षरद्वयम् ।
तस्मात् प्राणस्तु हंसाख्य आत्माकारेण संस्थितः ॥
षटशतान्यधिकान्यत्र सहस्राण्येकविंशतिः ।
अहोरात्रं चरेद् वायुः स जपो मोक्षदायकः ॥ इति ॥

अन्यत्रापि— सः कारेण बहिर्याति हंकारेण विशेत् पुनः ॥ इति ॥
प्रोद्दामदीप्तश्रेणी (?) ॥ ११ ॥

कुण्डलिनीमध्यस्थ-परशक्तिस्वरूपम्

**तन्मध्ये परमा कलाऽतिकुशला सूक्ष्मातिसूक्ष्मा परा**
**नित्यानन्द - परम्परातिविगलत् - पीयूषधारा - धरा।**
**ब्रह्माण्डादिकटाहमेव सकलं यद्भासया भासते**
**सेयं श्रीपरमेश्वरी विजयते नित्यप्रबोधोदया॥ १२॥**

स्वयम्भुलिङ्गवेष्टितकुण्डलिन्यूर्ध्वे समसूत्रपातन्यायेन दण्डकारेण लिङ्गाग्रपर्यन्तस्थितां परशक्तिमाह––**तन्मध्य** इति। अस्यार्थः––**यद्भासया** यस्याः शक्तचा दीप्त्या **ब्रह्माण्डादि तत्कटाहश्च भासते** प्रकाशते, **सेयं श्रीपरमेश्वरी तन्मध्ये** स्वयम्भुलिङ्गे कुण्डलिनीवेष्टनोर्ध्वे **विजयते,** सर्वान् वशवर्त्तिनः कृत्वा तिष्ठतीत्यर्थः। सा किम्भूता? **परमाऽ**घटनघटनपटीयसी माया। **कला** नादशक्तिरूपा कुण्डलिन्यभेदशरीरिणी। तदुक्तं **शाक्तानन्द-तरङ्गिण्याम्**––कला कुण्डलिनी सैव नादशक्तिः शिवोदिता। इति।
तथान्यत्र––तस्योपरि मनो ध्यायेच्चित्कलामी-समाश्रिताम्।
प्रदीपकलिकाकारां कुण्डल्यभेदरूपिणीम्॥ इति॥
तथा **कालिकाश्रुतौ**
तस्याः शिखाया मध्ये तु अध ऊर्ध्वव्यवस्थिताम्।
स ब्रह्मा स शिवः शूरः स एव परमेश्वरः॥
स एव विष्णुः स प्राणाः स कालाग्निः स चन्द्रमाः।
इति कुण्डलिनीं ध्यात्वा सर्वपापैः प्रमुच्यते॥ इति॥
तस्याः शिखाया मध्ये त्रिबलयस्योर्ध्वे व्यवस्थितां परमां कलां नादरूपा-मित्यर्थ इति **ललितारहस्यकारः**। **अतिकुशला** सृष्टिसम्पादनयोग्यतारूप-

**तन्मध्य इति। तस्याः कुण्डलिन्या मध्ये परमा कला आस्ते। परं परमात्मानं मीयतेऽनयेति परमा। अत्यर्थं कुशलं यतः साऽतिकुशला। सूक्ष्मा, यतस्तस्या मध्ये परा पश्यन्ती मध्यमा वैखरी। समाधिरूपा नित्यमानन्दपरम्परा यस्याः सा तथा। अत्यर्थ-विद्युन्मालेव लसन्ती प्रकाशमाना दीधितिस्तेजो यस्याः। ब्रह्माण्डस्य आदिकटाहपर्यन्तं**

तस्याः कुण्डलिन्या मध्ये परमा नाम्नी शक्तिरुच्यते –तन्मध्ये इत्यादिना। परमा उत्कृष्टा। परा परानाम्नी अतिसूक्ष्मा। तथाच **भट्टधृततन्त्रे** –
सूक्ष्मा कुण्डलिनी मध्ये ज्योतिर्मात्रा परा मता॥ इति॥
सा एव परमात्मस्वरूपा। तथा च श्रुतिः––
तस्याः शिखाया मध्ये तु परमा सा व्यवस्थिता॥ इति॥

मूलाधारे कुण्डलिनोशक्तिचिन्तनफलम्

**ध्यात्वैतन्मूलचक्रान्तर - विवर-लसत्-कोटिसूर्य - प्रकाशां**
**वाचामीशो नरेन्द्रः स भवति सहसा सर्वविद्याविनोदी ।**

कौशलवतीत्यर्थः । **नित्यानन्दपरम्परेति ।** नित्यानन्दात् परम्परा परपरक्रम-सम्बन्धो यस्या इत्यर्थः । ततश्च नित्यानन्दो निर्गुणं ब्रह्म, तस्मात् सगुणा-विर्भावः, सगुणाच्छक्तिः, शक्तेर्नादो, नादाद् बिन्दुर्बिन्दोः कुण्डलिनी कुण्ड-लिन्यवान्तररूपेयं चित्कलेत्येवंप्रकारेण नित्यानन्दपरम्परेति भावः । यद्वा नित्यानन्दपरम्परातिविगलत्पीयूषधाराधरेत्येकविशेषणम् । निन्यानन्दात् परम्परया नित्यानन्दात् परं बिन्दुः, तत्परमाज्ञाचक्रं, तत्परं विशुद्धचक्रमेवं क्रमेण मूलाधारपर्यन्तमतिविगलन्ती या पीयूषधारा सा ध्रियते गृह्यते यया सेत्यर्थः । स्पष्टमन्यत ॥ १२ ॥

मूलाधारे कुण्डलिनीचिन्तनफलमाह—**ध्यात्वैतदिति । मूलचक्रति ।** "मूलामाधारषट्कानां मूलाधारं ततो विदुरि"ति वचनान् मूलाधारचक्रं, तस्यान्तरे मध्ये यद **विवरं गह्वरं**, तस्मिन् लसत्कोटिसूर्यप्रकाशामित्यर्थः । **सकलसुरगुरूनिति** । "सिंहशार्दूलनागाद्याः पंसि श्रेष्ठार्थवाचका" इत्यम-रोक्त्या सुरगुरुवर्त्तिना गुरुशब्देन सुरश्रेष्ठा ब्रह्मविष्णुशिवादयः प्रतीयन्ते । ततश्च तदादिदेवान् **सेवते** स्तवादिवाक्यैस्तोषयतीत्यर्थः । स्पष्टमन्यत् ।

**तदयं महावक्यार्थनिर्णयः** । मूलाधारचक्रं चतुर्दलं रक्तवर्णम् । व-श-ष-सेति स्वर्णाभचतुर्वर्णयुक्तदलकर्णिकायां धरामण्डलं चतुष्कोणामष्ट-

**यस्याः कलाया भासया सकलं भासते । यद्वा शरीरस्यापि ब्रह्माण्डसंज्ञा, "ब्रह्माण्डे ये गुणाः सन्ति ते हि सन्ति कलेवरे" इति प्रामाणिकोक्तवात् । सेयं श्रीपरमेश्वरी विजयते जयतीत्यर्थः । नित्यज्ञानस्योदयो यतः ।। १२ ॥**

**ध्यात्वैतदिति । एतन् मूलाधारस्थं सर्वं ध्यात्वा नर एवमेवं भवति । तत्क्रमेणाह — वाचामीशो नराणामिन्द्रतुल्यः सहसा सर्वविद्याविनोदी च भवति । तस्य नित्यमेवा-रोग्यम् । निरवधि अहर्निशमेव । महानन्द ईश्वरस्तच्चिन्ताविशिष्टोऽन्तरात्मा यस्य,**

नित्या ध्वंसप्रागभावरहिता । आनन्दपरम्परा आनन्दसमूहयुक्ता । अतिचपलाय-माना विद्युल्लता इव लसन्ती दीधितिर्दीप्तिर्यस्याः सा तथा । यस्याः कलायाः प्रभया ब्रह्माण्डादिकटाहान्तं जगत् शरीरं भासते सा विजयते । नित्यज्ञानस्य उदयो यस्यां सा ।।१२।।

आरोग्यं तस्य नित्यं निरवधि च महानन्दचित्तान्तरात्मा
वाक्यैः काव्यप्रबन्धैः सकलसुरगुरून् सेवते शुद्धशीलः ॥ १३ ॥

स्वाधिष्ठानचक्रस्वरूपम्

सिन्दूर - पूर - रुचिरारुण - पद्ममन्यत्
सौषुम्णमध्यघटितं ध्वजमूलदेशे ।

शूलावृतं पीतवर्णम् । तन्मध्याधो धराबीजं चतुर्भुजमैरावतारूढं पीतवर्णं वज्रहस्तम् । धराबीजबिन्दुमध्ये शिशुरूपो ब्रह्मा रक्तवर्णश्चतुर्भुजो दण्ड-कमण्डल्वक्षसूत्राभयहस्तश्चतुर्मुखः । तत्कर्णिकायां रक्तपद्मोपरि चक्रा-धिष्ठात्री डाकिनीशक्ती रक्तवर्णा चतुर्भुजा शूल-खट्वाङ्ग-खड्ग-चषक-हस्ता । कर्णिकामध्ये विद्युदाकारत्रिकोणम् । तन्मध्ये कामवायुः काम-बीजञ्च रक्तवर्णम् । तदुपरि स्वम्भुलिङ्गः श्यामवर्णः । तस्योर्ध्वे कुण्डलिनी-शक्तिः सार्द्धत्रिबलयाकारा । तदूर्ध्वे लिङ्गाग्रे चित्कला दण्डकारेण स्थितेति प्रथमप्रकरणम् ॥ १३ ॥

मूलाधारचक्रं निरूप्य स्वाधिष्ठानचक्रं निरूपयति—**सिन्दूरपूरेत्यादि-**पञ्चभिः । प्रथमस्यायमर्थः—**ध्वजमूलदेशे** लिङ्गमूलस्थाने अन्यदाधार-चक्रभिन्नं **सिन्दूरपूररुचिरारुणपद्मं** सिन्दूरस्य पूरणेन यथा मनोहररक्तवर्णं तद्वद् रक्तवर्णपद्मम् । आस्ते इति क्रियासमाहारेणाऽन्वयः । पद्मं विशेषयति—

**एवं भवतीत्यर्थः । एतत् कीदृशं ? मूलाधारमध्यप्रकाशम् । कोटिसूर्याणां प्रकाशो यस्य तत्तथा । स जनः काव्यप्रबन्धैर्वाक्यैः सकलसुरगुरुं शुद्धशीलः सन् सेवते, वाक्पति-सदृशो भवतीत्यर्थः ॥ १३ ॥**

**सिन्दूरेति । अन्यत् स्वाधिष्ठानाख्यं लिङ्गमूलसमदेशे आस्ते । सुषुम्णामध्य-घटकीभूतम् । सुषुम्णाशब्दात् स्वार्थे अणिति केचित् । तद् दूष्यम् । वस्तुतस्तु सुषुम्णाया इदं ब्रह्मनाड्यादि तन्मध्यभूतं पद्मं, तस्येदमित्यर्थे अण् । कीदृशम् ? सिन्दूररुचिर-**

काव्यबन्धैर्वाक्यैर्बृहस्पतीन् सेवते । गौरवे बहुवचनम् ॥१३॥

स्वाधिष्ठानाख्यपद्मामाह—सिन्दूरेत्यादिना । अङ्गच्छदैः षट्पत्रैः विद्युत्-प्रकारैर्वाद्यैः पुरन्दरान्तैर्वादिलान्तैः सबिन्दुकं परिवृतं पद्मम् । तथा च **मायातन्त्रे** —

तदूर्ध्वे तु महेशानि स्वाधिष्ठानमृतुच्छदम् ।
रक्तवर्णं कर्णिकायामब्जमर्द्धेन्दसंयुतम् ।
मण्डलं वारुणं देवि तदूर्ध्वे मणिपूरकम् ॥ इति ॥

**अङ्गच्छदैः परिवृतं तडिदाभवर्णै**
**र्वाद्यैः सबिन्दुलसितैश्च पुरन्दरान्तैः ॥ १४ ॥**

अम्भोजमण्डलस्थितिवर्णनम्

**तस्यान्तरे प्रविलसद् विशद-प्रकाश-**
**मम्भोजमण्डलमथो वरुणस्य तस्य ।**

सौषुम्णमध्यघटितमिति । सुषुम्णानाडीमध्ये निर्मितम् । तथा अङ्गच्छदैः परिवृतं षट्पत्रयुक्तम् । पुरन्दरान्तैरिति । **पुरन्दरो** लकारस्तदन्तैर्वाद्यैस्तेन व-भ-म-य-र-लेति षड्भिस्तडिदाभवर्णैर्दलवत् परिवृतस्तेन दलावच्छेदे वर्णयोगः प्रतीतः । वर्णान् विशेषयति—**सबिन्दुलसितैरिति** । बिन्दुना सह वर्त्तमानाः सबिन्दवः, लसिताः प्रकाशिताः । सबिन्दवश्च ते लसिताश्चेति तैरित्यर्थः । ततश्चात्र विशेष्य-विशेषण भावकल्पने विशेषणीभूतबिन्दौ लसितत्वकारणत्वं प्रतीयते । "सुरापः पतती"त्यत्र कर्त्तृविशेषण-सुरापाने पतनकर्त्तृत्ववदिति । यद्वा बिन्दूनां लसितं बिन्दुलसितं बिन्दुप्रकाशस्तेन सह वर्त्तमानैर्वाद्यैरित्यर्थः ॥ १४ ॥

एतत्पद्मकर्णिकायामम्भोजमण्डलस्थितिमाह—**तस्यान्तर** इति । तस्य पद्मस्याऽन्तरे मध्येऽम्भोजमण्डलम् अम्भोजाकारमण्डलं **प्रविलसत्** प्रकाशमानम् । तत् किम्भूतम् ? **विशदप्रकाशं** शुक्लवर्णम् । पुनः किम्भूतम् ? अर्द्धेन्दुरूपलसितमर्द्धचन्द्रयुक्तमित्यर्थः । इदं जलमण्डलम् । तदाह **शारदायाम्**—

**तयाऽरुणवर्णम् । पुनः कीदृशम् ? अङ्गच्छदैः षड्दलैरावृतम् । कीदृशैः ? तडिदिवाभा वर्णो येषां तथोक्तैः । पुरन्दरो लकारस्तदन्तैर्बिन्दुना परिलसितैरेवम्भूतैर्दलैरित्यर्थः । एतेन वर्णानां सर्वपद्मेषु दलमध्यवर्त्तित्वमायातम् ॥ १४ ॥**

**तस्यान्तर इति । तस्य पद्मस्य मध्ये अम्भसि जातं वरुणस्य मण्डलमास्ते । अथो शब्दः सम्भावनायाम् । कीदृशम् ? प्रकर्षेण विलसन् निर्मलप्रकाशो यस्य तत् तथा । तस्यैव वरुणस्य । अर्द्धेन्दुरूपेण लसितं मनोज्ञम् । अत एव वङ्कारबीजम् अमलं निर्मलशरच्चन्द्र इव शुभ्रम् । मकराधिरूढं मकरो जन्तुविशेष ओङ्कार इति ख्यातस्त-**

**दक्षिणामूर्त्तौ**—स्वाधिष्ठाने विद्रुमाभे बादिलान्तानि संस्मरेत् ।
विद्युत्पुञ्जसमाभानि विद्युद्भासितमस्तके ॥

इत्यादि ॥ १४ ॥

विशदप्रकाशं शुक्लवर्णम् । **शारदायाम्**—"तत्तद्भूतसमाभानी"ति प्रागुक्तम् ।

**अर्द्धेन्दुरूपलसितं शरदिन्दुशुभ्रं**
**वङ्कारबीजममलं मकराधिरूढम् ॥ १५ ॥**

वरुणबीजबिन्दुमध्यस्थ-विष्णुस्वरूपम्

**तस्याङ्कदेश-कलितो हरिरेव पायात्**
**नील - प्रकाश-रुचिर - श्रियमादधानः ।**

अम्भोजमम्भसो भूमेश्चतुरस्रं सवज्रकम् । इत्यादि ।
एतन्मण्डललक्षणमाह **राघवभट्टः**—"अर्द्धचन्द्रं कृत्वा तदुभयभागे सरोजद्वयं कुर्यादि"ति । **तदुक्तमाचार्यैः**—"अब्जोपेतार्द्धेन्दुमद्बिम्बमाप्यमि"ति । मण्डलमध्ये वरुणबीजस्थितिमाह—अथो इति । **तस्येति** । जलाधिष्ठातृत्वेन प्रसिद्धस्येत्यर्थः । **मकराधिरूढमिति** । पाशहस्तञ्च । तदाह—

तदन्वारुणं बीजं श्वेतं मकरवाहनम् ।
पाशहस्तं तदङ्के च हरिं श्यामं चतुर्भुजम् ॥ इति ॥

अयं वरुणबीजस्वरूपो वकारो यवर्गीयः, कुलाकुलचक्रे भूतलिपिमन्त्रे च तद्वकारस्यैव जलबीजत्वेनाऽभिधानात् । स्पष्टमन्यत् ॥ १५ ॥

वरुणबीजस्याङ्के विष्णुस्थितिमाह—तस्याङ्क इति । अङ्के बीजमस्तकस्थबिन्दुमध्ये । धराबीजबिन्दौ ब्रह्मणः स्थितिदर्शनादत्रापि तथा, दृष्टिपरिकल्पनान्यायात् । एवं वक्ष्यमाणं सर्वत्र बोध्यम् । **कलितः** स्थित इत्यर्थः । **नीलप्रकाशरुचिरश्रियमादधान** इति । नीलज्योतिषां या मनोज्ञा शोभा तां दधान इत्यर्थः । नेन नीलतेजःपुञ्जशरीरीति यावत् । **श्रीवत्स-कौस्तुभ-धर** इति । तद्ध्यानमाह **गौतमीये**—

कौस्तुभं हृदये रत्नं सूर्यायुतसमप्रभम् ।
तदधो वनमालाञ्च चन्द्रायुतसमप्रभाम् ॥
कौस्तुभोर्ध्वे च श्रीवत्सं चन्द्रायुतसमप्रभम् ॥ इति ॥

दधिरूढम्, कर्त्तरि क्तः । अत एवाऽम्भोजमण्डलदर्शनात् "कमपि मणिपूरे"इति शङ्कराचार्यश्लोकस्य "महीं मूलाधारे" इत्यत्र चानुपपत्तिः, तत् तद्व्यवसायिभिः प्रतिध्यातव्यम् । वयन्तु तत्र व्यस्तसमस्ततया व्याख्यां ब्रूमः ॥ १५ ॥

तस्याङ्क इति । तस्य बीजस्य क्रोडदेशलसितो हरिर्विष्णुस्त्रिभुवनं पायात् । कीदृशः ? नीलप्रकाशां मनोज्ञां कान्तिमाधत्ते । पीतवस्त्रः । प्रथमयौवनगर्वोद्रेकं

अम्भोजं षड्दलपद्मम् अर्द्धचन्द्रयुतम् । वं बीजं मकराधिरूढम्, "स्वाधिष्ठानं विष्णुगेहं प्रदिष्टं बालार्काभं राकिणी देवतात्र" ॥ इति वचनात् ॥ १५ ॥

तस्याङ्के इत्यादि । नीलद्युतिरूपां मनोज्ञश्रियं शोभाम् आदधानः । **गौतमीये**—

**पीताम्बरः प्रथम-यौवन-गर्वधारी**
**श्रीवत्स-कौस्तुभ-धरो धृतवेदबाहुः ॥ १६ ॥**

स्वाधिष्ठानचक्रस्थ-राकिणीशक्तिस्वरूपम्

**अत्रैव भाति सततं खलु राकिणी सा**
**नीलाम्बुजोदर - सहोदर - कान्तिशोभा ।**
**नानायुधोद्यत - करैर्लसिताङ्ग - लक्ष्मी-**
**र्दिव्याम्बराभरणभूषितमत्तचित्ता ॥ १७ ॥**

हरिस्तेऽत्र **तन्त्रान्तरे**--

पाशहस्तं तदङ्के च हरिं श्यामं चतुर्भुजम् ।
शङ्ख-चक्र-गदा-पद्म-धारिणं पीतवाससम् ।। इति ।।

"पाशहस्तं" वरुणमिति पूर्वेणाऽन्वयः । अन्यत्र—"पीताम्बरं शान्तमूर्त्तिं वनमालाविभूषितम्" । इति । मूलाधारे हंसपृष्ठे ब्रह्मणः स्थितिदर्शनादत्र गरुडोपरि विष्णुश्चिन्तनीयः ।। १६ ।।

एतत्पद्मे राकिणीशक्तिस्थितिमाह—अत्रैवेति स्पष्टम् । राकिणीध्यान-विशेषमाह—

श्यामां शूलाब्जहस्तां डमरुकरयुतां तीक्ष्णटङ्कं वहन्ती-
मुग्रां रक्तत्रिणेत्रां कुटिलसविलसद्दन्तदंष्ट्राप्रभाभिः ।
दीप्तां तां देवदेवीं द्वितयकमलगां रक्तधारैकनासां
शुक्लान्ने सक्तचित्तामभिमतफलदां राकिणीं चिन्तयेत् ताम् ।।

अत्र पद्मान्तरे राकिण्यः स्थितिदर्शनात् सर्वत्र रक्तपद्मान्तरोपरि षट्-शक्तीनां स्थितिरिति बोध्यम् ।। १७ ।।

**धर्तुं शीलमस्य तथोक्तः । श्रीवत्सचिह्नं कौस्तुभञ्च दधातीत्यर्थः । धृताश्चत्वारो बाहवो येन स तथा ।। १६ ।।**

**अत्रैवेति । अत्रैव पद्मे खलु निश्चितं सर्वदेवस्य प्रसिद्धा राकिणी आस्ते । नील-पद्मस्योदरतुल्या शोभा यस्याः । नानास्त्रेणोद्यतकरैः प्रकाशमानाऽङ्गशोभा यस्याः सा तथा । दिव्याम्बरालङ्काराभ्यां च मत्तं चित्तं यस्याः सा चेति तथा ।। १७ ।।**

स्वशब्देन परं लिङ्गं स्वाधिष्ठानं ततो विदुः ।। इति ।। १६ ।।

नीलाम्बुजोदरसदृशी कमनीयता शोभा यस्याः सा । नानायुधेति । तदुक्तं **तन्त्रान्तरे** —

श्यामां शूलाब्जहस्तां डमरुकसहितां तीक्ष्णटङ्कं वहन्तीं
देवीं रक्तत्रिनेत्रां द्वितयदललसद्दंष्ट्रदन्तप्रभाभिः ।। इति ।। १७ ।।

स्वाधिष्ठानचक्रचिन्तनफलम्

**स्वाधिष्ठानाख्यमेतत् सरसिजममलं चिन्तयेद् यो मनुष्य-**
**स्तस्याऽहङ्कार-दोषादिक-सकलरिपुः क्षीयते तत्क्षणेन ।**
**योगीशः सोऽपि मोहाद्भुत-तिमिरचये भानुतुल्यप्रकाशो**
**गद्यैः पद्यैः प्रबन्धैर्विरचयति सुधावाक्यसन्दोहलक्ष्मीः ॥ १८ ॥**

स्वाधिष्ठानपद्मादिचिन्तनफलमाह—**स्वाधिष्ठानाख्य**मिति । तदुक्तं—

स्वशब्देन परं लिङ्गं स्वाधिष्ठानं ततो विदुः ॥ इति ॥

अहङ्कारदोषादीत्यादिना कामक्रोधादयो गृह्यन्ते । तेन कामादिषड्-रिपवः क्षीयन्ते इत्यर्थः । **मोहाद्भुत-तिमिरचय** इति । दुर्निवार्य-महान्धकार-समूहे इत्यर्थः । ततश्च मायामोहरूपान्धकारनाशाय ज्ञानरूप-सूर्यमाप्नोतीति भावः । स्पष्टमन्यत् ।

**तदयं महावाक्यार्थनिर्णयः ।** स्वाधिष्ठानचक्रं सिन्दूरवर्णषड्दलम् । तद्दलं च तडिदाभ-सबिन्दु-व-भ-म-य-र-लेति-षड्वर्णयुक्तम् । तत्कर्णिकायां मध्यस्थलेऽर्द्धचन्द्रयुक्ताष्टदलपद्माकारमम्भोजमण्डलं शुक्लवर्णम् । तन्मध्ये वँ इति वरुणबीजं मकराधिरूढं पाशहस्तम् । तत्क्रोडे विष्णुर्गरुडोपरिस्थित-श्चतुर्भुजः शङ्ख-चक्र-गदा-पद्म-धारी पीताम्बरो वनमाला-श्रीवत्स-कौतुम्भ-धारी युवरूपः । पद्मकर्णिकायां रक्तपद्मोपरि राकिणि शक्तिः श्यामवर्णा चतुर्भुजा शूलाब्ज-डमरु-टङ्क-धरा त्रिनेत्रा कुलिदंष्ट्रा भयङ्करी शुक्लान्न-रक्तधाराभिलाषिणीति द्वितीयप्रकरणम् ॥ १८ ॥

**स्वाधिष्ठानेति । एतत् स्वाधिष्ठानाख्यं सरसिजं यो मुनीन्द्रश्चिन्तयेत् तस्याऽहङ्कारादिदोषरूपसकलरिपवो ज्ञानप्रतिबन्धकत्वात् शुद्धज्ञानपरिपन्थिनस्तत्क्षणैनैव क्षीणा भवन्तीति । पद्मं कीदृशम् ? अमलं निर्मलम् । स योगीशश्च भवति । मोहाद्भुतान्धकारचये भानुतुल्यप्रकाशश्च भवति । स च गद्यैः संस्कृतया वाचा पद्यैः श्लोकप्रबन्धैर्नानाबन्धादिभिरमृतायमानकाव्यसमूहं श्रिये विरचयति ॥ १८ ॥**

स मोहादभुतान्धकारसमूहे भानुतुल्यस्तन्नाशको भवतीति । सुधेति अमृततुल्यकाव्यसमूहसम्पत्तिं भजन्ते । अत्र पश्यन्ती शक्तिरस्ति । प्रमाणं विशुद्धपद्मव्याख्याने लिखिष्यते ॥ १८ ॥

मणिपूरचक्रस्वरूपम्

**तस्योर्ध्वे नाभिमूले दशदल-लसिते पूर्णमेघ-प्रकाशे**
**नीलाम्भोजप्रकाशैरुपहितजठरे डादिफान्तैः सचन्द्रैः ।**
**ध्यायेद् वैश्वानरस्याऽरुणमिहिरसमं मण्डलं तत् त्रिकोणं**
**तद्बाह्ये स्वस्तिकाख्यैस्त्रिभिरभिलसितं तत्र वह्नेः स्वबीजम् ॥ १९ ॥**

मणिपूरचक्रं निरूपयति—**तस्योर्ध्व** इत्यादि-त्रिभिः । तस्य स्वाधिष्ठानस्येत्यर्थः । **दशदललसित** इति दशदलैर्लसिते प्रकाशिते । पद्मे इति शेषः । पद्मे किम्भूते ? **पूर्णमेघप्रकाशे** कृष्णवर्णे । तथा **डादिफान्तैः** ड-ढ-ण-त-थ-द-ध-न-प-फेति-दशवर्णैरुपहितं युक्तं जठरं मध्यं यस्य तद्रूपे इत्यर्थः । सचन्द्रैरिति । चन्द्रोऽर्द्धचन्द्रो युगलाध्ववाहित्वाद् बिन्दुश्च ताभ्यां सह वर्त्तमानैर्वर्णैरित्यर्थः । वैश्वानरस्य वह्नेः । **अरुणमिहिरसमं** बालार्कसदृशमित्यर्थः । स्वस्तिकाख्यैरिति । "स्वस्तिकं नाम परम्परसम्बद्धं विदिग्गतचतुर्वक्त्रं रेखाद्वयमि"ति राघवभट्टोक्तं, तत्प्रकारैस्त्रिभिः स्वस्तिकैस्त्रिकोणावच्छेदेऽभिलसितमित्यर्थः । अत्र वह्निमण्डले वह्निबीजं रँ ॥ १९ ॥

**तस्योर्ध्व इति । तस्य पद्मस्योर्ध्वे नाभिमूले दशदलकमले ललिते मनोज्ञे पूर्णमेघ इव प्रकाशो यस्य एवम्भूते पद्मे वैश्वानरस्य वह्नेः त्रिकोणं मण्डलं ध्यायेत् । कीदृशम् ? अरुणसूर्ययोस्तुल्यम् । पुनः कीदृशम् ? तद्बाह्ये त्रिकोणस्य बहिस्त्रिभिः स्वस्तिकाख्यैरभिलसितम् । तत्रैव वह्निमण्डले वह्नेः वस्बीजमास्ते सानुस्वारो रेफ इति । पद्मे किम्भूते ? नीलाम्भोजस्य प्रकाशो येषाम्, एवम्भूतैः सचन्द्रैर्डकारादिफकारान्तैरुपहितजठरे एतैर्वर्णैरुपशोभितजठरे, उपस्थितमध्ये इत्यर्थः ॥ १९ ॥**

मणिपूरपद्मलाह—तस्यर्ध्वे इत्यादिना । तथाच—

मणिवद्भिन्नं तत् पद्म मणिपूरं तथोच्यते । इति ।

नीलवर्णे नीलवर्ण-डादिफान्तवर्णैर्युक्ते । तथा च दक्षिणामूर्त्तौ—"सुनीले मणिपूरके । डफान्तानि महानीलप्रभानि परिचिन्तयेदि"ति । वह्नेर्मण्डलं बीजं चाह—वैश्वानरस्येत्यादिना । वैश्वानरस्य वह्नेर्मण्डलं रक्तवर्णं त्रिकोणम् तद्बाह्ये त्रिभिः स्वस्तिकैर्दक्षिणाकारैर्युक्तम् । **मायातन्त्रे**—

दशपत्रं पयोजातं कर्णिकायां महेश्वरि ।
वाह्नेयं मण्डमं रक्तं त्रिकोणं स्वस्तिकान्वितम् ॥

स्वबीजं रेफः । "वर्णैः स्वै रञ्जितान्यासन्" इति प्रागुक्तेः प्रातःसूर्यसमरक्तवर्णम् ॥१९॥

मणिपूरचक्रस्थ-वह्निबीजवर्त्ति-रुद्रस्वरूपम्

**ध्यायेन् मेषाधिरूढं नवतपननिभं वेदबाहूज्ज्वलाङ्गं**
**तत्क्रोडे रुद्रमूर्त्तिर्निवसति सततं शुद्ध-सिन्दूर-रागः ।**
**भस्मालिप्ताङ्गभूषा-भरण-सितवपुर्वृद्धरूपी त्रिनेत्रो**
**लोकानामिष्टदाताऽभयलसितकरः सृष्टिसंहारकारी ॥ २० ॥**

मणिपूरचक्रस्थ-लाकिनीशक्तिस्वरूपम्

**अत्रास्ते लाकिनी सा सकलशुभकरी वेदबाहूज्ज्वलाङ्गी**
**श्यामा पीताम्बराद्यैर्विविधविरचनालङ्कृता मत्तचित्ता ।**

**ध्यायेदिति । भस्मालिप्ताङ्गभूषाभरणसितवपुरिति** । भस्मलेपनाङ्ग-भूषाभरणाभ्यां शुक्लीकृतदेह इत्यर्थः । **ध्यायेन् मेषेति** । ध्याने विशेषमाहाऽन्यत्र--

मेषस्थं साक्षसूत्रञ्च शक्तिहस्तं स्मरेत् ततः ॥ इति ॥

विशेषानभिधानादन्यहस्तद्वये वराभयौ चिन्तनीयौ, ध्यानान्तरे तथा दर्शनात् । **लोकानामिष्टदाता** वरदातेत्यर्थः । **अभयलसितकरस्तेन** वराभय-धारीति भावः । अत्र वृषोपरि रुद्रो ध्येयः स्पष्टमन्यत् ॥ २० ॥

**अत्रास्त** इति । **विविधविरचनेति** । **विविधेन** मणिमुक्तादियोगेन चित्रविचित्रधटनेन **विरचना** यत्र तादृशमलङ्कृतं यस्या इत्यर्थः । यद्वा

ध्यायेदिति । वह्निबीजं ध्यायेदिति पूर्वश्लोकेनाऽन्वयः । कीदृशम् ? मेषमधिरूढम् । प्रातःकालीनसूर्यतुल्यम् । चतुर्बाहुभिरुज्ज्वलाङ्गम् । तस्य बीजकोशस्याऽङ्के रुद्रमूर्त्ति-र्निवसति सततमेव । कीदृशः ? शुद्धसिन्दूरस्येव रक्ताकारो यस्य । भस्मलिप्तमेवाऽङ्ग-भूषाभरणं तेन सितं शुभ्रं वपुर्यस्य । वृद्धाकारः । त्रीणि नेत्राणि यस्य स तथा । त्रिलोकवासिनामभीष्टदाता । अभयलसितकर । सृष्टेः संहारकारी ॥ २० ॥

अत्रास्त इति । अत्रैव पद्मे सा प्रसिद्धा लाकिनी आस्ते । कीदृशी ? सर्वेषामेव शुभकरी । चतुर्भिर्बाहुभिरुज्ज्वलाङ्गी । श्यामवर्णा । पीतवस्त्राद्यैर्या नाना विरचना

मणिपूरं तु नीलं, "रुद्रस्थानं लाकिनी देवतात्रे"ति वचनात् । तामाह रुद्रमूर्त्ति-रित्यादिना । शुद्धसिन्दूररागः अतिशयरक्तवर्णः ॥ २० ॥

वेदबाहूज्ज्वलाङ्गीत्यादि । तदुक्तं तन्त्रे--

नाभिपद्मचिन्तनफलम्

**ध्यात्वैतन् नाभिपद्मं प्रभवति नितरां संहृतौ पालने वा**
**वाणी तस्याननाब्जे निवसति सततं ज्ञानसन्दोहलक्ष्मीः ॥ २१ ॥**

विविधविरचनया अलङ्कृतमलङ्कारो धार्यते यत्रेत्यर्थः। अत्र लाकिनी-ध्यानविशेषमाह--

नीलां देवीं त्रिवक्त्रां त्रिनयनलसितां दंष्ट्रिणीमुग्ररूपां
वज्रं शक्तिं दधानामभय-वर-करां दक्षवामे क्रमेण।
ध्यात्वा नाभिस्थपद्मे दशदलविलसत्कर्णिके लाकिनीं तां
मांसस्थां गौरभक्तोत्सुकहृदयवतीं चिन्तयेत् साधकेन्द्रः ॥

नाभिपद्मचिन्तनफलमाह--**ध्यात्वैतदित्यादि**। नाभिपद्मं मणिपूराख्यम्। "तत्पद्मं मणिवद् मणिपूरं तथोच्यते" इति गौतमीयात्। अन्यत् स्पष्टम्।

**तदयं महावाक्यार्थनिर्णयः**। नाभिपद्मं मेघवर्णदशदलम्। तद्दलं च नीलाभसबिन्दु-ड-ढ-ण-त-थ-द-ध-न-प-फेति दशवर्णयुक्तम्। तत्कर्णिकायां त्रिकोणाकारम् त्रिकोणवहिः स्वस्तिकायुक्तं रक्तवर्णं वह्निमण्डलम्। तन्मध्ये रँ इति वह्निबीजं रक्तवर्णं मेषाधिरूढं चतुर्भुजं वज्रशक्तिवराभयधरम्। तत्क्रोडे रुद्रो वृषारूढो रक्तवर्णो द्विभुजो वराभयधारी भस्मलेपन-शुक्लाभरणाभ्यां शुक्लीकृतदेहो वृद्धरूपः। पद्मकर्णिकायां रक्तपद्मोपरि लाकिनीशक्तिर्नीलवर्णा त्रिवक्त्रा त्रिनेत्रा चतुर्भुजा वज्रशक्त्यभयवरकरा घोरदंष्ट्रा रक्तयुक्तखेचरान्नमांसाभिलाषिणीति तृतीयप्रकरणम् ॥ २१ ॥

**तया अलङ्कृता। मत्तं चित्तं यस्याः सा तथा। एतन्नाभिपद्मं मणिपूरकाख्यं ध्यात्वेत्यर्थः। संहारे पालने च प्रभवति समर्थो भवति। तस्याननाब्जे सप्ततमेव वाणी विलसति। कीदृशी? ज्ञानसमूहस्य प्राप्तिर्यतः। एनेन ब्रह्मविष्णुशिवतुल्यो भवतीत्यर्थः ॥ २१ ॥**

**कृष्णां देवीं त्रिवक्त्रां त्रिनयनसहितां कुब्जिनीमुग्ररूपां**
**वज्रं शक्तिं सदण्डामभयवरकरां दक्षवामे दधानाम्।**

**इत्यादि। ज्ञानेति। ज्ञानसमूहेन सह लक्ष्मीस्ताम् ॥ २१ ॥**

अनाहतपद्मस्वरूपम्

**तस्योर्ध्वे हृदि पङ्कजं सुललितं बन्धूककान्त्युज्ज्वलं**
**काद्यैर्द्वादश वर्णकैरुपहितं सिन्दूररागान्वितैः ।**
**नाम्नाऽनाहतसंज्ञकं सुरतरुं वाञ्छातिरिक्तप्रदं**
**वायोर्मण्डलमत्र धूमसदृशं षट्कोणशोभान्वितम् ॥ २२ ॥**

हृदि पङ्कजं निरूपयति—तस्योर्ध्व इत्यादि-षड्भिः । **हृदि पङ्कजमिति** । एवम्भूतं **पङ्कजं हृदि** ध्यायेदिति क्रियाध्याहारेणाऽन्वयः । **सुललितं** सुस्निग्धमित्यर्थः । काद्यैरिति । क-ख-ग-घ-ङ-च-छ-ज-झ-ञ-ट-ठेति द्वादश-वर्णकैरिति बोध्यम् । तैरुपहितं युक्तमित्यर्थः । **नाम्नाऽनाहतसंज्ञकमिति** ।

शब्दब्रह्ममयः शब्दोऽनाहतस्तत्र दृश्यते ।
अनाहताख्यं पद्मं तन्मुनिभिः परिकीर्त्तितम् ॥

इति वचनादनाहतनामपद्ममिति तात्पर्यम् । यतः **सुरतरुं** कल्पतरुस्वरूप-मतो **वाञ्छातिरिक्तफलप्रदमिति** हेतुगर्भविशेषणमिति भावः । तत्पद्म-कर्णिकायां वायुमण्डलस्थितिमाह—वायोरिति ॥ २२ ॥

तस्योर्ध्व इति । तस्य पद्मस्योर्ध्वे हृदि सुललितं मनोरमं नाम्नाऽनाहतसंज्ञकं पद्ममास्ते । कीदृशम् ? बन्धूककान्तिवदुज्ज्वलम् । सिन्दूरराग इवान्वितैः प्राप्तैः । ककाराद्यैः ठकारान्तैर्द्वादशसंख्यकवर्णैर्दलमध्यवर्त्तिभिरुपशोभितम् । पुनः कीदृशम् ? सुरतरुः कल्पवृक्षस्तत्तुल्यम्, अतो वाञ्छातिरिक्तप्रदं वाञ्छितस्याप्यतिददातीति तत् तथा । अयम्भावः—कल्पवृक्षाः पूर्णवाञ्छितफलदातारः, अयन्तु तदतिरिक्तं मोक्षफलञ्च ददातीत्यर्थः । अत्रैव मण्डले वायोर्मण्डलं विद्यते । कीदृशम् ? धूमसदृशम् ? पुनः कीदृशम् ? षट्कोणस्य या शोभा तया अन्वितम् ॥ २२ ॥

अनाहतपद्ममाह—तस्योर्ध्वे इत्यादि । बन्धूकपुष्पकान्तिस्वरूपरक्तवर्णं कादि-ठान्तैः द्वादशवर्णैः सिन्दूरवर्णैर्युक्तम् । तथाच दक्षिणामूर्त्तौ—

पिङ्गवर्णे महावह्निकलिकाभानि संस्मरेत् ।
कादिठान्तानि वर्णानि चतुर्थेऽनाहते प्रिये ॥ इति ॥

तन्मध्ये षट्कोणपद्मं वायुमण्डलम् । तथाच मायातन्त्रे—

अनाहतं द्वादशारं रक्ताभं हृदि सुव्रते ।
तन्मध्ये पावनं पद्मं षट्कोणं धूम्रवर्णकम् ॥ इति ॥ २२ ॥

वायुमण्डलमध्यस्थ-वायुबीज-स्वरूपम्

**तन्मध्ये पवनाक्षरञ्च मधुरं धूमावली-धूसरं**
**ध्यायेत् पाणिचतुष्टयेन लसितं कृष्णाधिरूढं परम्।**
**तन्मध्ये करुणा-निधानममलं हंसाभमीशाभिधं**
**पाणिभ्यामभयं वरञ्च विदधल्लोकत्रयाणामपि ॥ २३ ॥**

वायुमण्डलमध्ये वायुबीजमाह––**तन्मध्य** इति। **पवनाक्षरं** यँ इति बीजम्। मधुरं मनोहरम्। **धूमावलीधूसरमिति**। धूमश्रेण्यावृतदेहत्वाद् धूमधूम्रवर्णमिति भावः। **कृष्णाधिरुढमिति**। कृष्णसाराधिरूढमित्यर्थः। वरुणहस्ते पाशदर्शनादत्र वायुहस्तेऽङ्कुशो ध्येयः। वायुबीजमध्ये ईशस्थितिमाह––तन्मध्य इति। स्पष्टम्। सर्वत्र शिवस्य त्रिनेत्रम्। शिवस्य त्रिनेत्रत्वादयं त्रिनेत्रः। एवं "ग्रैवेयाङ्गदहारनूपुरयुतं क्षौमाम्बरं चिन्तयेदि" त्यादि कर्मान्तिरोक्त-ध्यानप्राप्त क्षौमाम्बरत्वमीशस्य। एवं "कान्तं कान्त-शशाङ्ककोटिकिरणं प्रोद्यत्कपर्द्दोज्ज्वलमि"ति ॥२३॥

तन्मध्य इति। तस्य मण्डलस्य मध्ये पवनाक्षरं वायुबीजम्। अक्षरपदेन बीज-मुच्यते। एतत्प्रकारं यस्य मण्डलं तस्यैव बीजमिति दृष्टत्वात्। कीदृशम्? मधुरं हृदयङ्गमम्। पुनः कीदृशम्? दीपकलिकाकारजीवात्मसम्बन्धिनी या धूमवली तथा धूसरम्। पाणिचतुष्टयेन लसितम्। कृष्णाजिनाधिरूढम्। परं प्रकृष्टञ्च। एवम्भूतं बीजं ध्यायेत्। तत्र वायुमण्डले। ईश एवाभिधा नाम यस्य, एवम्भूतं शूलपाणेर्वपुरास्ते। कीदृशम्? करुणावारिधिस्वरूपम्। अमलं निर्मलम्। हंसाभं सूर्य इव शोभा यस्य। पुनः कीदृशम्? पाणिभ्यां कराभ्यामभयं वरञ्च लोकत्रयाणामपि विदधत्। एतेनेयं मूर्त्तिर्हस्तपादादिविशिष्टेति ॥ २३ ॥

वायुबीजमाह––तन्मध्ये इत्यादिना। पवनाक्षरं यं। प्रमाणमाधारपद्मव्याख्याने उक्तम्। धूसरं ईषत् पाण्डुरम्। हस्तचतुष्टययुक्तं कृष्णसाराधिरूढम्। "रक्तमनाहत-मीश्वरगेहन्तु काकिन्यपीहोक्ता" इति वचनात्। तदेवाह––तन्मध्ये करुणानिधान-मित्यादिना। ईशाभिधमीश्वरनामानम्। हंसाभं सूर्यप्रभम्। अभयवरपाणिद्वय-युक्तम् ॥ २३ ॥

पद्मकर्णिकास्थ-काकिनीशक्ति-स्वरूपम्

**अत्रास्ते खलु काकिनी नवतडित्पीता त्रिनेत्रा शुभा**
**सर्वालङ्करणान्विता हितकरी सम्यग् जनानां मुदा।**
**हस्तैः पाश-कपाल-शोभन-वरान् संविभ्रती चाभयं**
**मत्ता पूर्णसुधारसार्द्रहृदया कङ्कालमालाधरा ॥ २४ ॥**

अत्र कर्णिकायां काकिनीशक्तिस्थितिमाह--**अत्रास्त** इति। **मत्ताऽस्वभावस्था** स्खलितभावा। **पूर्णसुधारसार्द्रहृदयेति। पूर्णः** सम्पूर्णस्तृप्तिजनको यः **सुधारसस्तेनार्द्रं** परोपकाराभिमतकोमलं हृदयं चित्तं यस्या इत्यर्थः। यद्वा पूर्णः पूर्णानन्दजनको यः सहस्रदलकमलान्तर्विगलितपरमामृतरसस्तेनार्द्रं परमानन्दोत्फुल्लशिथिलं हृदयं यस्या इत्यर्थः। अन्यत् स्पष्टम्।

कृष्णाम्बर-परीधानां नानाभरण-भूषिताम्।
ध्यायेच्छशिमुखीं नित्या काकिनीं मन्त्रसिद्धये॥

इति ध्यानप्राप्त-कृष्णाम्बरत्वमस्या बोध्यम्॥ २४॥

**अत्रास्त इति। अत्रैव पद्मे खलु निश्चितं काकिनी देवी आस्ते। नूतनविद्युदिव पीतवर्णा। त्रीणि नेत्राणि यस्याः सा। शुभा शुभदायिका। सर्वालङ्कारैरावृता। मुदा हर्षेण। जनानां सम्यक्प्रकारेण हितकारी। चतुर्भिर्हस्तैः कपाल-शूल-शोभनवराभयान् संबिभ्रती। मत्ता उन्मत्ता। कङ्कालमालाधरा अस्थिमाल्यधरा॥ २४॥**

तत्र काकिनी नवतडित्पीता गौरवर्णा त्रिनेत्रा पाशकपालवराभयान् चतुर्भिर्भुजैः बिभ्रती। कङ्कालेति अस्थिमालाधरा। "स्यात् शरीरास्थि कङ्कालः" इत्यमरः। तथाच तन्त्रे--

..............................काकिनी मेघ(द)संस्थाम्।
पाशं शूलं कपालं डमरुमपि करैर्धारिणीं पीतर्णां
दध्यन्ने सक्तिचिन्तां स्ववयवनमितां वारुणीसक्तचित्ताम्॥

शूलडमरुस्थाने वराभयं तथा अस्थिमालेति **तन्त्रान्तरे** उक्तम्।

बाणलिङ्गं तु तन्मध्येऽधोमुखे शक्तिके इति।

त्रिस्त्रिकोणयुक्ते इति **क्रमात्**। तथा--

तन्मध्ये बाणलिङ्गन्तु सूर्यायुतसमप्रभम्।
शब्दब्रह्ममयः शब्दो न हेतुस्तदहेतुकः॥
अनाहताख्यं तत्पद्मं पुरुषाधिष्ठितं परम्॥

"पुरुषेण जीवात्मना" इति गौतमीयाच्च॥ २४॥

पद्मकर्णिकामध्यस्थ-त्रिकोणस्वरूपम्

**एतन्नीरज - कर्णिकान्तर - लसच्छक्तिस्त्रिकोणाभिधा**
**विद्युत्कोटिसमानकोमलवपुः सास्ते तदन्तर्गतः ।**
**बाणाख्यः शिवलिङ्गकोऽपि कनकाकाराङ्गरागोज्ज्वलो**
**मौलौ सूक्ष्मविभेदयुङ् मणिरिव प्रोल्लासलक्ष्म्यालयः ॥ २५ ॥**

एतत्पद्मकर्णिकामध्ये त्रिकोणं निरूपयति––**एतदिति** । **त्रिकोणाभिधा** त्रिकोणाकारा । शक्तिरित्यनेन त्रिकोणस्याऽधोमुखत्वं ज्ञापितम् । **सा आस्ते** इत्यन्वयः । एतत् त्रिकोणं वायुबीजस्याऽधोदेशे । तदाहान्यत्र––

तत्क्रोडे ईशं तदधस्त्रिकोणे बाणलिङ्गकम् ।

इति । बाणाख्यलिङ्गं विशेषयति–**मौलौ सूक्ष्मविभेदयुगिति** । शिवलिङ्ग-मस्तकेऽर्द्धचन्द्रबिन्दुयोगात् तद्बिन्दुमध्ये शून्यरूपो विभेदश्छिद्रं, तेन युक्त इत्यर्थः । **तदाह**––

त्रिकोणान्तर्बाणलिङ्गं कनकाभरणैर्युतम् ।
चन्द्रार्द्धमस्तकं देवं मध्ये रक्ताम्बुजं परम् ॥

इति । "मध्ये रक्ताम्बुजमि"ति हृत्पद्मस्य कर्णिकाधोदेशे ऊर्ध्वमुखरक्त-वर्णाष्टदलपद्ममित्यर्थः । एतत्पद्मोपरि मानसपूजा कार्या । तदुक्तं यथा––

तन्मध्येऽष्टदलं रक्तं तत्र कल्पतरुं तथा ।
इष्टदेवासनं चारु चन्द्रातपविराजितम् ॥

तथा––नानापुष्पफलैर्युक्तं मञ्जुवाक्पक्षिशोभितम् ।
इत्याद्यभिदाय–तत्र ध्यायेदिष्टदेवं तत्तत्कल्पोक्तमार्गतः ॥

इति । अलं विस्तरेण प्रकृतमनुसरामः । बाणलिङ्गमस्तके बिन्दुप्रकाशदृष्टा-माह––**मणिरिवेति** । यथा सरन्ध्रमणिप्रकाशस्तथा शिवलिङ्गोपरि बिन्दु-

**एतन्नीरज इति । एतत्पद्मकर्णिकान्तरप्रकाशा त्रिकोणाभिधा शक्तिरास्ते । प्रसिद्ध-त्वात् सेति । तदन्तर्गता सती आस्ते इति सम्बन्धः । यद्वा स एव शिवोऽन्तर्गतो यस्याः सा तथा । तस्याः शक्तेर्मौलावुपरि बाणाख्यः शिवलिङ्गकः समास्ते । स्वर्णाकारेणा-ऽङ्गरागेणोज्ज्वलः । सूक्ष्मरूपेणा विशेषभेदं युनक्तीति । एवम्भूतो मणिरिव । पुनः**

त्रिकोणं बाणलिङ्गं जीवात्मानश्चाह– एतन्नीरजेत्यादिना । कनकं बन्धूकपुष्प-सदृशं, बन्धूकः पुष्पविशेषः तद्वदङ्गरागोज्ज्वलः ।

हेमबन्धूककुसुमशरच्चन्द्रनिभानि च ।

हृत्पद्म-चिन्तन-फलम्

**ध्यायेद् यो हृदि पङ्कजं सुरतरुं शर्वस्य पीठालयं**
**देवस्याऽनिलहीनदीपकलिकाहंसेन संशोभितम् ।**

प्रकाश इति भावः । **प्रोल्लासलक्ष्म्यालय** इति । प्रोल्लासः कालोद्गमस्तच्छोभायुक्त इत्यर्थः ॥ २५ ॥

हृत्पद्मचिन्तनफलमाह—ध्यायेदित्यादि-द्वाभ्याम् । अस्यार्थः—यो **जनो हृदि पङ्कजं ध्यायेत्** स जनो **वाचामीश्वरो** वृहस्पतिसमो भवति। एवं सर्वत्र। ईश्वर इत्यादिप्रथमान्तेन भवति-क्रियान्वयो बोध्यः । अत्र पद्मकर्णिकायां हंसरूपजीवात्मस्थितिमाह—अनिलहीनदीपकलिकाहंसेन संशोभितमिति । वायुरहिता या दीपकलिका तत्सदृशहंसेन संशोभितमित्यर्थः । ततश्च पद्मकर्णिकायां वाताहतिरहितस्थिरतर-दीपशिखाकारहंसरूपो जीवात्मा वर्त्तत इति भावः । एतत्कर्णिकायां सूर्यमण्डलस्थितिं ज्ञापयति—**भानोर्मण्डलमण्डितान्तरलसत्किञ्जल्कशोभाधरमिति** । भानोर्मण्डलेन मण्डिता भूषिता ये अन्तरलसन्तः कर्णिकामध्ये प्रकाशमानाः किञ्जल्काः केसरा अथवा याः किञ्जल्कशोभास्ता धारयतीत्यर्थः ।

अत्र भानुमण्डलमण्डितत्वं किञ्जल्कविशेषणं, नत्वन्तरविशेषणम् । तथात्वे सर्वस्मिन् पद्मे किञ्जल्कशोभाधरत्वादत्र विशेषोपादानं व्यर्थं स्यात् । भानोर्मण्डलमण्डितत्वविशेषणविशिष्टत्वे तादृशविशिष्टकिञ्जल्कानामन्य-

**कीदृशः ? प्रोद्दामलक्ष्म्यालयः । सूक्ष्मभेदकत्वात् तस्याः शक्तेरेव प्रकृष्टोद्दामश्रियस्तत्रालय इति ॥ २५ ॥**

**ध्यायेदिति । य एतत् पद्मं कल्पवृक्षतुल्यं हृदि ध्यायेत् सः एवमेवं भवति । वाचामीश्वरो बृहस्पतितुल्यः । जगतामीश्वरः । रक्षाविनाशक्षमश्च अर्थाज् जगताम् । पद्मं कीदृशम् ? शर्वस्य देवस्य पीठालयम् । पुनः कीदृशम् ? अनिलहीनदीपकलिकारूपहंसे-**

**इति योगिन्येकवाक्यत्वात्** । स्वयम्भूवाणलिङ्गेतरलिङ्गविशेषणं—हेमादि । **मौलौ मस्तके सूक्ष्मविभेदयुक्तो विवरयुक्तो मणिरिव दीप्तचिह्नालयः ॥ २५ ॥**

सर्वस्य देवस्य पीठालयं निर्वात्तदीपशिखाकारहंसेन जीवात्मना शोभितम् । **मायातन्त्रेऽपि**—"आत्मा तत्र प्रदीपाभः" इति । भानोरित्यस्य मण्डलपदेनैकदेशेन

**भानोर्मण्डलमण्डितान्तरलसत्किञ्जल्कशोभाधरं**
**वाचामीश्वर ईश्वरोऽपि जगतां रक्षाविनाशे क्षमः ॥ २६ ॥**

**योगीशो भवति प्रियात् प्रियतमः कान्ताकुलस्याऽनिशं**
**ज्ञानीशोऽपि कृती जितेन्द्रियगणो ध्यानावधानक्षमः ।**

त्रासत्त्वात् तदुपादानं सार्थकमिति । एवञ्च भानोर्मण्डलस्य कर्णिकारूपकत्वे तत्तेजसा सर्वेषां किञ्जल्कानां शोभाधिक्यरूपमण्डितत्वं सम्भवति, नत्वेक-देशस्थितत्वे । ततश्च तत्कर्णिकायामादौ कर्णिकाव्यापकं वायुमण्डलं, तदुपरि तथा सूर्यमण्डलम्, तदुपरि वायुबीजत्रिकोणादिकं ध्येयम् । युक्तञ्चैतत्, मानसाऽर्चनायां "मं वह्निमण्डलाय दशकलात्मने नम" इत्यादिना पूजाया-मुपर्युपरिक्रमेण बह्न्यर्कचन्द्रमण्डलस्थितिदर्शनाद् दृष्टपरिकल्पनान्यायाव-तारात् । अलमतिविस्तरेण ।

ईश्वर इति । सृष्टिकर्त्ता इत्यर्थः । **रक्षाविनाशे क्षमः** स्थितिप्रलयकर्त्ता इत्यर्थः । तेन स जनः सृष्टिस्थितिप्रलयकर्त्तेति तात्पर्थार्थः ।। २६ ।।

**योगीश** इति । **प्रियात् प्रितमः कान्ताकुलस्येति** योषिद्वर्गस्य कर्मकुशलः । **जितेन्द्रियगण** इति । जितेन्द्रियाणां मध्ये गण्यते तुल्यत्वेन गृह्यतेऽसावि-त्यर्थः । **ध्यानावधानक्षमो** ध्याने ब्रह्मचिन्तनेऽवधानाय स्थिरमनोऽभिनिवेशं कर्त्तुं क्षमः समर्थ इत्यर्थः । **काव्याम्बुधारावह** इति । काव्यरूपाम्बूनां धारा अविच्छेदनिःसरणमुह्यते धार्यते येन, तादृशो भवतीति । लक्ष्मीरङ्कणदैवतो विष्णुसदृश इत्यर्थः । यद्वा लक्ष्मीः सम्पत्तिः रङ्कणमानन्दानुभवो दैवमदृष्टं तत्समूहो दैवता जनतावत्, ततश्च लक्ष्मीभी रङ्कणाय दैवता यस्येति बहुव्रीह्यर्थे णप्रत्ययनेन तत्पदं सिद्धम् । अत एवोक्तम्—

**नाऽऽत्मना संशोभितम् । भानोर्मण्डलेन मण्डितेऽन्तरे लसन्ती प्रकाशमाना केशरशोभा भावो यस्य तत्तथा ॥ २६ ॥**

**योगीश इति । एतत्पङ्कजध्यानपरो जन एव भवति । योगीशः कान्ताकुलस्य सर्वस्त्रीणां प्रियात् स्वामिनोऽपि प्रियतमो भवति । ज्ञानीशः कृति च भवति । जित-**

सहान्वयः । तेन मण्डलमण्डितमन्तरं मध्यं यस्य स चासौ तसल्किञ्जल्कश्चेति स तथा । तस्य शोभाधरम् । "किञ्जल्कः केसरोऽस्त्रियाम्" इत्यमरः ।। २६ ।।

**गद्यैः पद्यपदादिभिश्च सततं काव्याम्बुधारावहो**
**लक्ष्मीरङ्गणदैवतः परपुरे शक्तः प्रवेष्टुं क्षणात् ॥ २७ ॥**

इह भुक्त्वा वरान् भोगानन्ते मुक्तिपदं व्रजेत् ॥

इति **परपुरे शक्तः प्रवेष्टुं** क्षणादिति। दुर्गद्वारपालादिना दुर्गमीकृतायामपि परपूर्यां प्रवेष्टुं शक्तः प्रवेशकारणभूतादर्शनाकाशगमनादियोग्यतापन्नो भवतीत्यर्थः ।

अत्र केचिद् 'दैवतमि'ति बिन्द्वन्तं पठित्वा यद्यपि जनविशेषणतया दवतमित्यस्य पुंस्त्वं भवितुं पार्यते, तथाप्यजहल्लिङ्गत्वान्नपुंसकत्वमिति वदन्ति । तन्न । "वृन्दारका दैवतानि पुंसि वा देवता स्त्रियामि"त्यमरकोशे दैवतशब्दस्य पुंनपुंसकत्वकथनाद् दैवत इति विसर्गान्तपाठोऽपि साधुः । प्रदर्शितार्थे तु सुतरां तथेति । स्पष्टमन्यत् ।

**तदयं महावाक्यार्थनिर्णयः** । हृत्पद्मं बन्धूकाभं सिन्दूराभ-सबिन्दु-क-ख-ग-घ-ङ-च-छ-ज-झ-ञ-ट-ठेति द्वादशवर्णयुक्त-द्वादशदलम् । तदुपरि सूर्यमण्डलम् । तन्मध्ये विद्युत्कोटिनिभ-त्रिकोणम् । तदूर्ध्वे वायुबीजं कृष्णसाराधिरूढं धूमधूम्राभं चतुर्भुजमङ्कुशहस्तम् । तत्क्रोडे हंसाभ ईशो द्विभुजो वराभयकरस्त्रिनेत्रः । अत्र कर्णिकायां रक्तपद्मोपरि काकिनीशक्तिः पीतवर्णा चतुर्भुजा पाश-कपाल-वराभयकरा पीतवस्त्रा सर्वालङ्करणान्विता सुधार्द्रहृदया कङ्कालमालाधरा । मध्यत्रिकोणे बाणलिङ्गशिवोऽर्द्धचन्द्रबिन्दुरूपमस्तकः स्वर्णवर्णः कामोद्गमोल्लसितः । तदधः स्थिरतरदीपकलिकाकारहंसरूपी जीवात्मा । एतत्कर्णिकाधोरक्तवर्णोर्ध्व-मुखाष्टदलपद्मम् । तत्र कल्पवृक्ष-रत्नवेदी-चन्द्रातप-पताकाद्यलङ्कृतं मानसपूजास्थानमिति चतुर्थप्रकरणम् ॥ २७ ॥

मिन्द्रियं नमो येन स तथा । ध्यानेनाऽवधाने क्षमो भवति । गद्यैः संस्कृतिवाक्यैः पद्यपदादिभिः श्लोकादि-प्रबन्धैर्गद्यपद्यरूपाम्बुधारावहो भवति । अत्यन्तवर्षणशीलो मेघरूपो भवतीति यावत् । लक्ष्मीतत्कुलदैवतमिति प्रशस्तलक्ष्म्याश्रयः कुलश्रेष्ठश्च भवतीत्यर्थः । यद्वा लक्ष्मीविशिष्टा कुलदेवता यस्य स तथा, स सत्कुलीनो भवतीति यावत् । दैवतमिति स्वार्थे अण् । एवं सः क्षणादेव परपुरे अन्यशरीरे प्रवेष्टुं समर्थो भवति । कुमारीतन्त्रे परपुरप्रवेशस्याप्येतत्पदमध्यानफलत्वेनाभिधानात् ॥ २७ ॥

कण्ठस्थ-विशुद्धचक्र-स्वरूपम्

**विशुद्धाख्यं कण्ठे सरसिजममलं धूमधूम्रावभासं**
**स्वरैः सर्वैः शोणैर्दलपरिलसितैर्दीपितं दीप्तबुद्धेः ।**

इदानीं कण्ठदेशे विशुद्धचक्रं निरूपयति—**विशुद्धाख्यमित्यादि-चतुर्भिः । विशुद्धाख्यमिति ।**

विशुद्धिं तनुते यस्माज्जीवस्य हंसलोकनात् ।
विशुद्धं पद्ममाख्यातमाकाशाख्यं महत् परम् ॥ इति ॥

अस्यार्थः—**कण्ठे** विशुद्धाख्यं विशुद्धनामकं **सरसिजं समास्ते** इत्यन्वयः । पद्मं विशेषयति—अमलमिति । तेजोमयत्वान् मलरहितामित्यर्थः । स्वरैः सर्वैरकारादिविसर्गान्तैः षोडशस्वरैर्दीप्तबुद्धेर्निरन्तरयोगाभ्यासेन विषयानुरागरूपमलरहितत्वेन प्रकाशितबुद्धेः साधकस्य सम्बन्धे दीपितं प्रकाशितमित्यर्थः । स्वरैः किदृशैः ? **दलपरिलसितैरिति** । एतेन स्वराणां षोडशत्वादेतत् पद्मं षोडशदलमिति सूचितम् । व्यक्तमाहाऽन्यत्र—

तदूर्ध्वे षोडशदलं पङ्कजं धूम्रवर्णकम् ।
युक्तं शोणैः षोडषभिः स्वरैर्बिन्दुविभूषितैः ।
आरक्तकिञ्जल्कयुतं व्योममण्डलमण्डितम् ॥

इति । तथा **पूर्णेन्दुप्रथिततमनभोमण्डलं** पूर्णचन्द्रमण्डलवत् सम्पूर्णं शुक्लवर्णञ्च, अत एव "तत्तद्भूतसमाभानि मण्डलानि विदुर्बुधा" इति शारदोक्तवचनेन मण्डलानां तत्तद्दैवतभूतसमानवर्णविधानान् नभसः शुक्लवर्णत्वात् तन्मण्डलस्यापि शुक्लवर्णत्वं प्रतीयते । **नभोमण्डलं वृत्तरूपं समास्ते** । एतत्पद्मकर्णिकायामिति शेषः । **शुक्लवर्णाम्बरस्येति** । नभोमण्डलस्य मध्ये शुक्लवर्णस्याऽम्बरस्याकाशस्याऽङ्के "सदापूर्वो देवः शिव इति च समाख्यानसिद्धः" सदाशिवनाम्ना ख्यातो देवः सततं निवसतीति द्वितीयश्लोकेनाऽन्वयः । अम्बरस्य कीदृशस्य ? **हिमच्छायानागोपरि लसिततनोः**

**विशुद्धाख्यमिति । अन्यत् निर्मलं विशुद्धाख्यं पद्मं कण्ठे आस्ते । किम्भूतम् ? धूमेन या धूम्राभा तस्या इव द्युतिर्यस्य तत्तथा । पुनः कीदृशम् ? सर्वैः षोडस्वरै रक्ताकारैर्दलैः परिलसितैर्दीपितं प्रकाशितम् । दीप्तबुद्धे र्दीपाकारबुद्धेर्जनस्य ज्ञानविषयो भवतीत्यर्थः । तत्रैव पद्मे शुक्लवर्णाम्बरधरस्य विष्णोः पूर्णेन्दुरिव प्रथिततमं ख्यातं**

विशुद्धपद्ममाह—विशुद्धाख्याति । हिमच्छायायुक्तस्य नागस्योपरि लसित-

**समास्ते पूर्णेन्दुप्रथिततम-नभोमण्डलं वृत्तरूपं**
**हिमछायानागोपरि लसिततनोः शुक्लवर्णाम्बरस्य ॥ २८ ॥**

नभोबीजमध्यस्थ-सदाशिव-स्वरूपम्

**भुजैः पाशाभीत्यङ्कुशवरलसितैः शोभिताङ्गस्य तस्य**
**मनोरङ्के नित्यं निवसति गिरिजाभिन्नदेहो हिमाभः ।**

हिमच्छायया नागो हिमच्छायानाग इति तृतीयान्ततत्पुरुषेण हिमोपमा-विशिष्टनाग इत्यर्थः। यद्वा हिमच्छायातुल्यो नाग इति शाकपार्थिवा-दित्वान् मध्यपदलोपे तत्पदसिद्धया शुक्लवर्णनाग इत्यर्थः। अत्र नागो हस्ती। व्यक्तमाह **भूतशुद्धौ**—तदन्तर्व्योमबीजञ्च शुक्लं हैमगजस्थितम्। इति। 'हैमे'ति हिमस्यायमिति इदमर्थतद्धितप्रत्ययेन हैमगजः शुक्लहस्ती इत्यर्थः। ततश्च शुक्लहस्त्युपरि परिलसिता प्रकाशमाना तनुर्यस्य तादृशस्येत्यर्थः ॥ २८ ॥

**भुजैरिति**। पुनः कीदृशस्य ? भुजैः **पाशाभीत्यङ्कुशवरलसितैः शोभिताङ्गस्येति**। पाशाङ्कुश-वराभय-हस्तस्येति फलितार्थः। पुनः कीदृशस्य ? मनोरिति। हँ इत्याकाशबीजं तदात्मकस्येत्यर्थः। तेनाऽत्र कर्णिकान्तरे नभोबीजं स्थितम्। तत् तूक्तरूपेण चिन्तनीयमिति तात्पर्यम्।

सदाशिवं विशेषयति—**गिरिजाभिन्नदेह** इति अर्द्धनारीश्वर इत्यर्थः। **हिमाभः शुक्लवर्णः**। ततश्चार्द्धनारीश्वरत्वाद् वामार्द्धदेहं सुवर्णाभं दक्षिणार्द्धं शुक्लमिति। व्यक्तमाह—

शुक्लाम्बरेण संवीतं तत्र देवं सदाशिवम्।
गिरिजाभिन्नदेहार्द्धं रोप्यहैमशरीरकम् ॥

नभोमण्डलं समास्ते। यद्वा पूर्णेन्दुना ख्याततमम्। "वियद्विष्णुपदो"त्यमरः। विष्णोः किम्भूतस्य ? हिमवर्णाभकान्तिर्विभा यस्य, एवम्भूतस्य नागस्योपरि लसिता तनुर्यस्य ॥ २८ ॥

भुजैरिति। तस्य विष्णोर्मनोरङ्के बीजाकारमूर्त्तेरङ्के पञ्चास्यः शिवो निवसति नित्यमेव। तस्य किम्भूतस्य ? पासाभित्यङ्कुशवरपरिलसितभुजैः शोभिताङ्गस्य।

शरीरस्य चतुर्भिर्भुजैः पाशाङ्कुशादिलसितैः शोभितशरीरस्य दीप्तबुद्धेः उद्दीप्त-ज्ञानस्य ॥ २८ ॥

हिमाभः शुक्लः। सदाशिव इत्याख्यायुक्तः। सिद्धः प्रसिद्धः। तथा तन्त्रान्तरेऽपि—

**त्रिनेत्रः पञ्चास्यो ललितदशभुजो व्याघ्रचर्माम्बराढ्यः**
**सदापूर्वो देवः शिव इति च समाख्यानसिद्धः प्रसिद्धः ॥ २६ ॥**

पद्मकर्णिकास्थ-शाकिनीशक्ति-स्वरूपम्

**सुधासिन्धोः शुद्धा निवसति कमले शाकिनी पीतवस्त्रा**
**शरं चापं पाशं सृणिमपि दधती हस्तपद्मैश्चतुर्भिः ।**

इति । 'तत्र' नभोबीजक्रोणे इत्यर्थः । तथा सदा सुधास्राविचन्द्रमसः कलाधोमुखान्वितमिति । **निर्वाणतन्त्रे** विशुद्धचक्राधिकारे—

यन्त्रमध्ये च वृषभं महासिंहासनं ततः ।
तस्योपरि सदा गौरी दक्षभागे सदाशिवः ॥
त्रिनेत्रः पञ्चवक्त्रश्च प्रतिवक्त्रे त्रिलोचनम् ।
विभूतिभूषिताङ्गश्च रजताचलसोदरः ॥
व्याघ्रचर्मधरो देवः फणिमालाविभूषितः ।

इत्यादि । "तस्योपरि सदागौरी"ति शिवस्याऽर्द्धाङ्गरूपेण स्थितेति । व्यक्तमाह तत्रैव—

या गौरी लोकमाता च शम्भोरर्द्धाङ्गहारिणी ॥

इति । **ललितदशभुज** इति । लावण्येन प्रशंसितदशहस्तयुक्त इत्यर्थः । अत्र देवस्य दशभुजेष्वस्त्रविशेषानभिधानात्—

शूलं टङ्क-कृपाण-वज्र-दहनान् नागेन्द्र-घण्टाङ्कुशान् ।
पाशाभीतिकरं दधानममिताकल्पोज्ज्वलाङ्गं भजे ॥

इति ध्यानान्तरे यान्यस्त्राण्युक्तानि तान्यस्य भुजेषु चिन्तनीयानीति ध्येयम् । **प्रसिद्ध** इति । प्राधान्येन ख्यात इत्यर्थः । अन्यत् सुगमम् ॥ २६ ॥

एतत्पद्मकर्णिकायां शाकिनीशक्तिस्थितिमाह—**सुधासिन्धोरित्यादि** । **कमले** विशुद्धचक्रकर्णिकायां शाकिनीनाम्नी शक्तिर्निवसतीत्यन्वयः । तां

शिवः किम्भूतः ? गिरिजया पार्वत्याऽभिन्नो देहो यस्य, हरगौरीमूर्त्तिरित्यर्थः । पुनः कीदृशः ? हिमस्यमेव शोभा यस्य । त्रिनेत्रः । मनोज्ञा दश भुजा यस्य स तथा । व्याघ्रचर्माम्बरैर्युक्तः । यद्वा व्याघ्रचर्मणा साम्बरेण च युक्तः, हरगौर्यात्मकत्वात् । सदाशिव इति समाख्यानसिद्धः नित्यस्वरूपप्रसिद्धः । योगिनां मनसि प्रकाशः ॥ २६ ॥

सुधासिन्धोरिति । तत्र कमले पीतवस्त्रा शाकिनी निवसति । कीदृशी ? सुधा-

सदाशिवस्थानमिदं विशुद्धं शाकिन्यथेहापि च धूम्रवर्णा ॥ इति ॥ २६ ॥

सुधासिन्धोः शुद्धा शुक्ला । तथा च तन्त्रान्तरे —

**सुधांशोः सम्पूर्णं शशपरिरहितं मण्डलं कर्णिकायां**
**महामोक्षद्वारं श्रियमभिमतशीलस्य शुद्धेन्द्रियस्य ॥ ३० ॥**

विशेषयति—**सुधासिन्धोः शुद्धेति**। सुधासमुद्रसदृश-शुक्लवर्णा। तथाच यथा सुधासिन्धोरमृतमयसुशीतलशक्लत्वं तथा ज्योतिःस्वरूपायाः शाकिन्या उत्तापरहित-शक्लकिरण इति भावः। ध्यानान्तरे शाकिनीं विशेषयति—

देवीं ज्योतिःस्वरूपां त्रिनयनलसितां पञ्चवक्त्राभिरामां
हस्तैः पद्मैश्च पाशं सृणिमपि दधतीं पुस्तकं ज्ञानमुद्राम्।
ध्यायेत् कण्ठस्थपद्मे निखिलपशुजनोन्मादिनीमस्थिसंस्थां
दुग्धान्ने प्रीतियुक्तां मधुमदमुदितां शाकिनीं साधकेन्द्रः॥

इति। "ज्योतिःस्वरूपां" ज्योतिषां स्वभावतः शुक्लवर्णत्वेनेयं शुक्लवर्णा। अत्र ध्यानद्वये द्विविधास्त्रदर्शनादिच्छया विकल्पः। इयं देवी कर्णि-कान्तश्चन्द्रमण्डले वर्त्तते। तदाह **प्रेमयोगतरङ्गिण्याम्**—

तत्रास्ते शाकिनी शक्तिः सुधांशोर्मण्डले शुभे॥

इति। एतत्कर्णिकायां **सुधांशोश्चन्द्रस्य** शशपरिरहितं निष्कलङ्कं **सम्पूर्णं** मण्डलमपि विलसतीति पूर्वक्रियायामन्वयः। मण्डलं विशेषणेन प्रशंसति—महामोक्षेत्यादि। एतन्मण्डलं शुद्धेन्द्रियस्य जितेन्द्रियस्य महामोक्षद्वारं निर्वाणमुक्तिमाहुः। एतच्चिन्तनादियोगमार्गमवलम्ब्य मुक्तिमाप्नोतीति भावः। **श्रियमभिमतशीलस्येति**। श्रियं योगलक्ष्मीमभिमन्यते आकाङ्क्ष-तीति श्रियमभिमतम्, तादृशं शीलं स्वभावो यस्य, तद्रूपस्य शुद्धेन्द्रियस्येति विशिष्टार्थः। अत्र कर्णिकायां चन्द्रमण्डलादिस्थितिप्रकारस्तु—आदौ कर्णिकान्तर्नभोमण्डलं, तन्मध्ये त्रिकोणं, तदन्तश्चन्द्रमण्डलं, तन्मध्ये नभोबीजादिकमिति। तद्यथा—

**सिन्धोश्चन्द्राच्** शुद्धसम्बन्धीययाऽमृतधारया शुद्धा इति यावत्। **चतुर्भिर्हस्तपद्मैः** शरं चापं पाशं सृणिमपि दधती। तस्य पद्मस्य **कर्णिकायां सुधांशोश्चन्द्रस्य** शशपरि-

देवीं ज्योतिःस्वरूपां त्रिनयनविलसत्पञ्चवक्त्रां सुदंष्ट्रीं
हस्ताम्भोजेषु चापं शूलमपि दधतीं पुस्तकं ज्ञानमुद्राम्॥ इति॥

पुस्तकं ज्ञानमुद्रामिति शरं पाशमिति तन्त्रान्तरे उक्तम्। **सुधांशोश्चन्द्रस्य मण्डलम्**। तथाच **स्वच्छन्दसंग्रहे**—

विशुद्धचक्र-चिन्तन-फलम्

**इह स्थाने चित्तं निरवधि विनिधायाऽऽत्मसम्पूर्णयोगः**
**कविर्वाग्मी ज्ञानी स भवति नितरां साधकः शान्तचेताः ।**

कर्णिकायां त्रिकोणस्थं पूर्णचन्द्रं तु चिन्तयेत् ।
हैमाभं गजमारूढमाकाशं तत्र चिन्तयेत् ॥
शुक्लाम्बरेण संवीतं तत्र देवः सदाशिवः ॥

इति । 'शुक्लाम्बरेण संवीत'माकाशमिति ॥ ३० ॥

विशुद्धचक्रचिन्तनफलमाह—इह स्थान इति । **आत्मसम्पूर्णयोग** इति । आत्मनि ब्रह्मणि **सम्पूर्णः** सर्वव्यापकत्वेन परिपूर्णो योगो ज्ञानं यस्य तादृशः । आत्तसम्पूर्णयोग इति पाठे—आत्तः प्राप्तः सम्पूर्णयोगो येनेत्यर्थः । अत एवोक्तं **श्रीमदाचार्येण**—"पूर्णबोधात्मना तिष्ठेत् पूर्णाचलसमुद्रवदि"ति । ततश्च यः **साधक इह स्थाने निरवधि चित्तं विनिधायऽऽत्मसम्पूर्णयोगो भवति, स ज्ञानी** उपदेशं विना सर्वशास्त्रार्थवेत्ता शान्तचेताः शान्तिगुणावलम्बिचित्तः—

दयाभूतेष्वलोलुप्त्वं मार्दवं ह्लीरचापलम् ।
तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ॥

इत्यादि-गुणोपहितचित्त इति यावत् । **त्रिकालानां दर्शीति** । अत्र केचित् ज्ञानलक्षणात्मकालौकिकसन्निकर्षरूप-योगधर्मेण सर्वं पश्यन्तीति । अन्ये तु

**रहितं सम्पूर्णमण्डलमास्ते । कीदृशम् ? महामोक्षद्वारं निर्माणमुक्तिद्वारम । पुनः कीदृशम् ? उल्वणबुद्धिशीलस्य जितेन्द्रियस्य श्रियं दधदित्यर्थः ॥ ३० ॥**

**इह स्थान इति । इह विशुद्धे पद्मे चित्तं यो निदध्यात् तस्य सम्पूर्णयोगविषये ज्ञानं भवतीत्यर्थः । अथवा तत् सर्वमेव सम्पूर्णयोगत्वेनोपदिष्टम् । तदेवाह क्रमेण—**

अमृताद्यास्तथाकाशं चन्द्रबिन्दु तदूर्ध्वतः ।
कण्ठोर्ध्वे परमेशानि लम्बिका चतुरङ्गुले ॥ इति ॥

**मतिशीलस्य ज्ञानशीलयुक्तस्य शुद्धेन्द्रियस्य जनस्य महामोक्षद्वारसम्पत्ति दधत् मण्डलमित्यर्थः ॥ ३० ॥**

**स जीवो विपदामन्धकारस्वरूपाणां ध्वंससूर्यप्रकाशः । अत्र वैखरी शक्तिरस्ति । तथा च भट्टधृततन्त्रे—**

**सूक्ष्मा कुण्डलिनी मध्ये ज्योतिर्मात्रा परा मता ।**
**अश्रोत्रविषयात् तस्मात् किञ्चिदेवोर्ध्वगामिनी ॥**

**त्रिकालानां दर्शी सकलहितकारो रोगशोकप्रमुक्त-**
**श्चिरञ्जीवी जीवी निरवधिविपदां ध्वंसहंसप्रकाशः ॥ ३१ ॥**

तादृशजनस्यात्मप्रत्यक्षे तत्र भासमानसर्वप्रमेयवस्तूनां प्रत्यक्षो भवतीति वदन्ति । **रोगशोकप्रमुक्तः** सिद्धमन्त्रत्वाद् रोगमुक्तश्चिरञ्जीवी छिन्नमाया-पाशत्वाच्छोकरहित इत्यर्थः । स जीवी जनो नितरामतिशयकविर्भवति । एवं सर्वत्र भवति-क्रियान्वयः । **निरवधिविपदां ध्वंसेति** । अवधिः सीमा तद्रहितविपन् निरवधिविपत् । आदिना पापपुण्यरूपकर्मबन्धे नानाविपत्ति-रिति यावत् । तेषां ध्वंसाय विपत्तिप्रागभावासमानकालीनविपत्तिनाशाय फलतो मोक्षाय । हंसस्य सहस्रदलकमलकर्णिकान्तर्गतहंसरूपान्तरात्मनः प्रकाशो यस्य तादृशो भवतीति । स्पष्टमन्यत् ।

**तदयं महावाक्यार्थनिर्णयः**-- कण्ठमूले विशुद्धचक्रं षोडशदलं धूमधूम्ररूप-मारक्तकेसरं रक्तवर्ण-सबिन्दुक-षोडशस्वरयुक्तम् । कर्णिकायां नभोमण्डलं वृत्तरूपं शुक्लवर्णम् । तन्मध्ये त्रिकोणम् तत्र चन्द्रमण्डलम् । तदुपरि हँ इति नभोबीजं शुक्लवर्णं शुक्लाम्बरपरीधानं शुक्लगजारूढं पाशाङ्कुश-वराभय-धरम् । तत्क्रोडे वृषभोपरि स्थितमहासिंहासने सदाशिवोऽर्द्धनारीश्वर-त्वादर्द्धाङ्गसुवर्णाभार्द्धाङ्गशुक्लाभः पञ्चवक्त्रस्त्रिनेत्रः (दशभुजः) शूल-टङ्क-खड्ग-वज्र-दहन-नागेन्द्र-घण्टाङ्कुश-पशाभययुक्त-दशहस्तो व्याघ्रचर्माम्बरो भस्मलिप्तसर्वाङ्गो नागहारशोभितः सुधास्राव्यधोमुखार्द्धचन्द्रशेखरः । एतत्कर्णिकायां चन्द्रमण्डलमध्ये अस्थ्युपरि स्थिता शाकिनीशक्तिः शुक्लवर्णा चतुर्भुजा पाशाङ्कुशधनुःशरकरा पीताम्बरा पञ्चवक्त्रा त्रिनेत्रेति पञ्च-प्रकरणम् ॥ ३१ ॥

**कविर्वाग्मीत्यादि । स जनो निरवधि नित्यमेव विपत्प्राप्तानां त्राणे सूर्य इव तेजस्वी भवति ॥ ३१ ॥**

स्वयंप्रकाशा पश्यन्ती सुषुम्णानाभिमाश्रिता ।
सैव हृत्पङ्कजं प्राप्य मध्यमा नादरूपिणी ॥
ततः संजल्पमात्रा स्यादविभक्तोर्ध्वगामिनी ।
सैवोरुकण्ठतालुस्था शिरोघ्राणरदाश्रिता ॥
जिह्वामूलोष्ठनिस्यूता कृतवर्णपरिग्रहा ।
शब्दप्रपञ्चजननी श्रोत्रग्राह्या तु वैखरी ॥ इति ॥३१॥

भ्रूमध्यस्थिताऽऽज्ञाचक्र-स्वरूपम्

**आज्ञानामाऽम्बुजं तद्धिमकरसदृशं ध्यानधामप्रकाशं**
**हक्षाभ्यां वै कलाभ्यां परिलसितवपुर्नेत्रपत्रं सुशुभ्रम् ।**

इदानीं भ्रूमध्यस्थिताज्ञाचक्रं निरूपयति—**आज्ञानामाऽम्बुजमित्यादि-**सप्तभिः । आज्ञासंक्रमणं तत्र गुरोराज्ञेति कीर्त्तितमि"ति गुरोराज्ञासंक्रमणा-दाज्ञानाम । ततश्च तन्नामकं **तत् प्रसिद्धमम्बुजमास्ते** इति क्रियाध्याहारेणा-ऽन्वयः । एतत् पद्मं भ्रूमध्ये स्थितम् । यद्यथा—

तालुकण्ठं प्रविश्योर्ध्वं भ्रूयुगान्ते सितं शुभम् ।
द्विदलं ह्-क्ष-वर्णाभ्यां मनोऽधिष्ठितमम्बुजम् ॥

इति । पद्मं विशेषयति—**हिमकरसदृ**शमिति । चन्द्रवच्छुक्लवर्णमित्यर्थः । तथा **ध्यानधामप्रकाशं** ध्यानस्य धाम्ना तेजसा तेजोरूपशक्त्या प्रकाशो यस्येत्यर्थः । अत्र ध्यानशक्त्या धामवत् प्रकाशितावयवमित्यर्थः । वर्णानां कलाबीजत्वात् तत्र कलापदप्रयोगः । **नेत्रपत्रं** द्विदलम् । **सुशुभ्रमिति** । हक्षाभ्यां सुशुभ्र-मित्यर्थः । तथाच स्वभावशुभ्र-ह्-क्ष-वर्णयोगेनाऽतिशुभ्रमिति भावः । एतेन ह्-क्ष-वर्णयोरपि शुक्लत्वं सूचितं, शुक्लयोगेनैव शुक्लस्यातिशयत्व-सम्भवात् । यद्वा—आज्ञाचक्रं हिमकरसदृशं चन्द्रस्यामृतमयशीतकिरण-वच्छीतकिरणं तथा सुशुभ्रञ्च हक्षाभ्यां कर्बूरवर्णाभ्यामिति बोद्धव्यम् । तदाह **ईश्वरकार्तिकेयसम्वादे—**

आज्ञाचक्रं तदूर्ध्वे तु शुक्लं द्विदलमण्डितम् ।
कर्बूर-ह्-क्ष-लसितं मनोऽधिष्ठतरञ्जितम् ॥ इति ॥

एतत्कर्णिकायां हाकिनीशक्तिस्थितिमाह—**तन्मध्य** इति । **सा** हाकिनी-

**आज्ञेति । तत् प्रसिद्धं भ्रूमध्ये आज्ञानाम पद्ममास्ते । कीदृशम् ? हिमकरसदृशम् । अतः प्रशस्तशुभ्रम । ध्यानधामनि प्रकाशो यस्य तत् । हकार-क्षकारोपलक्षित-दलाभ्यां परिलसितं वपुर्यस्य । कलाभ्यामिति केचित् पठन्ति । तन्मते हकारक्षकाररूपकलाभ्यां**

आज्ञाचक्रमाह—आज्ञा नामेत्यादिना । **गौतमीये—**"आज्ञासंक्रमणं तत्र गुरोराज्ञेति कीर्त्तितम् ।" इति । चन्द्रतुल्यक्लेदजनकं ध्यानस्थानं प्रकाशस्वरूपम् । हक्षाभ्यां विशुद्धाभ्यां कलाभ्यामक्षराभ्यां युक्तं द्विपत्रमतीवशुभ्रम् । **मायातन्त्रेऽपि—**"आज्ञाख्यं द्विदलं शुभ्रम्"—इति । **दक्षिणामूर्त्तावपि—**

**तन्मध्ये हाकिनी सा शशिसमधवला वक्त्रषट्कं दधाना**
**विद्यां मुद्रां कपालं डमरु जपवटीं बिभ्रती शुद्धचित्ता ॥ ३२ ॥**

नाम्नी प्रसिद्धा । **विद्यां** पुस्तकमुद्राम् । मुद्रां वराभयरूपां, तेनास्या भुजेषु षड्विधायुदर्शनात् षड्भुजेयम् ।

केचित् तु विद्यामुद्रामित्येकविभक्त्यन्तं पठित्वा विद्यायै मुद्रां विद्यामुद्रां व्याख्यामुद्रामिति व्याख्ययाऽस्याश्चतुर्भुजत्वं वदन्ति । किन्तु नानापुस्तके पृथग्विभक्त्यन्तपाठो दृश्यत इति सुधीभिर्विवेच्यम् । ध्यानान्तरेण हाकिनीं विशेषयति –

मज्जास्थां शुक्लवर्णां डमरुकरयुतामक्षसूत्रं कपालं
विद्यां मुद्रां दधानां त्रिनयनविलसद्वक्तषड्वक्त्रयुक्ताम् ।
हारिद्रान्ने प्रसक्तां मधुमदमुदितां शुक्लमब्जं सुरूढां
देवीं देवेन्द्ररत्नाकरमधुमुदितां भावयेद्धाकिनीं ताम् ॥ इति ॥

स्पष्टमन्यत् ॥ ३२ ॥

**स्वरविशिष्टाभ्यामिति । पुनः कीदृशम् ? नेत्रपत्रं द्विपत्रमित्यर्थः । एतत्पद्मे सा प्रसिद्धा हाकिनी निवसति । कीदृशी ? शशिसमधवलवर्णा षण्मुखी च । हस्तैः करणैरेतान् बिभ्रती विद्या-(ज्ञान)-मुद्रा-कपाल-डमरु-जपवटीरिति । शुद्धं चित्तं यस्याः सा तथा ॥ ३२ ॥**

आज्ञायां विद्युदाभायां शुभ्रौ हक्षौ विचिन्तयेत् ।

हाकिनीति । **तन्त्रान्तरेऽपि** –

आज्ञापुर शारदचन्द्रशुभ्रं हाकिन्यथोक्ता शिवगेहमेतत् ।

विद्या पुस्तकम् । मुद्रा ज्ञानमुद्रा अङ्गुष्ठतर्जनीमिलिता । **तन्त्रे**––

आज्ञास्थां शुक्लवर्णां डमरुकसहितामक्षसूत्रं कपालं
विद्यां मुद्रां दधानां त्रिनयनविलसदुक्तषट्कोणयुक्ताम् (?) । इति ।

सूक्ष्मश्च तत्प्रकाशस्वरूपं चेति तत् तथा । **मायातन्त्रेऽपि**––

आज्ञाख्य द्विदलं शुभ्रं कर्णिकायां मनोलयम् । इति ।

सिद्ध नित्यम् । सिद्धशब्दा नित्यार्थ इति वैयाकरणाः ॥ ३२ ॥

आज्ञाचक्रस्थ-मनःस्थितिस्वरूपम्

**एतत्पद्मान्तराले निवसति च मनः सूक्ष्मरूपं प्रसिद्धं**
**योनौ तत्कर्णिकायामितरशिवपदं लिङ्गचिह्नप्रकाशम् ।**

एतत्पद्मे मनः स्थितिमाह—**एतत्पद्मान्तराल** इति । **सूक्ष्मरूपम**तीन्द्रिय-मित्यर्थः । ननु मनसोऽतीन्द्रियत्वात् तत्सत्तायां किं प्रमाणमित्याह—**प्रसिद्धमिति** । अनादिपुरुषपरम्पराप्राप्त-प्रत्यक्षकरणत्वेन प्रसिद्धम् तथा—

सङ्कल्पञ्च विकल्पञ्च कुर्वाणा तु मनो भवेत् ।

इत्यादि-शास्त्रप्रमाणसिद्धञ्च । अत्र मानसस्थानं वक्ष्यमाणवेदादिबीजस्योर्ध्वदेशे, वक्ष्यमाणवचनात् । अतः परं शिवलिङ्गस्थितिमाह—**योनौ** तत्कर्णिकायामिति । कर्णिकान्तस्त्रिकोणे **इतरशिवपदम्** इतरनामकशिवरूपं वस्तु निवसतीति पूर्वक्रियान्वयः । **लिङ्गचिह्नप्रकाशं** लिङ्गरूपेण भासमानमित्यर्थः । इदं लिङ्गं शुक्लवर्णम् । तदाह **भूतशुद्धौ**—

तदन्तःस्थेतरं लिङ्गं स्फटिकाभं त्रिलोचनम् ।। इति ।।

लिङ्गं विशेषयति **विद्युन्मालाविलासमिति** । अत्र प्रणवस्थितिमाह—**परमेत्यादि** । कर्णिकायां वेदादिबीजं प्रणवोऽपि वसतीत्यन्वयः । बीजं विशेषयति—**परमकुलपदमिति** । कुलं शक्तिस्तदत्र त्रिकोणाकारपदं स्थानं परमं विद्युदाकारादिनोत्कृष्टं कुलं पदं यस्य तादृशमित्यर्थः । तथाच तद्बीजं त्रिकोणमध्यवर्त्तीति पर्यवस्यति ।

व्यक्तमाह—कार्णिकायां त्रिकोणस्थमात्मानं प्रणवाकृतिम् ।
ज्वलद्दीपनिभञ्चोर्ध्वं नादरूपं मनोहरम् ।
बिन्दुर्मकाररूपञ्च तदूर्ध्वं मानसालयः ।। इति ।।

**एतदिति । एतत्पद्मे सूक्ष्मरूपेण प्रसिद्धं मनो निवसति । तस्य पद्मस्य कर्णिकायां या योनिस्तस्याभिराख्यः शिव आस्ते, तस्य स्थानमित्यर्थः । कीदृशम् ? लिङ्गचिह्नेन**

इतरशिवपदम्—इं कालं तरति इतीतरं शिवस्य परिशिवस्य पदं, इतरञ्च तत् शिवपदञ्चेति तत् । लिङ्गचिह्नेन लिङ्गाकारेण प्रकाशो यस्य तत् । विद्युन्मालेव प्रकाशो यस्य तत् । **योगिनीहृदये**—

इतरश्च पुनस्तथा शरच्चन्द्रनिभं सदा । इति ।

**आनन्दलहर्यामपि**—तवाऽऽज्ञाचक्रस्थं तपनशशि-कोटिद्युतिधरं
परं शम्भुं वन्दे परिमिलितपार्श्वं परचिता ।

ताराषोढान्यासाधिकारतन्त्रे—

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
ततः परशिवो देवि षट् शिवाः परिकीर्त्तिताः ।।

**विद्युन्माला-विलासं परम-कुल-पदं ब्रह्मसूत्र-प्रबोधं**
**वेदानामादिबीजं स्थिरतरहृदयश्चिन्तयेत् तत् क्रमेण ॥ ३३ ॥**

नन्वत्र परमकुलपदस्य प्रणवाधारत्वेनाऽपृथक्त्वे—

मूलाधारं स्वाधिष्ठानं मणिपूरमनाहतम् ।
विशुद्धमाज्ञाचक्रञ्च बिन्दुर्भूयः कलापदम् ।
निबोधिका तथार्द्धेन्दुर्नादो नादान्त एव च ।
उन्मनी विष्णुवक्त्रञ्च ध्रुवमण्डलिकः शिवः ।
इत्येतत् षोडशाधारं कथितं योगिदुर्लभम् ॥

इति वचने षोडशाधार-गणनायां कलापदस्य पृथगभिधानं कथं सङ्गच्छत इति चेत् । न । तत्कलापदं नाऽऽज्ञाचक्रस्थं किन्तु वक्ष्यमाणमहानादोर्ध्वे शून्यदेशे स्थितमित्येतन्महानादप्रस्तावे स्फुटीकरिष्यामः ।

**ब्रह्मसूत्रप्रबोधमिति** । ब्रह्मसूत्रं चित्रिणी नाडी तस्याः प्रबोधः प्रकाशो येनेत्यर्थः । अत एव पूर्वमुक्तं "प्रणवविलसिता" इति । तदिति । प्रदर्शित-हाकिनी-मन-इतरलिङ्ग-वेदादिबीजरूपं तत् सर्वं स्थिरतरहृदयः सन् क्रमेण चिन्तयेदित्यर्थः ।

क्रमोऽत्र न ग्रन्थकारोक्तपाठक्रमः किन्तु पाठक्रमाच्छाब्दक्रमस्य बलवत्त्वात् प्रदर्शितशब्दक्रमो गृह्यते । एवञ्च पद्मकर्णिकायां हाकिनी शक्ति-

**प्रकाशो यस्य पुनः कीदृशम् ? विद्युन्माला इव प्रकाशो यस्य तत्तथा परमञ्च तत् कुलञ्चेति परमकुलं मूलाधारपद्मं तदेव पदं स्थानान्तरं यस्य । ब्रह्मसूत्रस्य प्रबोधो**

इति मूलाधारादि-विशुद्धपद्मेषु पञ्चशिवन्यासमभिधाय—

आज्ञाचक्रे च देवेशि हक्षवर्णसमन्वितम् ।
परं शिवं ब्रह्मरूपं हाकिनीसहितं न्यसेत् ॥

इत्युक्तम् । स च सहस्रारनिर्गणपरशिवस्यांशस्वरूपी अपरः शिवो ज्ञेयः । अत एव ब्रह्मशिवत्वाद् ब्रह्मस्वरूपमित्युक्तम् । न तु ब्रह्म इत्युक्तम् । **परमकुलपदम्** एतत् पर्यन्तं परमकुलपदमित्युपसंहारेणोक्तम् । तथाच **श्रीमते** —

तत्रैतद् दक्षिणं षट्कमाज्ञापूर्वं कुलोद्भवम् ॥ इति ॥

**आनन्दलहर्यामपि**—महीं मूलाधारे कमपि मणिपूरे हुतवहं
स्थितं स्वाधिष्ठाने हृदि मरुतमाकाशमुपरि ।
मनोऽपि भ्रूमध्ये सकलमपि भित्वा कुलपथं
सहस्रारे पद्मे सह रहसि पत्या विहरसि ॥ इति ॥

अत्र कं जलं स्वाधिष्ठाने मणिपूरे हुतवहमिति व्यत्ययेनाऽन्वयः । ब्रह्मसूत्रेति

आज्ञाचक्र-ध्यानफलम्

**ध्यानात्मा साधकेन्द्रो भवति परपुरे शीघ्रगामी मुनीन्द्रः**
**सर्वज्ञः सर्वदर्शी सकलहितकरः सर्वशास्त्रार्थवेत्ता ।**
**अद्वैताचारवादी विलसित परमापूर्वसिद्धि-प्रसिद्धो**
**दीर्घायुः सोऽपि कर्त्ता त्रिभुवनभवने संहृतौ पालने च ॥ ३४ ॥**

स्तदूर्ध्वे त्रिकोणे इतरलिङ्गं, तदूर्ध्वे त्रिकोणे प्रणवस्तदूर्ध्वे मन इत्येवं क्रमेण चिन्तयेदिति ॥ ३३ ॥

एतद्ध्यानस्य फलमाह—**ध्यानात्मेति ।** उक्तरूपेण ध्यानपरायणः **साधकेन्द्रः परपुरे शीघ्रगामी** भवतीति सर्वत्र क्रियान्वयः । **मुनीन्द्रः** मुनिर्ध्यान-योगादिसम्पन्नस्तदिन्द्रस्तच्छ्रेष्ठः । **सर्वज्ञः** पूर्वोक्तरूपेण सर्वदर्शी शास्त्र-व्यवहाररीत्यनुरूपविवेकबुद्धया पूर्वापरदर्शी । **अद्वैताचारवादीति ।** "पादोऽस्य विश्वा भूतानि" । "तदिदं सर्वं ब्रह्मे"त्यादि श्रुतिवाक्येन—

अहं देवो न चान्योऽस्मि ब्रह्मैवास्मि न शोकभाक् ।

इत्यादिवाक्येन च ब्रह्मैवैकं सद् वस्तु तदन्यदसत्, प्रपञ्चसमुदायस्तु ब्रह्मभासया भासते इत्यवधारणमद्वैतम् । तादृशज्ञानेन य आचारो जीवात्म-परमात्मनोरैक्यचिन्तनादिरूपयोगस्तद्वादो तत्कथनशीलः । स जनोऽद्वैता-चारवादी भवतीति फलितार्थः । परमापूर्वसिद्धिप्रसिद्ध इति । **परमापूर्व-सिद्धिर्**महासिद्धिस्तया **प्रसिद्धः** प्राधान्येन ख्यात इत्यर्थः । **सोऽपि कर्त्ता त्रिभुवनभवने संहृतौ पालने** चेति प्रशंसापरम् । अथवा तादृशसाधकस्य देहान्ते परमात्मनि लयाद् यः सृष्टिस्थितिप्रलयकर्त्ता स एवायं भवतीति तात्पर्यम् ॥ ३४ ॥



यस्मात् । तत् मनोनिवासभूतम् ब्रह्मनाडीवर्त्मस्थितानां सर्वेषामेव तस्मादेव ज्ञानं भवतीत्यर्थः ॥ ३३ ॥

ध्यानात्मेति । एतद्ध्यानपरो जन एवं भवतीत्याह— ध्यानात्मेति । ध्याननिष्ठ इत्यर्थः । स साधकेन्द्रः परपुरे शीघ्रगामी भवति । तत्तद्दिव्यभावविषये परपुरप्रवेशनं पूर्वमेवोक्तं, तत् तु उदासीनानामेव सम्भवतीति नान्येषाम् । अद्वैताचारं वक्तुं शील-मस्येति स तथैव भवति । स साधकः कीदृशः ? प्रकृष्टासु आदिसिद्धिषु समर्थो भवति, अतो दीर्घायुर्भवत्येव । त्रिभुवननिवासिनामुत्पत्तौ संहृतौ पालने वा स कर्त्ता । अतो ब्रह्म-वि णु शिवात्मको भवतीत्यर्थः ॥ ३४ ॥

ब्रह्मसूत्रस्य ब्रह्मनाड्याः प्रबोधो यस्मात् तत् । वेदानामादिबीजं प्रणवः, तदत्र चिन्तयेत् ॥ ३३ ॥

विलसितपरमोऽपूर्वसिद्धप्रसिद्धो यस्य सः ॥ ३४ ॥

आज्ञाचक्रस्थ-प्रणवस्वरूपम्

**तदन्तश्चक्रेऽस्मिन् निवसति सततं शुद्धबुद्धयन्तरात्मा**
**प्रदीपाभ-ज्योतिः प्रणव-विरचना-रूप-वर्ण-प्रकाशः ।**

तदाज्ञाचक्रे प्रणवयोगं विवक्षुरादौ प्रणवं विशेषयति--**तदन्तरिति** अस्यार्थः--**अस्मिन् चक्रे तदन्तस्तस्य** पूर्वोक्तत्रिकोणस्यान्तर्मध्ये यः **प्रणवविरचनारूपवर्णप्रकाशः** प्रणवस्य विरचनारूपेणाऽकारोकारयोः सन्धियोगेन यस्त्रयोदशस्वरसदृशवर्णप्रकाशः सततं निवसति स शुद्धबुद्धयन्तरात्मा इत्यन्वयः । तं विशेषयति--**प्रदीपाभज्योतिरि** । ननु तर्हि किं त्रयोदशस्वरसदृशवर्णमात्रं शुद्धबुद्धयन्तरात्मा इत्यत आह--तदूर्ध्वे **चन्द्रार्द्धस्तदुपरि** विलसद्बिन्दुरूपी मकार इति । तेन तादृशवर्णोपरि अर्द्धचन्द्रबिन्दुयोगेन प्रकृतप्रणवस्वरूपः पर्यवस्यति । **तदूर्ध्वे नादोऽसाविति** प्रणवोर्ध्वेऽवान्तरनादोऽस्तीति । स तु **बलधवल-सुधाधारसन्तान-हासी** बलदेवस्य धवलं सुधाधारसन्तानञ्चोपहसितुं शीलं यस्येत्यर्थादतिशयशुक्लवर्णो नादः ।

**तदन्तरिति । तदूर्ध्वमस्मिन चक्रे सततमेव प्रणवविरचना** प्रणवं विरचयति **येनोकारेण तद्रूपाक्षरप्रकाशो निवसति । कीदृशः ? शुद्धबुद्धीनां** अन्तरात्मस्वरूपः ।

अत्रान्तरात्मा अस्तीत्याह—शुद्धबुद्धेत्यादिना । शुद्धबुद्धः शुद्धस्वभावः स चासौ अन्तरात्मा चेति सः । प्रदीपस्येव आभा दीप्तिर्यस्य ज्योतिषः एवम्भूतो ज्योतिः । प्रणवाभ्यां विरचितौ **स्वरूपवर्णौ** यस्य सः [ वर्णशब्दः ? ] । **श्रीक्रमेऽपि** –

भ्रूमध्ये अन्तरात्मानमरूपं सर्वकारणम् ।
ॐकारज्योतीरूपन्तु प्रदीपाभं जनन्मयम् ।। इति ।।

अत एव प्रकाशः **ज्योतिःस्वरूपः** । तदूर्ध्वे पूर्वोक्तान्तरात्मोर्ध्वे अर्द्धचन्द्रः, चन्द्रार्द्धे बिन्दुरूपी मकारः, तदुपरि नाद इति व्यत्ययेनाऽन्वयः । एवं नादप्राग् बोधिनी, लिखिष्यमाणयोगिनीहृदयात् ज्ञेयाः । असौ नादः अतीवशुक्ल इत्याह--वनेत्यादिना । वनं जलं तद्वद् धवलवर्णः यश्च पीयूषाधारश्चन्द्रः तत्समूहहासी तदधिकशुक्ल इति भावः । **योगिनीहृदयेऽपि--**

इन्दौ तदर्द्धे बोधिन्यां नादे नादान्त एव च ।। इति ।।

**इन्दौ बिन्दौ** । तदर्द्धे अर्द्धचन्द्रे । **स्वच्छन्दसंग्रहेऽपि--**

तत्र बिन्दोर्यथा बिन्द्वावरणे स तदूर्ध्वतः ।
सूर्यकोटिप्रतीकाशमतिदीप्तं महद्गुणम् ।।

तदूर्ध्वे चन्द्रार्द्धस्तदुपरि बिलसद्-बिन्दुरूपी मकार-
स्तदूर्ध्वे नादोऽसौ बलधवल-सुधाधारसन्तान-हासी ॥ ३५ ॥

केचित् तु तदाद्ये नादोऽसाविति पठन्ति, तदाद्ये बिन्दुरूपि-मकारस्याद्ये इति व्याख्यायन्ति च। तदसत्। "तदुपरि विलसद्-विन्दुरूपी मकार" इत्यनेन मकाराद्ये नादप्राप्तौ पुनस्तदुपादानं व्यर्थं स्यात्। परन्त्वसौ नादः प्रणवघटकीभूतनादातिरिक्तो भिद्यमानपरबिन्दोरवयवविशेषः प्रणवोर्ध्वे वर्त्तते। यदि तु विशिष्टप्रणवनिरूपणे तदङ्गप्रत्यङ्गमेव वक्तुमुचितं कथं तदतिरिक्तनादोऽप्रस्तुतः प्रस्तूयते इति चेत्? तर्हि तदाद्ये नादोऽसाविति

**यद्वा शुद्धैजनैरवगतोऽन्तरात्मा अस्य। तथा प्रदीपस्याभा इव ज्योतिर्यस्य तस्य। ओकारस्योपरि चन्द्रार्द्धः, तदुपरि प्रकाशमानबिन्दुरूपो मकारः। एतेन आज्ञाख्यपद्मस्योपरि**

तन्मध्ये शतकोटीनां संख्या योजनपङ्कज[ञ्चक]म्।
तत्कर्णिकायामासीनः शान्त्यतीतेश्वरः प्रभुः॥
पञ्चवक्त्रो दशभुजो विद्युत्पुञ्जनिभाकृतिः।
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिरनुक्रमात्॥
परिवार्य स्थिताश्चैताः शान्त्यतीतेश्वरस्य च।
वामभागे समासीना शान्त्यतीता मनोन्मनी॥
पञ्चवक्त्रधराः सर्वा दशवाह्विन्दुभूषणाः।
बिन्दुतत्त्वं समाख्यातं कोटचर्बुदशतैर्वृतम्॥
अर्द्धचन्द्रस्तदूर्ध्वे तु रो[बो]धिनी तस्य चोपरि।
ज्योत्स्ना ज्योत्स्नावती कान्तिः सुप्रभा विमलापि च॥
अर्द्धचन्द्रस्थिता ह्येताः कलाः पञ्च प्रकीर्त्तिताः।
रु[ब]न्धिनी रो[ब]धिनी बोधा [रोधा]ज्ञानबो[र]धा तमोपहा॥
निबो[रो]धिका कलाः पञ्च कथिताः सुरसुन्दरि।
ब्रह्मादिपरमेशानां परप्रा[मा]प्तिनिबो[रो]धनात्॥
नि[रो]बोधिकेति सा प्रोक्ता तस्या भेदा वरानने।
बो[रो]धिन्याख्यं यदुक्तं ते नादस्तस्योपरि स्थितः॥
पद्मकिञ्जल्कसङ्काशः कोटिसूर्यसमप्रभः।
पुरैः परिवृतोऽसंख्यैर्मध्ये पञ्चकलावृतः॥
इन्धिका दीपिका चैव रेचिता मोचिका तथा।
ऊर्ध्वगा मध्यगा तासां पञ्चमी परमा कला॥

आज्ञाचक्रे प्रणवयोग-निरूपणम्

**इह स्थाने लीने सुसुखसदने चेतसि पुरं**
**निरालम्बां बद्ध्वा परमगुरुसेवासुविदिताम् ।**

पाठोऽभिमन्यते । किन्तु तस्यायमर्थः—तदाद्ये बिन्दुरूपिमकाराद्ये प्रदर्शितोऽसौ नादो बलधवल-सुधाधारसन्तान-हासीति पूर्वोक्तनादमनूद्य बलधवलेत्यादिविशेषणं विधीयते । न तु विशिष्टस्य विधानम् । अतो न पुनरुक्तिदोषः ॥ ३५ ॥

प्रणवं निरूप्येदानीं तद्योगं निरूपयति—इह **स्थान** इति । अस्यार्थः—**योगी** जनः **पुरं** बद्ध्वा कुतुकेनाऽन्तःपुरं संरुध्य तत्प्रकारेणाऽन्तःपुररोधकारणीभूतयोनिमुद्रां बद्ध्वेति यावत् । तेन पुःशब्देन योनिमुद्रा लक्ष्यते । तन्मुद्रां बद्ध्वा इह स्थाने आज्ञाचक्रे **तदभ्यासात्** तस्य प्रणवस्य पुनः पुनश्चिन्तनात् तत्र **चेतसि** प्रणवचतुर्दिक्षु लीने सति ततस्तदनन्तरं तन्मध्यान्तः प्रणवाधारत्रिकोणमध्ये अन्तरन्तरिक्षे **पवनसुहृदां** वह्नीनां कणान् वह्निकणवज्ज्योतिःस्फुलिङ्गान् पश्यति, तेषां मानसप्रत्यक्षो भवतीत्यर्थः । अत्र पुरबन्धनं विना मनसः शुद्धस्थैर्यं न सम्भवतीत्यतः पुरं बद्ध्वेत्युक्तम् । पुरबन्धनकारणयोनिमुद्रालक्षणमाह—

ततो गुह्ये वामपादपार्ष्णिन्तु विनिवेशयेत् ।
तस्योपरि महादेवि दक्षपार्ष्णिं निवेशयेत् ॥

**प्रणवप्रकारसिद्धिः, तस्योपरि असौ नादो वक्राकृतिः । कीदृशः ? जलस्य जलकणस्य धवलामृतश्रेणिरिव हासो दीप्तिस्येति स तथा ॥ ३५ ॥**

**इह स्थान इति । अत्यर्थं सुखसदने इह स्थाने चेतिसि लीने सति परमगुरुसेवा-**

चन्द्रकोटिसमप्रख्यं तन्मध्येऽर्बुदयोजनम् ।
पद्ममध्ये समासीनमूर्ध्वगामिनमीश्वरम् ।
चन्द्रायुतप्रतीकाशं पञ्चवक्त्रं त्रिलोचनम् ॥
इन्धिका[ऐन्दवा]चैराबृतं च शूलपाणिं जटाधरम् ।
तस्योत्सङ्गगतामूर्ध्वगामिनीं परमां कलाम् ॥

ध्यायेदिति शेषः ॥ ३५ ॥

निरालम्बामिति तद्वक्ष्यमाणाम् । **टीकाकारधृततन्त्रे**—

त्यजेत् शैथिल्यमङ्गानां नासाग्रे रोपयेद् दृशौ ।
मुखं विवृणुयात् किञ्चिद् दन्तैर्दन्तान् न संस्पृशेत् ॥

**तदभ्यासाद् योगी पवनसुहृदां पश्यति कणान्**
**ततस्तन्मध्यान्तः प्रविलसितरूपानपि सदा ॥ ३६ ॥**

ऋजुकायशिरोग्रीवः काकचञ्चुपुटेन च ।
आकारेण बहिर्वायुं जठरं परिपूरयेत् ॥
अङ्गुलीभिर्दृढं बद्ध्वा करणानि समाहितः ।
अङ्गुष्ठाभ्यामुभे श्रोत्रे तर्जनीभ्यां विलोचने ॥
नासारन्ध्रे च मध्याभ्यामन्याभिर्वदनं दृढम् ।
बद्ध्वा मे प्राणमनसामेकत्वं तन्मनुं स्मरन् ॥
वारयेन्मारुतं सम्यग् योगोऽयं योगिवल्लभः ।

इति । एवं मुद्रया वायुरोधे मनसः स्थैर्यमाह श्रुतिः । एवं हंसवशान्मनो विचर्यते । इतस्ततो विषयेषु भ्रमति तत्संयमेन मनःसंयमो जायत इत्यर्थः । अथवा पुरं खेचरीमुद्रां बद्ध्वेत्यर्थः । तयापि मनःस्थैर्यं भवति । तदाह--

चित्तं चरति खे यस्माज् जिह्वा चरति खे यतः ।
तेनेयं खेचरी मुद्रा सर्वसिद्धनमस्कृता ॥ इति ॥

अत्र चित्तस्य खेचरत्वान्मनःसंयोगाभावेन विषयज्ञानरहितत्वादुन्मनी भवति । अत एवोक्तम्--

उन्मन्या सहितो योगी न योगी उन्मनीं विना ॥

इति । प्रणवस्य ज्योतिःस्फुलिङ्गवेष्टितत्वं स्पष्टमाहान्यत्र--

तदूर्ध्वे प्रणवाकारमात्मानं दीपसन्निभम् ।
स्फुलिङ्गज्योतिरिङ्गाभैर्वेष्टितं परितः शुभम् ॥

इति । स्थाने कीदृशे ? **सुसुखसदने** निरवच्छिन्नसुखस्य सदनं यत्र तादृशे । पुरं किम्भूताम् ? **निरालम्बां** निर्गतोऽवलम्बो मनसो विषयसम्बन्धो यया तादृशीमित्यर्थः । तथा **परमगुरुसेवासुविदितामिति** । **परमो** गुरु-परम्परा-प्राप्त-योगाभ्यास-निपुणस्तादृशो गुरुस्तस्य सेवाभिजातकृपयोपदेशेन सुविदितामिति फलितार्थः । अत एवोक्तम्--

**सुविदितां निरालम्बां मुद्रां बद्ध्वा सर्वदाभ्यासाद् योगी सन् पवनसुहृदां जीवबुद्धीनां कलां पश्यति । अस्य स्थानस्य चेतोलीनत्वम् । आश्चर्यं महः यदि भवति तदैव**

रसनामन्तरा कुर्यादङ्गे धारयेन्मनः ।
इयं सा परमा मुद्रा निरालम्बेति पञ्चमी ॥ इति ॥

इदं स्थाने एवं मुद्रा बद्ध्वा सदाभ्यासाद् धृतपवनात् पवनसुहृदां वह्नीनां कलाः पश्यति । तदनन्तरं तन्मध्यन्तःप्रविलसितरूपान् ज्वलद्दीपाकारान् पश्यति । पश्चात्

आज्ञाचक्रे परमशिवस्थिति-वर्णनम्

**ज्वलद्-दीपाकारं तदनु च नवीनार्कबहुल-**
**प्रकाशं ज्योतिर्वा गगनधरणीमध्यमिलितम् ।**

गुरुपदेशात् तद् गम्यं नान्यथा शास्त्रकोटिभिः ॥

इति । कणान् किम्भूतान् ? **प्रविलसितरूपान्** प्रकृष्टरूपेण भासमानानिति ॥ ३६ ॥

तादृशयोगिनां वह्निकणावान्तरप्रकारदर्शनमपि भवतीत्याह—**ज्वलद्दीपाकारमिति** । तदनु वह्निकणदर्शनमनु दर्शनानन्तरं ज्योतिः पश्यतीत्यर्थः । ज्योतिर्विशेषयति—ज्वलद्दीपेत्यादि । **गगनधरणीमध्यमिलितमिति** । गगनं "तदूर्ध्वे शङ्खिन्या निवसति शिखरे शून्यदेशे प्रकाशमि"त्यनेन प्रदर्शितशङ्खिनीनाड्यूर्ध्व-शून्यरूप-गगनं धरणी मूलाधारस्थधरामण्डलं तदुभयोर्मध्यमिलितं, मूलाधारादिसहस्रारपर्यन्तव्याप्तं ज्योतिरिति विशिष्टार्थः । **वेति** वाशब्दः समुच्चयार्थः ।

आज्ञाचक्रे सहस्रारवत् परमशिवस्थितिमाह—इह स्थान इति । भगवान् परमशिवः इह **स्थाने साक्षाद भवति** स्वयं वर्त्तत इत्यर्थः । भगवन्तं विशेषयति—**पूर्णविभव** इत्यादि । पूर्णः स्वात्मनि परिपूर्णः **सृष्टिकर्तृत्वाद्यशेषयोग्यतारूप-विभवो** यस्येत्यर्थः ।

अथवा—विभवोऽनन्तसृष्टिप्रपञ्चसमुदायः, पूर्णः सर्वव्यापकत्वेन स्थितस्तादृशो विभवो यस्मादित्यर्थः । "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ती"ति श्रुतेः । यद्वा—विभवो विभुत्वं, पूर्णः सर्वव्यापकत्वेन स्थितस्तादृशो विभवो यस्येत्यर्थः । यद्वा—पूर्णत्वं फलानुपहितविषयितानास्पदेच्छाकत्वं, तादृशो विभवो यस्येति निगूढम् । आत्मातिरिक्त-वस्तूनामनित्यत्वादाकाशादीनां विभुत्वं न सर्वकालव्यापकमिति विशेषः ।

**निरालम्बा मुद्रा भवति । तदनुभवो योगिभिरेव ज्ञायते । ततस्तन्मध्येऽम्बरे पदान् स्थूलान् रूपान् पश्यति ॥ ३६ ॥**

**ज्वलद्दीपाकारानिति । पदान् रूपान् किम्भूतान ? ज्वलद्दीपस्येवाकारो येषां ते तथा । तत्रैव गगनधरणीबीजयोर्मध्ये स्थितं ज्योतिरास्ते । गगनधरणीमण्डलयोरन्तः-**

नवीनसूर्यप्रकाशाकारं गगनभूमध्यमिलितं पश्यति । इह स्थाने भगवान् साक्षात्कारविषयो भवति ॥ ३६ ॥

ननु सर्वव्यापित्वादपरिच्छिन्नस्य ईश्वरस्य कथं परिच्छिन्नस्थाने अभिव्यक्ति-

**इह स्थाने साक्षाद् भवति भगवान् पूर्णविभवो-**
**ऽव्ययः साक्षी वह्नेः शशिमिहिरयोर्मण्डल इव ॥ ३७ ॥**

अत्र परमशिवस्थितिं विशेषेण व्यनक्ति **निर्वाणतन्त्रे**--

एतत्पद्मस्योर्ध्वदेशे ज्ञानपद्मं सुदुर्लभम् ।
पत्रद्वयसमायुक्तं पूर्णचन्द्रस्य मण्डलम् ॥

तथा--शम्भुबीजं हि तन्मध्ये साकारं हंसरूपकम् ।
तथा--एवं हंसो मणिद्वीपे तस्य क्रोडे परः शिवः ॥
वामभागे सिद्धकाली सदानन्दस्वरूपिणी ।

इति । "तस्य क्रोडे" इत्यस्य बिन्दुद्वयरूप-विसर्गमध्ये । तदाह सहस्रार-मुपक्रम्य--

बिन्दुद्वयं तु तन्मध्ये विसर्गरूपमव्ययम् ।
तन्मध्ये शून्यदेशे तु शिवः परमसंज्ञकः ॥

इति । एवं सहस्रारे दर्शनादत्राप्याकाङ्क्षायां तथेति । अत्रानयोः शिव-शक्त्योर्मायाबन्धनाच्छादनेन मकारात्मरूप-परंबिन्दुरूपेण स्थितिर्बोध्या । तदुक्तमाज्ञाचक्रमुपक्रम्य--

उत्कलादिमतेऽत्रैव चणकाकाररूपिणी ।
सृष्टिं करोति भूतानि अत्र स्थित्वा सनातनी ॥

इति । अत्र चणकाकाररूपः परमशिवः सदा वर्त्तते । उत्कलादिमते तु--अत्र स्थित्वा सृष्टिं करोतीत्यर्थः ।

दृष्टान्तमाह--वह्नेरित्यादि । यथाऽर्केन्द्वग्निमण्डले भगवान् वर्त्तते तथाऽत्रापीत्यर्थः । अर्कादिमण्डले भगवतोऽवस्थानं प्रसिद्धम् । यद्वा--वह्नि-शशि-मिहिर-मण्डले सहस्रकमलस्थार्केन्द्वग्निमण्डले तथा चणकाकारेण भगवान् वर्त्तते तद्वदत्रापीति । सहस्रदलेऽर्केन्द्वग्निमण्डलानि प्रदर्शयिष्यन्ते । अत एव पीठपूजायामर्केन्द्वग्निमण्डलोपरि परमात्मज्ञानात्मनोः पूजा विधीयते । परमात्मा परमशिवो ज्ञानात्मा ज्ञानशक्तिस्तदुभयाभिन्नशिवशक्तचात्मकश्चणकाकारबिन्दुरिति ध्येयम् ॥ ३७ ॥

**स्थितं तद्बीजमिति यावत । ज्योतिः कीदृशम् ? प्रातःकालीनसूर्यस्येव प्रकाशो यस्य तत् तथा । इह स्थाने अर्थाच्चेतसि लीने श्रीभगवान् साक्षाद भवति । कीदृशः ? पूर्णो विभवो ज्ञानं यस्मात् । न व्ययतीत्यव्ययः । अतः सर्वेषां साक्षी, एतेषां तत्स्थानाधिवासभूतत्वात् । वह्नि शशि-मिहिरणां मण्डलमिव प्रकासते, अत्यर्थतेजोमयत्वात् ॥ ३७॥**

रित्यत आह—राहुरिति । यथा अम्बरगतो राहुर्न दृश्यते किन्तु शशिसूर्ययोर्मण्डलमेव दृश्तते तथायं चिदात्मा एवम्भूतकर्मविशेषकरणादत्रैव साक्षाद् भवति ॥ ३७ ॥

आज्ञाचक्रे योगेन प्राणत्यागफलम्

**इह स्थाने विष्णोरतुल-परमामोद-मधुरे**
**समारोप्यं प्राणं प्रमुदितमनाः प्राणनिधने ।**

आज्ञाचक्रे योगेन प्राणत्यागफलमाह—इह स्थान इति । अस्यार्थः-- **योगीन्द्रो** जनः **प्राणनिधने** प्राणवियोगकाले **प्रमुदितमना** आत्मानन्देन हृष्टचित्तः सन् इह आज्ञाचक्रे विष्णोर्भगवतः **स्थाने** उपदर्शित-बिन्दुरूपे **प्राणं समारोप्य** अथवा तद्बिन्दौ प्राणं समारोप्य प्राणनिधने सति परं पुरुषं प्रविशतीत्यन्वितार्थः । पुरुषं विशेषयति--नित्यमविनाशिनम् । देवं सृष्टि-स्थितिप्रलयैः क्रीडन्तम् । **अजं** जन्मरहितम् । **त्रिजगतामाद्यम्** । अनेन सर्वेषां पूर्ववर्त्तित्वात् सर्वकारणत्वं सूचितम् । **पुराणं** पुराणपुरुष इति कृत्वा यो निगद्यते स एवायमिति भावः । **वेदान्तविदितमिति** । वेदान्तो ब्रह्मनिरूपक-श्रुतिवाक्यादिस्तज्ज्ञानज्ञाप्यमित्यर्थः ।

**तदयं विष्णोः स्थाने प्राणारोपणप्रकारः** । प्राणवियोगकालं ज्ञात्वा ब्रह्मणि लीनो भवामीत्यानन्दितमना योगासनमासीनः सन् कुम्भकेन वायुं संरुध्य हृदिस्थं जीवात्मानं मूलाधारमानीय गुदमाकुञ्च्य यथोक्तविधानेन कुण्डलिनीमुत्थाप्य मूलादिब्रह्मरन्ध्रान्तं तडिदाकारमानन्दं कुण्डलिनीमयं सूत्ररूपं नादं ध्यात्वा प्राणरूपश्वासं परमात्मकहंसं तन्नादे विलाप्य जीवेन सह चक्रभेदक्रमेणाऽऽज्ञाचक्रमानीय तत्र स्थितायां कुण्डलिन्यां स्थूलसूक्ष्म-क्रमात् पृथिव्यादिप्रपञ्चसमुदायं विलाप्य तां पुनर्जीवात्मना सह तत्र स्थितशिवशक्तिमय-बिन्दुनैकीभावमापाद्य तिष्ठेत; ततो ब्रह्मरन्ध्रभेदेन देहं त्यक्त्वा ब्रह्मणि लीनो भवेदिति ।

**तदयं महावाक्यार्थनिर्णयः** । आज्ञाचक्रं द्विदलं शुक्लवर्णं कर्बूरवर्ण-हक्ष-द्वययुक्तपत्रम् । कर्णिकायां चक्राधिष्ठात्री हाकिनी शक्तिः शुक्लवर्णा

**इह स्थान इति । विष्णोरतुलपरमामोदमधुरे इह स्थाने योगी प्राणवियोगसमायोग-समये प्राणान् मनश्च समारोप्य प्रकृष्टमुदितमनाः सन् परं पुरुषमेव प्रविशति । निर्वाणमुक्तिं प्राप्नोतीति शेषः । कीदृशं परम् ? सर्वेषामन्तर्भूतम् । नित्यम् । दीव्य-**

प्राणनिधने मरणकाले इह स्थाने प्राणान् वायूनूर्ध्वगामिन्या नाड्या समारोप्य वेदान्तविदितं "नित्यं विज्ञानमानन्दं ब्रह्मे"ति श्रुतिविदितं परं नित्यं देवमित्यादिविशेषितं पुरुषं प्रविशति । तथा **गीतायामपि**—प्रयाणकाले मनसाचालेन भक्त्या युक्तो योगबलेन चैव ।

परं नित्यं देवं पुरुषमजमाद्यं त्रिजगतां
पुराणं योगीन्द्रः प्रविशति च वेदान्तविदितम् ॥ ३८ ॥

आज्ञाचक्रोर्ध्वे महानाद-दर्शनफलम्

लयस्थानं वायोस्तदुपरि च महानादरूपं शिवार्द्धं
सिराकारं शान्तं वरदमभयं शुद्धबुद्धि-प्रकाशम् ।

रक्तषड्वक्त्रा त्रिनेत्रा षड्भुजा वराभयाक्षमाला-कपाल-डमरु-पुस्तक-धरा शुक्लपद्मोपरि स्थिता । तदूर्ध्वे त्रिकोणे इतरलिङ्गः शुक्लवर्णो विद्युदाकारः । तदूर्ध्वत्रिकोणे प्रणवाकृतिरन्तरात्मा प्रदीपाभज्योतिः । तस्य चतुर्दिक्ष्वन्तरिक्षे ज्योतिःस्फुलिङ्गबिम्बैर्वेष्टितो ज्वलद्दीपसदृशेन स्वतेजसा मूलादिब्रह्मरन्ध्रान्तप्रकाशकः । तदूर्ध्वे सूक्ष्मरूपं मनः । तदूर्ध्वे चन्द्रमण्डले हंसक्रोडे परमशिवः सशक्तिक इति ॥ इति षष्ठप्रकरणम् ॥ ३८ ॥

इदानीमाज्ञाचक्रोर्ध्वे सहस्रदलकमलाधःस्थानवर्त्ति-कारणावान्तरशरीरं निरूपयितुमिच्छन्नाह--**लयस्थानं वायोरिति** । अस्यार्थः--यदा यस्मिन् काले योगी जनो **गुरुचरणयुगाम्भोजसेवासुशीलो** गुरुचरणयुगाम्भोजस्य सेवया सुशोभनं दृढतरैकाग्रमनोऽभिनिवेशेन सर्वाङ्गसुन्दरं शीलं योगानुष्ठानरूपसद्वृत्तं यस्य तादृशः सन् **तदुपरि** आज्ञाचक्रोर्ध्वे **महानादरूपं** महानादस्य स्वरूपं **पश्येत्**, तदा तस्य योगिनः करकमल-तले सदा सर्वस्मिन् काले वाचां सिद्धिः वाक्यसिद्धिर्भूयादेवेत्यन्वितार्थः । नादं विशेषयति--**लयस्थानं वायोरिति** । अत्र महानादे वायोर्लयः, यस्मादुत्पत्तिस्तत्र लयनियमात् ।

तीति देवम् । न जायते इत्यजम् । त्रिजगतामाद्यम् । पुराणं सृष्टिस्थितिप्रलयकारणम् । वेदान्तविहितं वेदान्तमतमेतदिति ॥ ३८ ॥

लयस्थानमिति । एतत् स्थानं वायोर्विरामभूतम् । तदुपरि महानादरूपं योगी

भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् स तं परं पुरुषमुपैति दिव्यम् ॥ इति ॥ ३८ ॥

लयस्थानं वायोरिति । तदुपरि पूर्वोक्तनादोपरि । चकारात् नादस्यापि लयस्थानम् । यत्र वायुर्नादश्च अर्थेन जगदधरीकृत्य ब्रह्मरन्ध्रस्यादिस्थाने प्रलीयते तद् वायोर्नादस्यापि लयस्थानं नादान्तमिति यावत् । अत्र अर्द्धनारीश्वरोऽस्तीत्याह--महानन्दमित्यादिना । महान् आनन्दो यत्र तं महानन्दस्वरूपम् । शिवार्द्धं शिवाया अर्द्धं शिवस्याकारम् अर्द्धनारीश्वरमित्यर्थः ।

**यदा योगी पश्येद् गुरु-चरणयुगाम्भोज-सेवासुसील-**
**स्तदा वाचां सिद्धिः करकमलतले तस्य भूयात् सदैव ॥ ३९ ॥**

यद्यपि भूतशुद्धचादौ स्पर्शतत्त्वे वायोर्लयस्तस्य च व्योम्नि लयो दृश्यते तथापि कदाचिन् नादेऽपि वायोर्लयो भवतीति । अत्र--

"पृथिवीकाराद्रसवती रसादजायत ककारात् सर्वाणि जलानि तीर्थानि रेफाद् वह्नितत्त्वं नादाद् वायुः सर्वप्राणमयः, बिन्दोर्गगनं सर्वशून्यं शब्दमयं, तेभ्यः पञ्चविंशतिगुणमयतत्त्वं सर्वमिदं विश्वं ब्रह्मकाण्डं कालिकामयमि"ति--

श्रुतिवाक्येन कालीमन्त्रवर्णस्य सूक्ष्मे संहरणकाले नादे वायोर्लयो भवतीति ध्येयम् ।

**शिवादर्धमिति** । शिवस्याऽर्द्धनारीश्वरत्वात् तदर्द्धं शक्तिस्तद्रूपं नादमित्यर्थः । **सिराकारमिति** । दन्यादि-सिरो लाङ्गलं तदाकारमित्यर्थः ।

तदूर्ध्वे तु महानादो लाङ्गलाकृततिरुज्ज्वलः ।

इति **कात्तिकेयेश्वरसंवादवाक्यात्** । यद्यपि "कृषिको लाङ्गलं हलं गोदारणञ्च सीरश्चे"त्यमरकोषे लाङ्गलवाचक-सीरशब्दस्य चतुर्थस्वरयोगित्वं, तथाप्यत्र वचनान्तरैकवाक्यतानुरोधेन तृतीयस्वरयुक्त-सिरःपदेनापि लाङ्गलं प्रतीयते इति । अथवा--शिवाकारमिति । तेन शिवशक्तिमयोऽयं नादः । तदुक्तं **प्रयोगसारे**--

नादात्मना प्रबुद्धा सा निरामयपदोन्मुखी ।
शिवोन्मुखी यदा शक्तिः पुंरूपा सा तदा स्मृता ॥ इति ।

अत एव "तस्या एव शक्तेर्नादबिन्दू सृष्ट्युपयोगावस्थरूपा"विति राघवभट्टनाप्युक्तम् ।

अन्यत्र--सा तत्त्वसंज्ञा चिन्मात्र-ज्योतिषः सन्निधेस्तदा ।
विचिकीर्षुर्घनीभूता क्वचिदभ्येति बिन्दुताम् ॥

इति । तथा श्रीमदाचार्यवाक्यम्--'नाद एव घनीभूतः क्वचिदभ्येति बिन्दुताम्" इति । अत्र सकलवचनपर्यालोचनया शक्तिरेव नादबिन्दुरूपेणा-

**जनो यदा पश्येत्, तदा तस्य वाक्सिद्धिरपि करपद्मतले सदैव भूयात् । कीदृशम् ?**

तथा च श्रीक्रमे--चेतसा संप्रपश्यन्ति नादान्ते वृषभध्वजम् ।
तमर्द्धदेहं वरदं कारणत्रयमातरम् ।
पुटद्वयविनिष्क्रान्तो वायुर्यत्र प्रलीयते ॥

ऽविर्भूता सुवर्णकूण्डलमिव । नादबिन्दुः पुनरेकाकारैवेति निष्कर्षः । अभयवरदमभयवरदातारमित्यर्थः ।

अथ समाधिरूपयोगानुशीलनसाधकानां—

समाधिकालात् प्रागेवं विचिन्त्याऽतिप्रयत्नतः ।
स्थूलसूक्ष्मक्रमात् सर्वं चिदात्मनि विलापयेत् ॥

इत्यार्यवचनेन समाधेः पूर्वं स्थूलसूक्ष्मरूप-सृष्टिप्रपञ्चसमुदाय-चिन्तन-विधानात् तज्ज्ञानस्यावश्यकत्वादत्र वदन्ति । तत्र तावत् पृथिव्यादि-पञ्च-स्थूलरूपाणि मूलादिविशुद्धान्तचक्रे उक्तानि । तदाश्रितत्वात् मूलाधारे भूमण्डले पाद-घ्राणेन्द्रिय-गन्धतत्त्वेति त्रिः । जलमण्डले पाणि-रसनेन्द्रिय-रसतत्त्वेति त्रिः । वह्निमण्डले पायु-चक्षुरिन्द्रिय-रूपतत्त्वेति त्रिः । वायु-मण्डले उपस्थ-त्वगिन्द्रिय-स्पर्शतत्त्वेति त्रिः । नभोमण्डले वाक्-श्रोत्रेन्द्रिय-शब्दतत्त्वेति त्रिरिति समुदायेन पञ्चदशतत्त्वानि वर्त्तन्ते । पृथिव्यादिना मिलित्वा विंशतितत्त्वानि स्थूलानि बोद्धव्यानि । इदानीं सूक्ष्मरूपाणि विधीयन्ते । तत्राज्ञाचक्रे सूक्ष्मरूपं मनः स्वयं प्रदर्शितम् । अपराण्याह कङ्कालमालिनीतन्त्रै आज्ञाचक्रमुपक्रम्य—

मनश्चात्र सदा भाति हाकिनीशक्तिरञ्जितम् ।
बुद्धिप्रकृत्यहङ्कारालङ्कृतं तैजसं परम् ॥

इति । अत्र बुद्धिप्रकृत्यहङ्कारात्मक-सूक्ष्मरूपत्रयाणां स्थितिः प्रतीयते । तत्राहङ्कारस्य न पाठक्रमात् स्थितिः । मूलाधारादिषु सर्वत्र पृथिव्यादि-जनकस्य तत्तद्विलयाधारस्य च जन्यविलाप्ययोरधःस्थितिदर्शनात् पाठक्रमा-च्छाब्दक्रमस्य बलत्त्वाच्च अत्रापि तथा स्थितिः कल्प्यते । तेन "अहङ्कारे हरेद् व्योम सशब्दं तन्महत्यपी"ति वचनाद् व्योम्नो विलयार्थं तद्विलया-धिकरणस्याऽहङ्कारस्य प्रथमोपस्थितत्वादादावहङ्कारस्तदूर्ध्वे बुद्धि-प्रकृत्योः स्थितिः । एतेषां जन्यजनकभावमाह **शारदायाम्** —

मूलभूतात् ततोऽव्यक्ताद् विकृतात् परवस्तुनः ।
आसीत् किल महत्तत्त्वं गुणान्तःकरणात्मकम् ॥

**शिवो** हकारस्तदाकारणम् । **शिवदेव्योरर्द्धमङ्गस्वरूपं यस्य**, हरगौर्यात्मकत्वात् ।

**स्वच्छन्दसंग्रहेऽपि**—हलाकारस्तु नादान्तो[न्ते] भित्त्वा सर्वमिदं जगत् ।
अधःशक्त्या विनिर्भेद्य ऊर्ध्वशक्त्यवसानकः ॥
नाड्यां ब्रह्मविले लीनस्त्वव्यक्तो ध्वनिलक्षणः ।
अतो ब्रह्मविलं ज्ञेयं रुद्रकोटयर्बुदैर्युतम् ॥

अभूत् तस्माहङ्कारस्त्रीविधः सृष्टिभेदतः ।।

इति । 'विकृतादि'ति । इदं परवस्तुनः प्रतिबिम्बत्वेन विकृतिरूपं, महत्तत्त्वादीनां प्रकृतित्वात् प्रकृतिनामकञ्च । अत एवोक्तम्—

प्रकृतिः परमाः शक्तिर्विकृतिः प्रतिबिम्बता ।। इति ।।

तथा "परंब्रह्मात्मप्रकृतिः प्रतिबिम्बस्वरूपिणी"ति प्रागुपदर्शितम् । शारदावचने 'महत्तत्त्वमि'ति । यदेव महत्तत्त्वं सैव बुद्धिः । तदाह **ईशानशिवेन**—

बोद्धव्यलक्षणा सैव प्रकृतिः शक्तिजृम्भिता ।
बुद्धितत्त्वं भवेद् व्यक्तं सात्त्विकं गुणमाश्रिता ।।
सैव बुद्धिर्महन्नाम तत्त्वं सांख्यैः प्रगीयते ।

इति । महत्तत्त्वन्तु गुणान्तःकरणात्मकम् । गुणाः सत्त्वरजस्तमोरूपाः । अन्तःकरणमाह **शारदायाम्** "अन्तःकरणमात्मनः । मनोबुद्धिरहङ्कारश्चित्तञ्च परिकीर्त्तितम् ।" इति एतत्समुदायत्मकं महत्त्वम् । ननु मनसो महत्तत्त्वान्तर्गतत्वे "तदन्तश्चक्रेऽस्मिन् प्रविलसति मनः सूक्ष्मरूपमि"त्यनेन पृथगभिधानं कथं सङ्गच्छत इति चेत् । न । तन्मनो न महत्तत्त्वान्तर्गतं किन्तु तदहङ्कारजन्यमतिरिक्तम् । तदाह—

"यच्चापरं मनस्तत्त्वं ससङ्कल्पविकल्पकम् ।
तैजसादेव तज्जातम्·································।।"

इति **राघवभट्टः** । एवञ्चाज्ञाचक्रस्थमनःपर्यन्तानां क्रमेण स्थितेर्विहितत्वात् तदूर्ध्वेऽहङ्कारादीनां स्थितिर्बोध्या । ततश्चाज्ञाचक्रे हाकिनीतरलिङ्ग-प्रणव-मनोऽहङ्कार-बुद्धि-प्रकृतीनामव्यवहितोर्ध्वोर्ध्वक्रमेण स्थितिनिरूपणात् स्थानविशेषानभिहितस्य पूर्वदर्शितचन्द्रमण्डलस्य तेषामूर्ध्वे स्थितिरिति । ननु तेषामधः कथं न स्थीयते इति चेत् । न । "इन्दुर्ललाटदेशे च तदूर्ध्वे बोधिनी स्वयमि"ति सम्मोहनतन्त्रवचनेन वक्ष्यमाणाज्ञाचक्रोर्ध्ववर्त्तिन्योः समनियतयोरिन्दु-बोधिन्योरधोभागे स्थितिबोधनात् तयोरव्यवधानाय सर्वोर्ध्वे एव तस्य स्थितिरिति । अथाज्ञाचक्रोर्ध्वे कारणरूपमाह **सम्मोहनतन्त्रे** —

इन्दुर्ललाटदेशे च तदूर्ध्वे बोधिनी स्वयम् ।
तदूर्ध्वे भाति नादोऽसावर्द्धचन्द्राकृतिः परः ।।

**शान्तं सौम्यमूर्त्तिम् । वरान् ददाति अभयमपि । शुद्धबुद्धीनां प्रकाशो**

तत्र ब्रह्मशिवो ज्ञेयः शशाङ्कशतसन्निभः ।
दशबाहुस्त्रिनेत्रश्च पञ्चवक्त्रेन्दुशेखरः ।।

तदूर्ध्वे च महानादो लाङ्गलाकृतिरुज्ज्वलः ।
तदूर्ध्वे च कला प्रोक्ता आञ्जीति योगिवल्लभा ।
उन्मनी तु तदूर्ध्वे च यद् गत्वा न निवर्त्तते ।।

इति । 'तदूर्ध्वे बाधिनी'त्यत्र तदूर्ध्वे ललाटोर्ध्वे, आज्ञाचक्रोर्ध्वे इति यावत् । बोधिन्यधःस्थले बिन्दुस्थितिमाह **भूतशुद्धितन्त्रे**--

बिन्दुर्मात्रार्द्धतो देवि तदूर्ध्वे नादसंज्ञितम् ।
लयस्थानं तथा वायोर्महानादं तदूर्ध्वतः ।। इति ।।

'मात्रार्द्धा' शक्तिः, बालसूर्यप्रतिकाशमासीद् बिन्दुमदक्षरम् ।
तदूर्ध्वे चार्द्धमात्रा तु गान्धाररागमनाश्रिता ।।

इति **बृहत्त्रिविक्रमसंहितावचनेनाऽर्द्धमात्रायाः शक्तिवाचकत्वप्रतीतेः । अत्र द्वयोर्वचनयोरेकवाक्यतया याऽर्द्धमात्रा सैव बोधिनीति बोध्यम् । बिन्दु-बोधिनी-नादेति त्रयं बिन्दुमयपरशक्तेः रूपविशेषः । तदाह **शारदायाम्**—

सच्चिदानन्दविभवात् सकलात् परमेश्वरात् ।
आसीच्छक्तिस्ततो नादो नानाद् बिन्दुसमुद्भवः ।।

परशक्तिमयः साक्षात् त्रिधाऽसौ भिद्यते पुनः ।
बिन्दुर्नादो बीजमिति तस्य भेदाः समीरिताः ।।

बिन्दुर्नादात्मको बीजं शक्तिर्नादस्तयोर्मिथः ।
समवायः समाख्यातः सर्वागमविशारदैः ।।

इति । 'परशक्तिमयः' परः शिवस्तेन शिवशक्तिमयो बिन्दुः । अयं ललाटोर्ध्वे स्थितिः । 'बिन्दुर्नादात्मकः' शिवात्मकः । 'बीजं शक्ति'र्बोधिनीरूपमित्यर्थः । नादस्तयोः समवायः सम्बन्धः क्षोभ्यक्षोभकरूपस्तेनाऽयं क्रियाशक्तिरूपः । एतत्त्रयोर्ध्वे महानादः पूर्वोपदर्शितः । 'तदूर्ध्वे च कला प्रोक्ता' इति । कला शक्तिः । आञ्जीति तिर्यग्-रेखारूपमात्राकारेत्यर्थः । इयं शक्तिः **सृष्ट्या-दावाविर्भूता** । तदुक्तं **पञ्चरात्रे**—

**यस्मात् । योगी कीदृशः ? गुरुचरणसेवासुशील इति । गुरुचरणस्यैतदुपदेश**

ब्रह्माणी त्वं परा शक्तिः ब्रह्मणोत्सङ्गगामिना ।
द्वारं सा मोक्षमार्गस्य रोधयित्वा व्यवस्थिता ।। इति ।।

एवमालोक्य सर्गादौ सच्चिदानन्दरूपिणीम् ।
समस्ततत्त्वसंघातां सृष्टयधिष्ठातृरूपिणीम् ।
व्यक्तां करोति नित्यां तां प्रकृतिं परमः पुमान् ॥ इति ॥

अन्यत्र—शिवशक्तिसमायोगादव्यक्तात् परमेश्वरात् ।
आद्या भगवती देवी सैव त्रिपुरसुन्दरी ॥
आसीच्छक्तिस्ततो नादो नादाद बिन्दुसमुद्भवः ।

इति । 'उन्मनी तु तदूर्ध्वे चे'ति । तल्लक्षणमाह—

यत्र गत्वा तु मनसो मनस्त्वं नैव विद्यते ।
उन्मनी सा समाख्याता सर्वतन्त्रेषु गोपिता ॥

इति । ततश्च मनोवृत्तिमद्विषयावलम्बनचेष्टाकालीनविषयावलम्बनसामान्याभावसम्पादकत्वमुन्मनीत्वमिति । सा च द्विविधा सहस्राराधारा निर्वाणकलारूपा, एतत्स्थानस्थिता वर्णावलीरूपा च । तथा च **कङ्कालमालिनीतन्त्रे**—

सहस्रारकर्णिकायां चन्द्रमण्डलमध्यगा ।
सर्वसङ्कल्परहिता कला सप्तदशी भवेत् ।
उन्मनी नाम तस्या हि भवपाशनिकृन्तनी ॥ इति ॥

तथा—उन्मनीञ्च मालावर्णं स्मरणान् मोक्षदायिनी ॥

इति 'मालावर्णं' वर्णावलीरूपमित्यर्थः । उन्मन्यधः समनीमाह **भूतशुद्धौ**—

ततो हि व्यापिका शक्तिराञ्जीति यां विदुर्जनाः ।
समनीमूर्ध्वतस्तस्या उन्मनीं तु तदूर्ध्वतः ॥

इति । इदमपि परशक्तेरवान्तररूपम् । ततश्चाज्ञाचक्रोर्ध्वे द्वितीयबिन्दुः शिवस्वरूपः । तदूर्ध्वे अर्द्धमात्राकारा बोधिनीशक्तिस्तदूर्ध्वे शिवशक्तिसमवायरूपाऽर्द्धचन्द्राकृतिर्नादस्तदूर्ध्वे लाङ्गलाकृतिर्महानादस्तदूर्ध्वे आञ्जीरूपा व्यापिका शक्तिस्तदूर्ध्वे समनी तदूर्ध्वे उन्मनीति क्रमेण सप्त कारणरूपाणि वर्त्तन्ते । अलमतिविस्तरेण प्रकृतमनुसरामः ॥ ३९ ॥

**इत्यर्थः ॥ ३९ ॥**

हलाकारो लाङ्गलसदृशः । 'देवीस्थानं सहस्रारं प्रविशेदकुलं प्रिये ।' इति **श्रीक्रमात्** ॥ ३९ ॥

सहस्रारपद्मस्वरूपम्

**तदूर्ध्वे शङ्खिन्या निवसति शिखरे शून्यदेशे प्रकाशं**
**विसर्गाधः पद्मं दशशतदलं पूर्णचन्द्रातिशुभ्रम् ।**

सहस्रदलपद्मं निरूपयन्नाह—**तदूर्ध्वं** इति दशभिः । **तदूर्ध्वं** प्रागुपदर्शित-सवषामूर्ध्वे । पूर्वोपदर्शित-शङ्खिनीनाड्याः **शिखरे** मस्तके । शून्यदेशे नाड्य-नावृतस्थाने । तेन सुषुम्णाया अप्यूर्ध्वं इति सूचितम् । **विसर्गस्याधः** दशशत-दलं सहस्रदलं पद्मं **निवसतीत्यन्वयः** । विसर्गन्तु ब्रह्मरन्ध्रस्योर्ध्वभागे—

तस्मिन् रन्ध्रे विसर्गञ्च नित्यानन्दं निरञ्जनम् ।

इत्यादि-वक्ष्यमाणवचनाद् । पद्मं विशेषयति—**पूर्णचन्द्रेत्यादि** । **ल-काराद्यर्वर्णैः प्रविलसितवपुरिति** । अत्र ल-कारग्रहणं न विलोमेन वर्णचिन्तनार्थं, किन्तु ( ल-कारग्रहणं ) क्ष-कारपरित्यागार्थम् । तत्त्यागबीजं हि वर्णानां सहस्रदले स्थितिरावर्त्तनेनैव घटते । एवञ्च क्ष-कारसहितैकपञ्चाशद्-वर्णानां विंशत्यावर्त्तनेन विंशत्यधिक-सहस्रसंख्या भवन्ति । ऊनविंशत्या-वर्त्तनेन त्वेकत्रिंशन्न्यूनसहस्रसंख्या भवन्ति । अतः क्षकारपरित्यागेन तत् समाधीयते । तेन अ-कारादि-ल-कारान्त-पञ्चाशद्वर्णा अनुलोमेन विंशत्या-वर्त्तनेन सहस्रदले चिन्तनीया इति ध्येयम् । अनुलोमेन वर्णचिन्तनं व्यक्त-माह **कङ्कालमालिनीतन्त्रे**—

**तदूर्ध्व इति । तस्य महानादस्योर्ध्वे शङ्खिन्याश्च शिखरसमदेशे शून्यदेशे निरालम्बे विसर्गस्याधः प्रकाशरूपं सहस्रदलपद्मं निवसति । अत्यर्थपूर्णचन्द्र इव शुभ्रम् । अधो-**

अकुलाख्यसहस्रारपद्ममाह—तदूर्ध्वे इत्यादिना । शङ्खिन्या नाड्याः शिखरे अग्रे शून्यदेशे चित्रिण्या मेरुदण्डस्य च शून्यदेशे । तेन सहस्रारं न मेरुदण्डस्य मध्ये न वा चित्रिण्या ग्रथितम् । **मायातन्त्रेऽपि**—

मूलादिषट्सरोजातं चित्रिणाग्रथितं प्रिये ।
लिङ्गाधोर्ध्वनाभिवक्षःकण्ठभ्रूमध्यदेशजम् ॥ इति ॥

अत एव **स्वच्छन्दसंग्रहे**—

द्वादशावर्णं ललाटोर्ध्वं रूपेणार्द्धावसानकम् ।
द्व्यङ्गुलोर्ध्वशिरोदेशं परं व्योम प्रकीर्त्तितम् ॥ इति ॥

**श्रीक्रमे**—आसव्यकर्णाद् देवेशि शङ्खिनी च शिरोपरि ।

हृलाद्यनन्तरम्—शङ्खिनीनालं संप्राप्य चास्थिशून्यं बिभर्त्ति यः ।
अमृत यत् त्रिकूटस्थं परमानन्दलक्षणम् ॥
सहस्रारं महापद्मं रक्तकिञ्जल्कशोभितम् ।
द्रुतहेमाम्बुजं जातधारपातप्रवर्षणम् ? ॥
विसर्गाधः पद्ममिति सर्गः शक्तिर्निशाकरः ॥

**अधोवक्त्रं कान्तं तरुणरविकला-कान्तिकिञ्जल्कपुञ्जं**
**लकाराद्यैर्वर्णैः प्रविलसित-वपुः केवलानन्द-रूपम् ॥ ४० ॥**

सहस्रारं महापद्मं शुक्लवर्णमधोमुखम् ।
अ-कारादि-क्षकारान्तैः स्फुरद्वर्णैर्विराजितम् ॥

इति । अत्र 'क्ष-कारान्तै'रित्यत्राऽन्तशब्दस्याऽवसानार्थकत्वात् क्ष-कारोऽन्तेऽवसाने यस्येति बहुव्रीहिणा क्ष-कारं विहाय ल-कारान्त-पञ्चाशद्वर्णयोगः । अथवा—ल-काराद्यैरिति लकारान्त-पञ्चाशद्-वर्णानामकथादित्रिरेखावद् वामावर्त्तेन यथायोग्यावर्त्तनेन विन्यासः । **कङ्कालमालिनी**वचनन्तु दक्षिणावर्त्तेन वर्णविन्यासविधायकमिति वचनद्वयाविरोधः । अत्र पञ्चाशद्-वर्णानां रूपविशेषानभिधानात् तद्वर्णमय्या मातृकायाः शुक्लवर्णत्वदर्शनात् तेऽप्यत्र शुक्लत्वेनैव चिन्तनीया इति ध्येयम् । ललाटाद्यैर्वर्णैरिति पाठे तु ललाट-शब्देन मातृकान्यासोक्त-ललाटवर्णोऽकारस्तदाद्यैर्वर्णैरित्यर्थः । एतत्पक्षे लकारं विहाय अकारादिक्षकारन्त-पञ्चाशद्वर्णयोगो बोध्यः; सर्वत्र पञ्चाशद्वर्णग्रहणे अन्त्यलकारत्यागदर्शनात् ।

अत्र केचित् **प्रविलसिततनुरिति** पठन्ति । तत्र "वा पुंसि पद्ममि"ति दर्शनात् पुंसि विशिष्टस्य पद्ममित्यस्य विशेषणता तनुरित्यस्यापि पुंस्त्वमिति व्याख्यायन्ति च । तन्न । एतच्श्लोकस्थ-निवसति-क्रियायाः कर्त्तृत्वेन पद्ममिति बिन्द्वन्तनिर्देशात् क्लीबलिङ्गप्रयोग एव प्रतीयते, न तु पुंलिङ्ग-प्रयोगस्तथात्वे विसर्गान्तो भवितुमर्हति; अतस्तद्विशेषणस्य तनुशब्दस्य क्लीबत्वमवश्यं वाच्यम् । तथात्वे बिन्द्वन्तता न भवति, निर्बिन्दुत्वे छन्दः-पातस्तस्माद् वपुरित्येव पाठः । स्पष्टमन्यत् ॥ ४० ॥

**वक्त्रम्** । **कान्तम्** । **तरुणरविकला** इव कान्तं किञ्जलकपुञ्जं यस्य । **ललाटाद्यै**-र्ललाटादिविन्यस्तैरकारादिपञ्चाशद्वर्णैर्विशतिप्राकारेण परिलसिततनुः केवलानन्द-स्वरूपमिति ॥ ४० ॥

इति नारदोक्तेन विसर्गस्याधः सहस्रारपद्मधारिण्या ऊर्ध्वस्थितायाः शक्तेरधः पद्मम् । निर्वाणपद्धत्यामपि—कुलरूपं भवेच्छक्तिः विसर्गमण्डलं प्रिये ।
सहस्रारं महापद्मं रक्तकिञ्जलकशोभितम् ॥ इति ॥

**सारसमुच्चये**ऽपि "सहस्रारपद्मं विसर्गादधस्तात्" इति पूर्णपूर्णेन्दुशुभ्रं पूर्णं पीयूषपूर्णं तच्च पूर्णेन्दुशुभ्रञ्चेति तत् । बालसूर्यरश्मिसमः केसरसमूहो यस्य तत् । पद्मन्तु शुक्लवर्णम् ।

यथा **मायातन्त्रे**—महाशून्ये सहस्रारं निशाकरसहोदरम् ।
अधोवक्त्रं कर्णिकायाश्चन्द्रोर्ध्वे शक्तिरूपिणी ॥ इति ॥

ललाटाद्यैरकाराद्यैः समस्तमातृकाक्षरैर्युक्तम् ॥ ४० ॥

सहस्रदलकर्णिकास्थ-चन्द्रमण्डल-स्वरूपम्

**समास्ते तस्यान्तः शशपरिरहितः शुद्धसम्पूर्णचन्द्रः**
**स्फुरज्ज्योत्स्नाजालः परमरसचयस्निग्धसन्तानहासी ।**

सहस्रदलकमलकर्णिकायां चन्द्रमण्डलस्थितिमाह—**समास्त** इति । **तस्यान्तस्तत्र** पद्मे अन्तर्मध्ये शुद्धो निर्मलोदयविशिष्टः । चन्द्रं विशेषयति—स्फुरदित्यादि । **परमसचय-स्निग्धसन्तानहासीति** । **स्निग्धः** आर्द्रसदृशभावस्तस्य सन्तानो विस्तारो यत्रेत्यर्थः । ततश्च परमामृतरसचयेनोत्तापहीनतया स्निग्ध-सन्तानयुक्तो हासवदानन्दमयकिरणविशिष्ट इत्यर्थः । अथ चन्द्रमण्डलस्याध ऊर्ध्वे अन्तरात्मादीनां स्थितिमाह **कङ्कालमालिनीतन्त्रे** सहस्रारमुपक्रम्य—

तत्कर्णिकायां देवेशि अन्तरात्मा ततो गुरुः ।
सूर्यस्य मण्डलं चैव चन्द्रमण्डलमेव च ॥
ततो वायुर्महानामा ब्रह्मरन्ध्रं ततः स्मृतम् ।
तस्मिन् रन्ध्रे विशर्गञ्च नित्यानन्दं निरञ्जनम् ॥
तदूर्ध्वे शङ्खिनी देवी सृष्टिस्थित्यन्तकारिणी ।

इति । **यस्यान्तश्चन्द्रमण्डलमध्ये सततं** निरन्तरं **विद्युदाकाररूपं त्रिकोणं स्फुरतीति । तदन्तःशून्यमिति** । अन्तर्मध्ये शून्यं यस्य तदन्तःशून्यं परंबिन्दुशरीरं, तस्मिन् त्रिकोणे अन्तःशून्यं तदन्तःशून्यं त्रिकोणमध्यवर्त्ति परंबिन्दु-

**समास्त इति । तस्य पद्मस्याऽन्तर्मध्ये शशरहितोऽत्यर्थदीप्तिमान् सम्पूर्णचन्द्रः समास्ते । कीदृशः ? स्फुरन्ति ज्योत्स्नाजालानि यस्य स तथा । परमरसचयेन शिवसम्बन्धाय परमामृतसमूहेन अत्यर्थस्निग्धहासो दीप्तिर्यस्य । तस्य चन्द्रस्य मध्ये त्रिकोणं**

तन्मध्ये पूर्णचन्द्रः । स्निग्धसन्तानं हसतीति स्निग्धसन्तानहासी । तस्यान्तश्चन्द्रमण्डलस्य मध्ये त्रिकोणम् । तत् तु अकथादित्रिरेखात्मकम् । तत्त्रिकोणे हलक्षवर्णत्रयम् । तदन्तस्त्रिकोणमध्ये शून्यं परलिङ्गं परलिङ्गस्य तेजोवर्णत्वात् शून्यं शून्याकारमिति यावत् । तथाच **गौतमीये** —

सहस्रारे हिमनिभे सर्ववर्णविभूषिते ।
अकथादित्रिरेखासु हलक्षत्रयभूषिते ॥
तन्मध्ये परबिन्दुञ्च सृष्टिस्थितिलयात्मकम् ॥ इति ॥

**योगिनीहृदये**—सूक्ष्मरूपं समस्तार्णवृतं परमलिङ्गकम् ।
बिन्दुरूपं परमानन्दकन्दं नित्यसदोदितम् ॥ इति ॥

**त्रिकोणं तस्यान्तः स्फुरति च सततं विद्युदाकाररूपं**
**तदन्तःशून्यं तत् सकलसुरगणैः सेवितं चातिगुप्तम् ॥ ४१ ॥**

सहस्रदलकर्णिकास्थ-परमशिवस्थिति-स्वरूपम्

**सुगुप्तं तद् यत्नादतिशय-परमामोद-सन्तान-राशेः**
**परं कन्दं सूक्ष्मं सकल-शशिकला-शुद्धरूपप्रकाशम् ।**

रूपं शून्यं स्फुरतीति क्रियान्वयः । यद्वा तदन्तस्त्रिकोणमध्ये शून्ये परंबिन्दु-रूपं स्फुरति । अत एवोक्तं **तोडलतन्त्रे** षष्ठोल्लासे—

निराकारं परं ज्योतिर्बिन्दुञ्चाव्ययसंज्ञकम् ।
बिन्दुशब्देन शून्यं स्यात् तथा च गुणसूचकम् ॥

इति । अत्र "आहारनिर्हारविहारयोगाः सुसंवृता धर्मविदा तु कार्या" इति वचनाद् योगस्य गोपनेनाऽनुष्ठानविधानात् तदन्तःशून्यमतिगुप्तं यथा स्यात् तथा **सकलसुरगणैः सेवित**मारारधितमित्यर्थः ॥ ४१ ॥

**सुगुप्तमिति** । अस्यायमर्थः--वक्ष्यमाणकेशाग्रकोटिभागैकरूपत्वादति-गुप्तं **तत्** शून्यं यत्नात् चिरनिरन्तरध्यानाद्यनुष्ठानात् **सकलशशिकलाशुद्ध-रूपप्रकाशं** कला निर्वाणकला तया सह वर्त्तमाना या शशिनश्चन्द्रस्य षोडशी कला तया निर्मलरूपप्रकाशो यस्य तदित्यर्थः । तथा चातिसूक्ष्ममपि त्रिकोणान्तर्वर्त्त्यमाकलानिर्वाणकलासहित-परंबिन्दुरूपान्तःशून्यं ध्यानेन प्रकाशितं भवतीति भावः । **परमामोदसन्तानराशेर्मोक्षस्य परं कन्दं** प्रधान-मूलमित्यर्थः । सुगुप्तमित्यत्र सुगोप्यमिति पाठे यत्नादित्यस्य उभयत्राऽन्वय इति ध्येयम् ।

**सर्वदैव स्फुरति । विद्युदाकार इव रूपं यस्य त्रिकोणान्तर्मध्ये तत् शून्याकारं विलसति । सकलसुरगणैः सेवितम् । शून्यत्वादतिगुह्यम् ॥ ४१ ॥**

**सुगुप्तमिति । सुगोप्यं तत् शून्याकारशिवलिङ्गं यत्नाद् गोप्यं गोपनीय कस्मैचित् यावत्तावन्न कथनीयम् । कीदृशम् ? अतिशयपरमामोदसन्तानजनकामृतराशेः प्रकृष्ट-**

व्याख्यातञ्च **अमृतानन्दस्वामिना** यथा परलिङ्गस्य पर तेजोरूपत्वादवर्णत्वं सूक्ष्म-रूपम्, अतीन्द्रियगोचरम्, अत एव बिन्दुरूपं समस्तार्णवृतम् । नित्यत्वञ्च मातृकाया उत्पत्तिविनाशरहितत्वात् । पदात् पदं प्राप्य उदितं प्रकाशितम् । तदेवाह--परमा-मोदसन्तानराशेः परं कन्दं सूक्ष्ममिति । शशिसमस्तकलाशुद्धरूपम् ॥ ४१ ॥

"नित्यं विज्ञानमानन्दं ब्रह्म" इति श्रुतिबोधितो यः परशिवः स द्विधा भूत्वा परमशिवाख्यः सगुणः शिवः प्रकाशात्मा अत्र परबिन्दुचक्रे निवसति इत्याह--इह

**इह स्थाने देवः परमशिवसमाख्यानसिद्धः प्रसिद्धः**
**खरूपी सर्वात्मा रसविरसमितोऽज्ञानमोहान्धहंसः ॥ ४२ ॥**

केचित् तु त्रिकोणान्तःशून्यं शून्यस्थानम्। तत् तु कीदृशम् ? सकल-शशिकलाशुद्धरूपप्रकाशम्। शशिनश्चन्द्रस्य सकलकलाः समस्तकलाः षोडश-कलास्तस्याः शुद्धं शुक्लं यद् रूपं तदेव प्रकाशो यस्य तादृशपूर्णचन्द्रप्रकाश-मित्यर्थ इति व्याख्यायन्ति। तच्चिन्त्यम्। तत्त्रिकोणस्य पूर्णचन्द्रमण्डल-मध्यवर्त्तित्वकथनेनैव त्रिकोणमध्यस्थानस्य पूर्णचन्द्रतुल्यप्रकाशप्राप्तौ पुनस्तत् कथनं व्यर्थं स्यात्। किञ्च सकलसुरगणैः सेवितमित्यनेन शून्य स्थानस्य सेवनं न युज्यते किन्तु त्रिकोणान्तर्बिन्दोरेव सेव्यत्वमिति। यदि तु तच्छून्यस्थानस्य परंबिन्दोरधिष्ठानात् सेव्यत्वमित्युच्यते, तदा तत् शून्यस्थानमेव नो भवतीति सुधीभिर्भाव्यम्।

सहस्रदलकर्णिकायां परमशिवस्थितिमाह--इह **स्थान** इति। इह **स्थाने** कर्णिकायामित्यर्थः। **परमशिवसमाख्यानसिद्धः** परमशिवनाम्ना ख्यातो **देवः**, वर्त्तत इति शेषः। देवं विशेषयति--खरूपीति। ब्रह्मरूपी ब्रह्ममयमिति यावत्। **सर्वात्मा** सर्वेषां जीवानामात्मा जीवात्मस्वरूपः, जीवात्म-परमात्म-नोर्वस्तुतो भेदाभावात् य आत्मा स एव जीवः। अत एवोक्त**मध्यात्म-रामायणे**--

जीवात्मा परमात्मा च पर्यायो नात्र भेदधीः।
आचार्यशास्त्रोपदेशादैक्यज्ञानं यदा भवेत्।
आत्मनोर्जीवपरयोर्मूलाऽविद्या तदैव तु॥

इति। श्रुतिरपि--"तत्त्वमसी"ति वाक्येन तत्-त्वं-पदयोरेकार्थत्वं दर्शयति। **रसविरसमित** इति। **रसः** परमानन्दरसः, विरसस्तद्वैलक्षण्येन शिवशक्ति-

मूलं, तस्मादेव परमामृतं क्षरति। सूक्ष्ममलक्ष्यम्। शशिनः सकलकलैवांशरूपं प्रकाशो यस्य। इह स्थान एव परमशिवत्वेन सिद्धः सर्वैर्विदितः। प्रसिद्धः योगिनां हृदये

स्थाने इत्यादिना। परशिवसमाख्यानसिद्धप्रसिद्धं यस्य सः। तदुक्तं **सङ्केतपद्धत्याम्**--

अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः।
हकारोऽन्त्यकलारूपो विमर्शाख्यः प्रकीर्तितः।
अनयोः सामरस्यं यत् परस्मिन् महसि स्फुटम्॥ इति॥

तत्र अमृतानन्दस्वामिनः—"अ इति ब्रह्म" इति श्रुत्या अकारवाच्यः परशिवस्त-स्यांशित्वेन परमशिवोऽप्यकारवाच्यः प्रकाशरूपब्रह्मांशित्वात्। विमर्शाख्यः विमर्शिनी [सा] शक्तिरित्यन्तेनाहुः। सर्वात्मा "पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम्" इति

**सुधाधारा-सारं निरवधि विमुञ्चन्नतितरां**
**यतेः स्वात्मज्ञानं दिशति भगवान् निर्मलमतेः ।**

योगजन्य-सामरस्यानन्दरूपः, तदुभयरसमितः प्राप्त इत्यर्थः । अथवा--**रसः** प्रथमोपस्थितत्वेन विषयरसस्तस्मिन् **विरसा** हेयताबुद्धिर्येन रसेन स परमानन्दरसस्तमित इत्यर्थः । **अज्ञानमोहान्धहंसः** अज्ञानमोहान्धकारनाशकत्वाद् हंसः सूर्यरूप इत्यर्थः ॥ ४२ ॥

**सुधाधारासारं निरवधि विमुञ्चन्नतितरामिति** । **निरवधि** निरन्तरमतितरामतिशयं यथा स्यात् तथा **सुधाधारारूपसारं विमुञ्चन्नि**त्यर्थः । अथवा—सुधाया आधारश्चन्द्रस्तस्मादास्त्रियते निःस्त्रियते, तत् सुधाधारासारं शुक्लवर्णामृतकिरणं विमुञ्चन् प्रकाशयन्नित्यर्थः । एतद्विशेषणेन विशेष्यस्य चन्द्रवत् शुक्लवर्णत्वं सूचितम् । यद्वा - आसार्यते निःसार्यते उच्चार्यते इति यावत्, आसारं वाक्यं, सुधाधारया सह आसारं सुधाधारासारं सुधामयवाक्यमित्यर्थः । ततश्च **निरवधि** सर्वस्मिन् काले **अतितरां** मोहनाशायाऽतिप्रबलतरां सुधामयवाक्यं विमुञ्चन्नुच्चरन् सन् यतेरुपास्यदेवतायां नियतमनसः स्वात्मज्ञानं स्वं जीवात्मा तेन सह आत्मा परमात्मा ज्ञायतेऽनेनेति । अत्राऽपृथक्साहित्येन जोवात्माभेदेन परमात्मज्ञानकारणं तारकब्रह्ममन्त्रमुपदिशतीति समुदायार्थः । अथवा —सुधा कृपामृतं तद्धारया युक्तं सारं ब्रह्ममन्त्रात्मक-सारवाक्यमुच्चरन् स्वात्मज्ञानं दिशतीत्यर्थः । एतद्विशेषणेन तारकमन्त्रोपदेशकत्वज्ञानपनात्तु विशेष्यगुरुत्वं सूचितम् । एवञ्चेतद्विशेषणं, पूर्वश्लोकोक्त-परमशिवस्यैव गुरुत्वात् । अत एव **ललितारहस्ये** गुरुतत्त्वनिरूपणे--

**प्रकाशनपरः । खरूपी शून्याकारः । सर्वेषामात्मा । रसविरसमितः परमरसेनाच्छादितः । अज्ञानेन यो मोहान्धकारस्तत्र हंसः सूर्यसदृशः ॥ ४२ ॥**

**सुधाधारासारमिति । स भगवान् शिवो निर्मलमतेर्योगिनो जनस्यात्मविषयस्य**

श्रुतेः । रसो द्रव्यविशेषः पर इति प्रसिद्धस्तस्य विसरः समूहस्तद्वत् सितः शुक्लः । 'सन्दोहविसरव्रजाः'' इत्यमरः । अज्ञानमोहान्धस्य हंसः सूर्यः ॥ ४२ ॥

सुधाधारासारमतितरां विमुञ्चन् यतेः स्वात्मज्ञानं स्वस्य शिवाभेदज्ञानं दिशति । भगवान् ऐश्वर्यादियुक्तः स परमशिवः परमहंस इत्याह--समास्ते इत्यादिना । सकलसुखसमूहस्य लहरी तरङ्गः तस्य परीवाहः । "जलोच्छ्वासाः परीवाहाः"

**समास्ते सर्वेशः सकल-सुख-सन्तान-लहरी-**
**परीवाहो हंसः परम इति नाम्ना परिचितः ॥ ४३ ॥**

ख्यातोऽयं पुरुषश्रेष्ठः सर्वदात्मरतिप्रियः ।
इत्यादिना गुरुं वर्णयित्वा--
तेजोरूपा प्रिया तस्य ब्रह्मवर्त्मसुदुर्लभा ।
परमं ब्रह्म यत्पादपङ्कजद्युतिवैभवम् ॥

इत्युक्त्या शोभाधिक्येन पदपङ्कजयोः परब्रह्मरूप-परमशिवस्य हृत्पद्मादिति व्याख्यातम् (?) । तेजोरूप-गुरुप्रियायाः पादद्वयारोहणं गुरुहृदय एव न त्वन्यपुरुषस्येति । अतो यः परमशिवः स एव गुरुरिति तात्पर्यम् । निर्वाणतन्त्रे--

शिरः पद्मे महादेवस्तथैव परमो गुरुः ।
तत्समो नास्ति देवेशि पूज्यो हि भुवनत्रये ॥
तदंशं चिन्तयेद् देवि बाह्ये गुरुचतुष्टयम् ।

इति । अयं परमशिवः कर्णिकान्तस्त्रिकोणस्य बहिरधः कथ्यमानहंसः इत्यस्योपरि वर्त्तते । पूर्वोक्तकङ्का**लमालिनीतन्त्रे** –

तत्कर्णिकायां देवेशि अन्तरात्मा ततो गुरुः ।
सूर्यस्य मण्डलं तत्र चन्द्रमण्डलमेव च ॥

इत्यादिनाक्रमेण महाशङ्खिनीशक्तिपर्यन्तस्थितिमभिधाय--
तस्याऽधस्ताच्च देवेशि चन्द्रमण्डलमध्यगम् ।
त्रिकोणं तत्र सञ्चिन्त्य क्षयहीनात्मिका कला ॥
तन्मध्ये कुटिला निर्वाणाख्यसप्तदशी कला ॥

इति वचनेन चन्द्रमण्डलान्तस्त्रिकोणेऽमाकलादीनामेव स्थितेरुक्तत्वात् । गुरोस्तु तदधोऽन्तरात्मन उपरि स्थितिरुवाच ।

ननु कङ्कालमालिनीवचनेऽन्तरात्मन उपरि गुरोः स्थितिरुक्ता, तत् कथं हंसस्योर्ध्वे गुरोः स्थितिरुच्यते इति चेत् । न । हंसान्तरात्मनोरेकार्थत्वात् । तथा हि **कङ्कालमालिनीतन्त्रे** गुरुध्यानं यथा--सहस्रदल-मध्यस्थमन्तरात्मानमुत्तमम् ।

**परमात्मनि ज्ञानं दिशति । कीदृशम् ? सुधाधारासारम् अमृतधाराया आसारमिव ।**

**इत्यमरः । परम इति नाम्ना समुचितः परमहंस इत्यर्थः । स च मायावच्छिन्नः । तथाच तन्त्रान्तरे –**

तस्योपरि नादबिन्दोर्मध्ये सिंहासनोज्ज्वलम् ।
तस्मिन् निजगुरुं नित्यम् ........ ... ... ॥ इत्यादि ॥

**तथान्यत्र**—हंसपीठे मन्त्रमये स्वगुरुं शिवरूपिणम् ।
अमुकानन्दनाथान्तं स्मरेत्तन्नामपूर्वकम् ॥ इति ॥

**तथाऽन्नदाकल्पे**—शिरः पद्मे शुक्ले दशशतदले केसरगते
पतत्रीणां तल्पे परमशिवरूपं निजगुरुम् । इति ॥

एतेषां वचनानां पर्यालोचनया हंसान्तरात्मनोरभेदः प्रतीयते । एवं '**परमशिवरूपं निजगुरुमि**'त्यनेन परमशिव एव गुरुरिति भाव्यम् । यत् तु सहस्रदलमुपक्रम्य--

तन्मध्ये तु त्रिकोणं स्याद् विद्युदाकाररूपकम् ।
बिन्दुद्वयञ्च तन्मध्ये विसर्गरूपमव्ययम् ।
तन्मध्ये शून्यदेशे तु शिवः परमसंज्ञकः ॥

इति वचनं परमशिवस्य त्रिकोणमध्ये स्थितिबोधकम्, तत्, मतभेदेन सहस्रदल - कमलाभिन्नतत्कर्णिकाधोवर्त्त्यूर्ध्वमुख-द्वादशदल - कर्णिकान्तस्त्रिकोणे गुरुस्थितिबोधकम् । एतत् **पादुकापञ्चकस्तोत्रे** स्पष्टीकृतम् । न तूर्ध्वसहस्रदलकर्णिकात्रिकोणे गुरुस्थितिबोधकम्; मध्यत्रिकोणस्याऽधस्तन-त्रिकोणान्तरे तद्रूपेण स्थितेः । अन्यथा **कङ्कालमालिनीतन्त्रवचन**विरोधात् ।

**समास्ते सर्वेश** इति । अत्र कर्णिकायां सर्वेषामीश्वरः समास्ते इत्यर्थः । नन्वत्र परमशिवस्थितिकथनेनैव ईश्वरस्थितिरुक्ता, तत् कथं पुनः सर्वेशस्थितिरुच्यते इत्यतः सर्वेशं विशेषयति—हंस इति । अयं सर्वेशो हंसो हंस इत्यानुपूर्विक-मन्त्राकारः । तदुक्तं **प्रपञ्चसारे**--

सा तत्त्वसंज्ञा चिन्मात्रा ज्योतिषः सन्निधेस्तदा ।
विचिकीर्षुर्घनीभूता क्वचिदभ्येति बिन्दुताम् ॥

**यद्वा--अमृतधारासारं निरवधि अतितरामत्यर्थं विमुञ्चन्निति भगवतो विशेषणम् ।**

सरोरुहमधोमुखं प्रविलसत् सहस्रच्छदं
क्रमादरुणकेसरप्रकरभास्वरनिर्मलम् ।
तदन्तरपि चिन्तयेदमृतरोचिसो मण्डले ।
पुराणपुरुष पर परिगतं महामायया ॥ इति ॥

कालेन भिद्यमानस्तु स बिन्दुर्भवति त्रिधा ।
बिन्दुर्दक्षिणभागश्च वामभागो विसर्गकः ।।

तेन दक्षिणवामाख्यौ भागौ पुं-स्त्रीविशेषितौ ।
स हङ्कारः पुमान् प्रोक्तः स इति प्रकृतिः स्मृता ।।

बिन्दुः पुरुष इत्युक्तो विसर्गः प्रकृतिः स्मृता ।
पुं-प्रकृत्यात्मको हंसस्तदात्मकमिदं जगत् ।। इति ।।

सुव्यक्तमाह **महाकालीतन्त्रे** प्रथमपटले--

सहस्रारान्तरे शून्ये दिव्यतोरणशोभिते ।
चन्द्रमण्डलमध्ये तु हंसवर्णद्वयोपरि ।
शुद्धस्फटिकसङ्काशं शुद्धक्षौमविराजितम् ।।

इत्यादि । 'अत्र हंसवर्णद्वयोपरी'ति सुव्यक्तम् । अथवा **हंसः परम** इति **नाम्ना परिचितः** हंसः इति नाम्ना परम इति नाम्ना च परिचितो विख्यात इत्यर्थः । अत एव ग्रन्थकारेणोनपञ्चाशच्छ्लोके 'केचिद्धंसाख्यमेतदि'त्यनेन हंसनामकत्वं स्वमुक्तम् । यद्वा--हंसोऽन्ते यस्य स हंसोऽन्तः, हंसोऽन्तश्चासौ परमश्चेति कर्मधारयेण शाकपार्थिवादित्वान् मध्यपदलोपे हंसःपरम इति सिद्धम् । तेन परमहंस इति नाम्ना परिचित इत्यर्थः । अतएवोक्तमागम-**कल्पद्रुमे**—

असौ परमहंसाख्यो युक्तस्थावरजङ्गमः ।।

इति । **सकलसुखसन्तानलहरीपरीवाह** इति । सर्वप्रकारसुखं सकलसुखं तस्य सन्तानो विस्तारः, स एव लहरी श्रेणी परि सर्वतोभावेनोह्यते उत्तरोत्तरकालस्थायित्वेन प्रकाश्यते यस्मिन्नित्यर्थः । ततश्च श्रेण्याकारेण सर्वव्यापक-सर्वप्रकार-सुखविशिष्ट इति यावत् । अयं हंसः परमशिवस्यावोवर्त्तीत्युक्तं प्राक् ।। ४३ ।।

**एवंभूतः सर्वेशः शिवः सर्वेषां सुखसमूहलहरीबहिर्भूतः सन् समास्ते । कीदृशः ? नाम्ना परमहंस इति परिचितः ।। ४३ ।।**

मायोपाधिविनिर्मुक्तं शुद्धमित्यभिधीयते ।
मायासम्बन्धतश्चेशो जीवोऽविद्यावशस्तथा ।।

इति वेदान्तोक्तेः ।। ४३ ।।

सहस्रारकर्णिकायाः सर्वदेवस्थानत्व-वर्णनम्

**शिवस्थानं शैवाः परमपुरुषं वैष्णवगणा**
**लपन्तीति प्रायो हरिहरपदं केचिदपरे।**
**पदं देव्या देवीचरणयुगलाम्भोजरसिका**
**मुनीन्द्रा अप्यन्ये प्रकृतिपुरुषस्थानममलम् ॥ ४४ ॥**

एतत्कर्णिकायां सर्वदेवतामय-हंसादीनामधिष्ठानात् शैवशाक्तादि-सकलोपासकानामुपास्यदेवतास्थानमित्याह--**शिवस्थानमिति** । **शैवाः** शिवोपासका एतत्पद्मं **शिवस्थानं लपन्ति** वदन्तीत्यर्थः। **परमपुरुष** परम-पुरुषस्य विष्णोः स्थानम्, इदमर्थतद्धितप्रत्ययेन सिद्धम्। **केचिदिति**। ये हरिहरोपासकास्ते शैवा वैष्णवाश्च ते केचित्। अपरे केवलशिवविष्णू-पासकेतरा **हरिपदं लपन्ति**। अतः सर्वे शैवा वैष्णवाः केवलशिवस्थानं केवलविष्णुस्थानं न वदन्तीत्यभिप्रायेणेत्युक्तम्। **अन्ये** युगलभजनशीलाः। यद्वा—**अन्ये** हंसमन्त्रोपासका **मुनीन्द्राः प्रकृतिपुरुषस्थानं** हंसस्य प्रकृति-पुरुषोभयरूपत्वात् तदधिष्ठितस्थानं लपन्तीत्यर्थः। एतत्प्रदर्शनमात्रं तत्स्थाने सर्वदेवतामय-परमबिन्दोरधिष्ठानात्, यो तद्देवतोपासकः स तद्देवतास्थानं वदतीति बोध्यम् ॥ ४४ ॥

शिवस्थानमिति। एतत् परमशिवस्थान शैवा जनाः शिवस्थानमिति लपन्ति। वैष्णवाः परमपुरुषं परा प्रकृष्टा मा लक्ष्मीर्यस्य एवम्भूतपुरुषं वदन्ति। अपरे केचित् प्रायो हरिहरपदमिति लपन्ति। अन्ये देवीचरणयुगलानन्दरसिका देव्याः पदं लपन्ति। वस्तुतस्तु नानाप्रकारभावनाया एको निरञ्जन एवं निर्वाच्यः। अतएव "ऋजुकुटिल-नानापथजुषां नृणामेको गम्य" इति पुष्पदन्तोक्तं साधु संगच्छते ॥ ४४ ॥

शिव इत्यादि स्पष्टम्। परमपुरुषमिति भारते—

अव्यक्तं मन इत्याहु शरीरं परमुच्यते।
अव्यक्तके पुरे शेते पुरुषस्तेन चोच्यते ॥ इति ॥ ४४ ॥

सहस्रार-ज्ञान-फलम्

**इदं स्थानं ज्ञात्वा नियतनिजचित्तो नरवरो**
**न भूयात् संसारे पुनरपि न बद्धस्त्रिभुवने ।**

सहस्रारज्ञानफलमाह--**इदं स्थानमिति** । साङ्गोपाङ्गरूपेणैतत्स्थानज्ञानं भवतीति भावः । **नियतनिजचित्त** इति । **नियतं** तत्र निजचित्तं येनेत्यर्थः । **न भूयात् संसारे** मुक्तो भवतीति भावः । यतः क्वचिदपि न **बद्धस्त्रिभुवने** इति हेतुगर्भविशेषणम् । बद्धः पुण्यपापरूप-मायापाशबद्धः तदुक्तं **भागवते**--

कर्मणि क्रियमाणे तु गुणैरात्मनि मन्यते ।
तदस्य संसृतिर्बन्धः पारतन्त्र्यञ्च तत् स्मृतम् ॥

इति । **भगवद्गीतायामपि**--

स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ॥

इति । ततश्च पुण्यपाप-भोगार्थं शरीरधारणाद् बन्धः । स च स्वर्गे पुण्यभोगार्थं पाताले पापभोगार्थं मर्त्ये उभयभोगार्थं भवतीति । तत्त्वज्ञानिनान्तु बन्ध-हेतुभूत-पुण्यपापानुदयात् सञ्चित-पुण्यपापक्षयाच्च क्वचिदपि कस्मिन् कालेऽपि त्रिभुवने स्वर्गमर्त्त्य-पाताले न बद्धो न शरीरी भवति । सोऽयं प्रारब्धकर्मभोगपर्यन्तं जीवन्मुक्तः सन् तिष्ठति देहान्ते मुक्तो भवतीति भावः । यस्य पुण्यपापानुदयमाह **कुलार्णवे**--

अश्वमेधशतेनापि ब्रह्महत्याशतेन च ।
पुण्यपापैर्न लिप्यन्ते येषां ब्रह्म हृदि स्थितम् ॥

इति । तथा **भगवद्गीतायाम्**--

नैव तस्य कृतेनाऽर्थो नाकृतेनेह कश्चन ।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥

इति । 'तस्य' प्रकान्त-तत्त्वज्ञानिनः 'कृतेन' कर्मणा पुण्यं नास्ति, न चा'कृतेन' नित्यकर्मणा कश्चन प्रत्यवायोऽस्तीति **सुबोधिनी**व्याख्यानम् । सञ्चित-

**इदं स्थानमिति । इह एवं शास्त्रे एतत् स्थानं ज्ञात्वा नियतं संयतं निजचित्तं येन सः परमात्मचिन्तापरो नरवरः संसारे न भूयात् क्वचिदपि त्रिभुवने बद्धो न भवति । संयतमनसस्तस्य कृतिनः समस्ता शक्तिः स्यात् । तदेवाह--सर्वदैव कर्त्तुं**

**खगतिः खेचरः स्यात् । यद्वा खे ब्रह्मणि गतिः स्यात् । "खं ब्रह्म" इत्याद्युर-**

**समग्रा शक्तिः स्यान्नियममनसस्तस्य कृतिनः**
**सदा कर्त्तुं हर्त्तुं खगतिरपि वाणी सुविमला ॥ ४५ ॥**

अमाकला-स्वरूपम्

**अत्रास्ते शिशुसूर्य-सोदरकला चन्द्रस्य सा षोडशी**
**शुद्धा नीरज-सूक्ष्म-तन्तु-शतधाभागैकरूपा परा ।**

पुण्यपाप-क्षयमाह श्रुतिः--"तस्मिन् मनसि लीने गते सङ्कल्पे दग्धे पुण्यपापे सदाशिवः शक्त्यात्मा शान्त" इति । भगवद्गीतायामपि—"ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा ॥" इति । तस्य समग्रा सर्वकार्यसाधिका शक्तिः स्यात् । शक्तिकार्यं दर्शयति--**सदा कर्त्तुमिति** । अभीष्टकार्यं कर्त्तुं तथा हर्त्तुमनिष्टं कर्त्तुं संहर्त्तुं च शक्तिः, खगतिराकाशपथगमनं, **सुविमला** मधुरगद्यपद्यमयी वाणी स्यादिति सर्वत्राऽन्वयः ॥ ४५ ॥

अथाऽत्र पूर्वं 'तदन्तःशून्यं तदि'त्यनेन 'सकलशशिकला-शुद्धरूपप्रकाश-मि'त्यनेन च सहस्रारकर्णिकान्तस्त्रिकोणे अमाकला-निर्वाणकला-परंबिन्दू-नामधिष्ठानं छलेनाभिहितम् । इदानीं तेषां स्वरूपेण इतरभेदकविशेषणेन च स्पष्टयितुमिच्छन्नादावमाकलास्वरूपमाह-अत्रास्त इति । **शिशुसूर्यसोदरे**-त्यनेन कलाया रक्तवर्णत्व ज्ञापितम् । **चन्द्रस्य सा** षोडशीत्यनेन इयममा-

**हर्त्तुं स क्षमो भवति । खगतिराकाशगतिरपि भवति । अपि वाणी सर्वाह्लादिनी सुविमलशक्तिरूपा भवतीति ॥ ४५ ॥**

**अत्रास्त इति । अत्रैव पद्मे चन्द्रस्य सा प्रसिद्धा अमानाम्नी षोडशी कला आस्ते । कीदृशी ? प्रातःकालीनसूर्यस्येव कला दीप्तिर्यस्याः सा तथा । शुद्धा निर्विकारत्वात् ।**

निषत् ॥ ४५ ॥

ऊर्ध्वशक्तिरूपां कलामाह--तत्रास्ते इत्यादिना । प्रातःसूर्यतुल्या चन्द्रस्न षोडश-कला अमा नाम्नीति यावत् ।

अमा षोडशभागेन देवि प्रोक्ता महाकला ।
संस्थिता परमा माया देहिनां देहधारिणी ॥

**विद्युत्कोटि-समान - कोमल - तनूर्विद्योतिताऽधोमुखी**
**नित्यानन्द - परम्पराऽतिविगलत् - पीयूषधारा - धरा ॥ ४६ ॥**

कलेति ज्ञापितम् । **नीरज**[सूक्ष्म]तन्तुर्मृणालसूत्रं तस्य शतभागो दीर्घकालेनेति बोध्यम् । **शुद्धा** कलङ्करहिता । **परा** चिच्छक्तिरूपा, चिच्छक्तेरेवेदं रूपम् । अत एवाक्तं **प्रभासखण्डे**--

संस्थिता परमा माया देहिनां देहधारिणी ॥

इति । अमाविशेषणं--नित्यान**न्दपरम्परेति** । ब्रह्मपरम्परोत्पन्नेत्यर्थः । **अतिविगलत्पीयूषधाराधरा** अतिशयामृतस्राविणीत्यर्थः । यद्वा--**नित्यानन्दपरम्परातिविगलत्पीयूषधाराधरेत्येक**विशेषणम् । अस्यार्थः--परं बिन्दुरूपं शिवः, परा प्रकृतिः शक्तिः, आनन्देन समरसानन्देन परम्पराभ्यां शिवशक्तिभ्यामतिविगलन्ती या पीयूषधरा परामृतधारा नित्यं निरन्तरं तादृशधारामिव धारां धारयतीत्यर्थः । स्पष्टमन्यत् ॥ ४६ ॥

**मृणालतन्तोः सूक्ष्मशतभागस्येव एकरूपं यस्याः । परा प्रकृष्टा । अथवा पश्यन्ती-मध्यमा-वैखरी-समष्टिरूपा । पुनः कीदृशी ? विद्युद्दामसमानकोमलं तनुर्यस्याः । नित्योदिता, क्षयोदवरहितत्वात् । अधोमुखी । पूर्णानन्दपरम्परयाऽतिप्रकाशमाना या पीयूषधारा तदाश्रया, परम्पराक्रमेण शिव-सम्बन्धिपीयूष धाराधरेत्यर्थः ॥ ४६ ॥**

इति वचनात् । सूक्ष्मत्वात् शतधाविभक्तमृणालतन्तुभागैकरूपा क्षयोदरहितत्वान्नित्या । अधोमुखी सृष्टचन्मुखी । पूर्णानन्दसमूहो यस्याम् । या अभिगलत्पीयूषधारा तस्या धरा ।

**स्वच्छन्दसंग्रहे**--ब्रह्मणी त्वं परा शक्तिः ब्रह्मणोत्सङ्गगामिनी ।
द्वारं सा मोक्षमार्गस्य रोधयित्वा व्यवस्थिता ॥
तां भित्वा तु वरारोहे ऊर्ध्वशक्ति परां शिवाम् ।
शक्तितत्त्वात्मिकां देवीं प्रसुप्तभुजगाकृतिम् ॥
शक्तितत्त्वं समाख्यातं भुवनैराश्रितं महत् ।
शक्ति तत्त्वात्मिकामूर्ध्वशक्तेरुपरि संस्थिताम् ॥ इति ॥

**योगिनीहृदयेऽपि**--शक्तौ पुनर्व्यापिकायां समनोन्मनीगोचरे ॥ इति ॥ ४६ ॥

निर्वाणकला-स्वरूपम्

**निर्वाणाख्यकला परा परतरा साऽऽस्ते तदन्तर्गता**
**केशाग्रस्य सहस्रधा-विभजितस्यैकांशरूपा सती ।**
**भूतानामधिदैवतं भगवती नित्यप्रबोधोदया**
**चन्द्रार्द्धाङ्ग-समान-भङ्गुरवती सर्वार्कतुल्यप्रभा ॥ ४७ ॥**

निर्वाणकलास्वरूपमाह--**निर्वाणाख्यकलेति** । **सा परा** परतरा पराऽमा कला अस्या अपि **परतरा** श्रेष्ठा । परादिति पाठे सर्वश्रेष्ठेत्यर्थः । सा **तदन्तर्गता** अमाकलायाः क्रोडे स्थिता ; "तन्मध्ये कुटिला निर्वाणाख्यसप्तदशी कले"ति पूर्वोक्तवचनात् । केशाग्रस्येत्यादि । केशाग्रस्य सहस्रभागैकभागरूप-सूक्ष्मा सती आस्ते इत्यन्वयः । **भूतानां** सर्वप्राणिना**मधिदैवतं** हार्दचैतन्यस्वरूपेत्यर्थः । **नित्यप्रबोधोदया** तत्त्वज्ञानसम्पादयित्री । **चन्द्रादर्धाङ्गसमानभङ्गुरवती** चन्द्रार्द्धाङ्गरूपामाकलावत् कुटिलाकारेत्यर्थः । **सर्वार्कतुल्यप्रभा** एकदा द्वादशसूर्योदये यादृक् प्रकाशस्तादृशप्रकाशमाना रक्तवर्णा च ॥ ४७ ॥

**निर्वाणाख्येति । सा निर्वाणनाम्नी कला अमाकलान्तर्गता सती आस्ते । कीदृशी ? परात् परतराप्रकृष्टादपि प्रकृष्टतरा । सहस्रप्रकारेण विभजितस्य केशाग्रस्यैकांशरूपा । सती शोभना । पुनः कीदृशी ? भूतानामधिदेवतास्वरूपा भगवतीस्वरूपा च । नित्यः प्रबोधोदयो यस्याः सा तथा । चन्द्रलेखेन भङ्गुरं वक्राकारं वपुर्यस्याः सा तथा, द्वादशादित्यप्रभा इत्यर्थः ॥ ४७ ॥**

व्यापिनीतत्त्वं शक्तितत्त्वस्वरूपमाह--निर्वाणाख्य इत्यादिना । सूक्ष्मत्वात् सहस्रधा विभजितस्य केशभागस्यैकभागतुल्या । अर्द्धचन्द्रवत् कुटिला । सर्वार्कतुल्यप्रभा द्वादशादित्यप्रभा । परात् षोडश्याः कलायाः परतः । तदन्तर्गता चन्द्रमण्डलान्तर्गता न तु षोडश्याः कलाया अन्तर्गता । यथा सारसमुच्चये षोडशीं कलामभिप्रेत्य—

> एतस्याः परतः स्थिता भगवती भूताधिदेवाधिपा ।
> निर्वाणाख्यकलार्द्धचन्द्रकुटिला सा षोडशान्तर्गता ।
> बालाग्रस्य सहस्रधा विभजितस्यैकेन भागेन या
> सूक्ष्मत्वात् सदृशी त्रिलोकजननी या द्वादशार्कप्रभा ॥ इति ॥

स्वच्छन्दसंग्रहे—षोडशान्तमिति ख्यातं व्योमस्थानेन्दुमण्डलम् ॥ इति ॥

तत्रैव—आधारं भुवनानाञ्च प्रवक्ष्यामि समासतः ।
> सूक्ष्मा चैव सुसूक्ष्मा च तथा चैवामृता मृता ॥
> चतुर्दिक्षु स्थितास्तासां मध्यस्था व्यापिनी स्मृता ।
> पञ्चवक्त्रा त्रिनेत्रा च सुतेजस्का च पञ्चमी ॥इति॥ ४७ ॥

परंबिन्दु-स्वरूपम्

**एतस्या मध्यदेशे विलसति परमाऽपूर्वनिर्वाणशक्तिः**
**कोट्यादित्यप्रकाशा त्रिभुवनजननी कोटिभागैकरूपा ।**

परंबिन्दुस्वरूपमाह्--एतस्या इति । एतस्या निर्वाणकलाया **मध्यदेशे** कोडे **अपूर्वा** सृष्टेरादावाविर्भूतत्वात् किञ्चिदपि नास्ति पूर्वं यस्यास्तादृशी **परमा** परंब्रह्मशक्तिरूपा **निर्वाणशक्तिर्विलसती**त्यर्थः । निर्वाणशक्ति विशेषयति --**कोट्यादित्यप्रकाशेति । त्रिभुवनजननी** स्वर्ग-मर्त्य-पातालादिप्रपञ्चसमुदायस्योत्पत्तिस्थानरूपेत्यर्थः । यतः केशाग्रस्य **कोटिभागैकभागरूपा** अतोऽतिसूक्ष्मा । **निरवधिविगलत्प्रेमधाराधरेति । प्रेम** आनन्दार्द्रभावप्रफुल्लता । सामरस्यानन्दार्द्रभावप्रफुल्लताजनिता या परामृतधारा **निरवधि** निरन्तरं विगलन्ती तादृशधारां धारयतीत्यर्थः । **सर्वेषां** जीवभूतेति । एतस्या अंश एव जीवः । तदुक्तं यथा—

ज्वलदग्नेर्यथा देवि स्फुरन्ति विस्फुलिङ्गकाः ।
तस्याश्च्युतं परंबिन्दुर्यदा भूमौ पतत्यपि ।
तदैव सहसा देवि संज्ञायुक्तो भवत्यपि ॥

इति । 'तस्याः' शिवशक्तयात्मकपरंबिन्द्वन्तर्गतशक्तयाः । 'संज्ञायुक्तो' जीवनामा भवतीत्यर्थः । स्पष्टमन्यत् । इयं निर्वाणक्तिर्निर्वाणकलाधःस्थाने नादरूपनिबोधिकोपरि वर्त्तते ।

**एतस्या इति । एतस्याः कलाया मध्यदेशे परमापूर्वनिर्वाणशक्तिर्विलसति । कीदृशी ? कोट्यादित्य इव प्रकाशो यस्याः । त्रिभुवनजननी, सर्वेषामाधारभूतत्वात् । केशाग्रस्यापि कोटिभागैकभागरूपा, अतिसूक्ष्मत्वात्; अतो गुह्या । निरवधि विलसत्प्रेम-**

**समनापदमाह**—एतस्या इत्यादिना । पर उत्तरकालं मातीति परमा ध्वंसरहिता नित्येत्यर्थः । सूक्ष्मत्वात् केशाग्रस्य कोटिभागैकभागरूपा अतः अतिगुह्या । निरवधि विलसन्ती या अमृतधारा तस्या धरा । मुनिमनसि लसिततत्त्वबोधं शिवाभेदज्ञानं वहन्ती ।

अहन्तेदन्तयोरैक्यमिति विद्या निगद्यते ॥

इति **परापञ्चाशिका** वचनाद् ब्रह्मणोऽतिनैकट्येन तथोक्तम् । तथा—

समनान्तर्वरारोहे पाशजालमनन्तकम् ।

**केशाग्रस्याऽतिसूक्ष्मा निरवधि विगलत्प्रेमधाराधरा सा**
**सर्वेषां जीवभूता मुनिमनसि मुदा तत्त्वबोधं वहन्ती ॥ ४८ ॥**

तद् यथा—निर्वाणाभ्य(ख्या)न्तरगता वह्निरूपा निबोधिका ।
नादोऽव्यक्तस्तदुपरि कोटचादित्यसमप्रभा ।
निर्वाणशक्तिः परमा सर्वेषां योनिरूपिणी ॥
अस्यां शक्तौ शिवो ज्ञेयो निर्विकारो निरञ्जनः ।
अत्रैव कुण्डली शक्तिर्विहरेत् परमात्मना ॥

इति । 'निबोधिका'ऽव्यक्तनादात्मिका वह्निरूपा । तथा हि नादस्य त्रिविधावस्था । "तमोगुणाधिक्येन केवलध्वन्यात्मकोऽव्यक्तनादः । रज-आधिक्येन किञ्चिद्वर्णबद्धन्यासात्मकः । सत्त्वाधिक्येन बिन्दुरूपः" इति राघवभट्टः । ततश्च नाद-बिन्दु-निबोधिका अर्केन्दु-वह्निरूपाः, "संज्ञानेच्छा-क्रियात्मानो वह्नीन्द्वर्कस्वरूपिणः ।" इति शारदावचनात् । तस्मादत्र बह्निरूप-निबोधिकोपरि स्थितिकथनात् सूर्यचन्द्रवह्निमण्डलोपरि निर्वाणशक्तेः स्थितिरिति सुधीभिर्भाव्यम् । व्यक्तमाह **कुलार्णवोक्त-परंब्रह्मध्याने**—

बिन्दुरूपं परं ब्रह्म सहस्रदल-संस्थितम् ।
इत्युपक्रम्य—कर्णिकान्तस्त्रिकोणान्तर्मण्डलत्रयमण्डितम् ॥

इति । **'मण्डलत्रयेण'** सूर्यचन्द्रवह्निमण्डलेन मण्डितमित्यर्थः । इयं निर्वाणशक्तिः परबिन्दुरूपेति स्फुटीकरिष्यामः ॥ ४८ ॥

**धाराधरा सा शक्तिः सर्वेषां जीवभूता सती मुदा हर्षेण मुनिमनसि तत्त्वज्ञानं वहन्तीति ॥ ४८ ॥**

इति वचनात् अत्रापि पाशजालम् । एतस्या निर्वाणकलाया मध्यदेशे इति । समीप्ये सप्तमी । तथा च मध्यदेशसमीपे किञ्चिदुपरीत्यर्थः तथाच **स्वच्छन्दसंग्रहे** —

चिदानन्दस्वरूपा तु परा शक्तिस्तदूर्ध्वतः ।
समना नाम सा शक्तिः सर्वकारणकारणम् ॥
सर्वाण्डा[न्ता]नि बिभर्त्तीयं शिवेन समधिष्ठिता ।
अत्र रूढः स भगवान् शिवः परमकारणम् ।
शिवः सर्वस्य कर्तेयं शक्तिः कारणमुच्यते ॥ इति ॥ ४८ ॥

निर्वाणशक्तिमध्यस्थ-परब्रह्म-स्थानम्

**तस्या मध्यान्तराले शिवपदममलं शाश्वतं योगिगम्यं**
**नित्यानन्दाभिधानं सकलसुखमयं शुद्धबोधस्वरूपम् ।**

निर्वाणशक्तिमध्ये परब्रह्मस्थानमाह---**तस्या मध्यान्तराल** इति । **तस्याः** परंबिन्दुरूप-निर्वाणशक्तचा मध्यान्तराले मध्यस्थशून्ये **अमलं** मायामल-रहितं **शिवपदं** ब्रह्मस्थानं **लपन्ति**, तत्त्वज्ञा इति शेषः । **योगिगम्यं** सूक्ष्माति-सूक्ष्मतमत्वात् वाङ्मनसोरगोचरत्वाच्च योगिनां ज्ञानमात्रगम्यमिति भावः । केचिद् वैदान्तिका ब्रह्माभिधानं ब्रह्मेति नाम्ना लपन्ति । अथवा हंसनामकमिति यथाश्रुतार्थः । अन्ये सुकृतिनः **किमपि** अनिर्वचनीयमात्म-प्रबोधम् आत्मसाक्षात्कारस्थानं लपन्तीत्यर्थः । **मोक्षमिति** । मुच्यते माया-प्रपञ्चाद् बहिर्भूयते यत्र तन्मोक्षरूपमित्यर्थः ।

अत्रेदमवधीयताम्---सहस्रदलकर्णिकान्तस्त्रिकोणे मायाबन्धन-च्छादित-प्रकृति-पुरुषात्मक-परंबिन्दुः । तदुक्तम्---

सत्यलोके निराकारा महाज्योतिःस्वरूपिणी ।
माययाच्छादितात्मानं चणकाकाररूपिणी ।।
हस्त-पादादि-रहिता चन्द्र-सूर्याग्नि-रूपिणी ।
मायाबन्धनमुत्सृज्य द्विधा भित्वा यदोन्मुखी ।।
शिवशक्तिविभागेन जायते सृष्टिकल्पना ।।

**अस्या इति । अस्याः शक्तेर्मध्यदेशान्तराले निर्मलं शिवपदमास्ते । नित्यानन्दं शाश्वतम्, अत्यन्तासक्तत्वात् । योगि-प्राप्यम्, अत्यन्तज्ञानसाध्यत्वात् सकलानां सुख-**

उन्मनीपदमाह---तस्या मध्यान्तराले इत्यादिना । तस्याः समनाया मध्यान्त-राले । अत्र समीप्ये सप्तमी । शिवतनुप्राप्तिस्थानम् उन्मनीति यावत् । **स्वच्छन्द-संग्रहे**--- शिवतनुं समाख्यातं तदूर्ध्वं शक्तितनुतः ।। इति ।।

तथा तत्रैव---शिवशक्तिद्वयञ्चैव शिवतनुं प्रकीर्त्तितम् ।

सूक्ष्मार्थशक्तचवच्छिन्नं शिवतनुमित्यर्थः । तथाच तत्रैव---

यावत् सा समना शक्तिस्तदूर्ध्वे उन्मनी स्मृता ।
नात्र कालकलाभावः[नं] न तत्वं न च देवताः ।।

**केचिद् ब्रह्माभिधानं पदमिति सुधियो वैष्णवं तल्लपन्ति**
**केचिद्धंसाख्यमेतत् किमपि सुकृतिनो मोक्षमात्मप्रबोधम् ॥ ४९ ॥**

इति । 'सत्यलोके' सहस्रारे इत्यर्थः । तथा—

निर्गुणो बिन्दुरूपश्च सिद्धिकारणमेव हि ।
केचिद् वदन्ति स ब्रह्मा कैश्चिद् विष्णुः प्रकथ्यते ॥
कैश्चिद् रुद्रो महापूर्ण एको देवो निरञ्जनः ।
आद्याशक्तियुतो देवश्चणकाकाररूपकः ॥

इति । अस्य बिन्दोः केशाग्र-कोटिभागैकभागरूप-सूक्ष्मतेजोंऽशो निर्वाण-शक्तिर्मध्यशून्यभागो ब्रह्मपदमिति ग्रन्थकारमतम् । तथाऽन्यत्र—

तन्मध्ये परबिन्दुञ्च सृष्टिस्थितिलयात्मकम् ।
शून्यरूपं शिवः साक्षाद् बिन्दुः परमकुण्डली ॥
तथा–वृत्तं कुण्डलिनीशक्तिर्गुणत्रयसमन्वितम् ।
शून्यभागं महेशानि शिवशक्त्यात्मकं प्रिये ॥ इति ।

अयं बिन्दुः सर्वकारणरूप ईश्वर इति केचित् । पौराणिकास्तु महा-विष्णुरूपोऽयमिति वदन्ती । अन्ये तु ब्रह्मपुरुषोऽयम् । तदाह—

नाहो न रात्रिर्न वियन्न पृथ्वी नासीत् तमो ज्योतिरभून्नवान्यत् ।
श्रोत्रादिबुद्ध्याऽनुपलभ्यमेकं प्राधानिकं ब्रह्म पुमांस्तदासीत् ॥इति॥

निर्गुणः सगुणश्चेति शिवो ज्ञेयः सनातनः ।
निर्गुणः प्रकृतेरन्यः सगुणः सकलः स्मृतः ॥

**मयम् अथवा सकलं कलया सह वर्त्तमानं तत् सुखमयञ्चेति तत् तथा । शुद्धबुद्धीनां प्रबोधो ज्ञानं यस्मात् । एतत् पदं केचित् परंब्रह्माभिधानमिति वदन्ति । अन्ये सुधियो**

सुनिर्वाणं परं शुद्धं रुद्रवक्त्रं तदुच्यते ।
शिवशक्तिरिति ख्याता निर्विकल्पा निरञ्जना ॥ इति ॥

"तत्त्वातीतं वरारोहे" —इत्यादि अग्रे लिखिष्यते । मनः सहितत्वात् समना । "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" इति श्रुत्या मनोऽतीतत्वादुन्मनीत्य-मृतानन्दस्वामिनः ।

शक्तिमध्यगतोः नादः समनान्तं प्रसर्पति ॥

इति शारदावचनात् तन्मध्येऽयं सगुणब्रह्मरूपः। वस्तुतस्त्वेकमेव मतभेदान्नानाविधनाम्ना गायन्तीत्यलं विस्तरेण।

**तदयं महावाक्यार्थनिर्णयः।** सुषुम्णानाड्यूर्ध्वे सहस्रदलपद्मं शुक्लवर्णमधोमुखं रक्तकिञ्जल्कशोभितमकारादि-लकारान्त-पञ्चाशद्वर्णैः शुक्लाभैर्विंशत्यावर्त्तनेन सहस्रसंख्याकैर्युक्तं सहस्रदलम्; एतत्कर्णिकायां हंसः। ततः परमशिवरूप-गुरुः। ततः सूर्यमण्डलं चन्द्रमण्डलम्। ततो महावायुः। ततो ब्रह्मरन्ध्रम्। ततो महाशङ्खिनी। चन्दमण्डले विद्युदाकारत्रिकोणम्। तन्मध्ये मृणालसूत्र-शतभागैकभागरूप-सूक्ष्मा चन्द्रस्य षोडशी कलाऽधोमुखी रक्तवर्णा। तत्क्रोडे केशाग्रसहस्रभागैकभागरूप-सूक्ष्मा निर्वाणकला रक्तवर्णाऽधोमुखी। तदधस्तादव्यक्तनादात्मक-निबोधिकाख्य-वह्निः। तदुपरि निर्वाणकलाक्रोडे परंबिन्दुः शिवशक्तयात्मकः। अस्य केशाग्रकोटिभागैकभागरूपसूक्ष्मतेजो हंसरूपा निर्वाणशक्तिः। अस्यां हंसो जीवः। बिन्दोर्मध्ये शून्यं ब्रह्मपदमिति।

**आगमकल्पद्रुमपञ्चशाखादिमते** सहस्रदलपद्मकर्णिकामध्ये चन्द्रमण्डले अकथादित्रिकोणम्। तन्मध्ये त्रिकोणसमीपे त्रिबिन्दुः। तस्याधो बिन्दुर्हंकारः पुरुषात्मकः। ऊर्ध्वबिन्दुद्वयरूप-विसर्गः सकारः प्रकृतिरूपः। एतदुभयात्मको हंसस्त्रिबिन्दुरूपेण प्रकाशते। तन्मध्ये अमाकला। तत्क्रोडे निर्वाणशक्तिः। तस्या मध्ये शून्यं परं ब्रह्म इति।

**वैष्णवं पदं लपन्ति। केचित् सुधियो मोक्षं मोक्षस्वरूपं हंसाख्यमिति वदन्ति। एतेन ब्रह्मविष्णुशिवशक्तिस्वरूपं तत् पदमित्यायातम्, हंसाख्यत्वात्। तथाच ज्ञानार्णवे—**

**हकारे बिन्दुरूपेण ब्रह्माणं विद्धि पार्वति।**
**सकारे सर्गबिन्दुभ्यां हरिश्चाहं महेश्वरि।**
**अविनाभावसम्बन्धाल्लोके हरिहराविति॥**

इति **स्वच्छन्दसंग्रहात्** नात्र कालकलांशस्य भानम्। परमकुलपदमिति परमुम्मन्याः परं अकुलपदम् अकुलाख्यपरशिवात्मकपदं विश्वस्य विश्रामस्थानत्वात्। पदमिति अमलं सत्त्वादित्रिगुणमु(यु)क्तम्। शाश्वतं नित्यम्। योगेन प्राप्तं नित्यानन्दमभिधानं यस्य तत्। "नित्यं विज्ञानमानन्दं ब्रह्म" इति श्रुतेः। शुद्धबोधस्य शुद्धबोधस्य प्रकाशो यस्मात्। तथाच टीकाकारधृततन्त्रे "उन्मन्यन्ते परशिवः" इति। **स्वच्छन्दसंग्रहे** उन्मनीमभिधाय—तत्त्वातीतं वरारोहे वाङ्मनो नैव गोचरम्। "यतो वाचो निवर्त्तन्ते" इत्यादि श्रुतेः। तत्त्वं "तत्त्वमसि" इति श्रुतेः।

स्वाभाविके परे धाम्नि विवरं तत्त्वसंज्ञकम्॥

तद् यथा--अथ शुभसहस्रारे पूर्णेन्दुमध्यविस्फुरत् ।
त्रिकोणं तडिदाभासमकथादिहलक्षयुक् ।।
तदन्तरे परं शून्यं विसर्गाधो व्यवस्थितम् ।
बालादित्यप्रभा तत्र कला षोडश्यधोमुखी ।।
स्रवन्ती सौधधारां वै चन्द्रार्द्धाङ्गविभङ्गुरा ।
तदन्तरे परा शक्तिः कोटचादित्यप्रभामयी ।।
बिसतन्तुसहस्रांशभागरूपा चिदात्मिका ।
तदन्तः सच्चिदानन्दो वेदादीतो निरञ्जनः ।।
बिन्दुः पुरुष इत्युक्तो विसर्गः प्रकृतिर्मता ।
पुं-प्रकृत्यात्मको हंसः स्वप्रकाशेन भासते ।। इति ।।

एतन्मतमाश्रित्य परंबिन्दोरूर्ध्वे हंसघटकविसर्गोपरि गुरुस्थितिरिति वदन्ति । तन्न समीचीनम् । **निर्वाणतन्त्रे** परंबिन्दुरूप-शक्तिसमीपे तस्याः पूजाध्यानपरायणस्य निजगुरोः स्थितिकथनात् । पूजार्थोपवेशनं त्वधःस्थले सम्मुख एव युज्यते, न तूर्ध्वस्थले पश्चाद्देशे । तद्यथा **निर्वाणे**--

सत्यलोके बीजकोषे चिन्तामणिगृहे शुभे ।
ध्यायेन् निरञ्जनां देवीं रत्नसिंहासनोपरि ।
तस्याऽन्तिके निजगुरुं पूजाध्यानपरायणम् ।।

इत्यादि । किञ्च पूर्वप्रदर्शिते **महाकालीतन्त्रवचने** हंसवर्णद्वयोपरि गुरुस्थितिः सुव्यक्ता । अत्र मूलादिसहस्रदलपर्यन्तोक्तप्रकार-विपरीतप्रकार-बोधकानि तथा तदतिरिक्तबोधकानि च यानि वचनानि दृश्यन्ते, तानि मतभेदेन प्रकारान्तरविधायकानीति बोध्यम् ।। इति सप्तमप्रकरणम् ।।४६।।

**स्वरं विना उच्चरितुमशक्यत्वात् शक्तिरपि तत्र स्फुटा । कीदृशम् ? आत्मनः परमात्मनः प्रबोधो यस्मात् तत् तथेति ।। ४६ ।।**

इति **शिवतन्त्रात्** । श्रीमते--

अकुलेश्वरदेवस्य सम्बन्धः प्रथमः स्थितः ।
रूपातीतः परो बिन्दुः शक्त्या वेष्टितभास्वरः ।
अतो नादो विरोधी च अर्द्धचन्द्रसमुत्क्रमात् ।।
एतत् तु पञ्चमप्रोक्तं ज्ञानरत्नं महोदयम् ।
तत्र तद्दक्षिणं षट्कमाज्ञापूर्वं कुलोद्भवम् ।। इति ।। ४६ ।।

कुण्डलिन्युत्थापनप्रकारः

**हूङ्कारेणैव देवीं यम-नियम-समभ्यास-शीलः सुशीलो**
**ज्ञात्वा श्रीनाथवक्त्रात् क्रममिति च महामोक्षवर्त्मप्रकाशम् ।**

अथेदानीं सहस्रदलपर्यन्तं चक्रं निरूप्य तत्र कुण्डलिनीयोगं कथयिष्यन्नादौ कुण्डलिन्युत्थापनप्रकारमाह—**हूङ्कारेणेति** । अस्यायमर्थः—**स** योगित्वेन प्रसिद्धो जनः **गुरुवक्त्रात् क्रमं ज्ञात्वा** येन क्रमेण प्रकारेण हृदाद्याकुञ्चनादि पवनदहनयोराक्रमणं कुण्डलिन्युत्थापनादिकं भवति, तत्प्रकारक्रमं श्रीनाथस्य गुरोर्वक्त्राज् ज्ञात्वा **पवनदहनयोराक्रमेण** हूमिति कूर्चबीजोच्चारणेन च कुण्डलिनीमुत्थाप्य तल्लिङ्गरूपं भित्त्वा स्वयम्भुलिङ्गच्छिद्रं प्रस्फोटयित्वा तां देवीं कुण्डलिनीं **ब्रह्मद्वारस्य मध्ये** चित्रिणीनाडीमुखमध्ये **विरचयति** प्रापयतीत्यर्थः । हूङ्कारेणेति ।

ततो हंसमुपस्मृत्य शनैराकुञ्चयेद् गुदम् ।

**इत्याद्यागमकल्पद्रुमवचने** हंसमन्त्रस्योच्चारणे कुण्डलिनीचालनविधानात् । "हूं हंस इति मन्त्रः कुण्डलिनीचालने विनियुक्त" इति ललितारहस्यकारः । किन्तु हंसस्मरणपूर्वकतदाकुञ्चनविधानाद् हंस इति मनुमनुस्मृत्य जीवात्मानं हृदयस्थं दीपकलिकाकारं मूलाधारमानीय तेन सार्द्धं कुण्डलिनीं चालयेदित्यभिप्रायः । अत एवा**गमकल्पद्रुमे**—

आरोप्यारोप्य शक्तिं कमलजनिलयादात्मना साधकेन्द्रः ।

इति । परवचने 'आत्मना' जीवात्मना सार्द्धं चालनमुक्तम् । **कालीकुलामृतेऽपि**—

हृदयाद्धंसमनुना नीत्वा जीवं मुखाम्बुजे ।
हूङ्कारेण समुत्थाप्य कुण्डलीं परदेवताम् ॥

हूङ्कारेणेति । इदानीं भूतशुद्धिः कथ्यते । तां देवीं कुण्डलिनीं यमनियमसमभ्यासशीलः स जनः श्रीनाथवक्त्राद् गुरुमुखात् महामोक्षपथप्रकाशं क्रमञ्च ज्ञात्वा हूङ्कारेण तत् स्वयम्भूलिङ्गं भित्वा ब्रह्मद्वारस्य मध्ये विरचयति । जनः कीदृशः ? शोभनं शीलं

यमनियमसमभ्यासशीलः [ नियतनिजचित्त ] इति । गौतमीये—

अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयार्जवम् ।
क्षमा धृतिर्मिताहारः शौचञ्चेति यमा दश ॥

**ब्रह्मद्वारस्य मध्ये विरचयति स तां शुद्ध-बुद्धि-स्वभावो**
**भित्त्वा तल्लिङ्गरूपं पवन-दहनयोराक्रमेणैव गुप्तम् ॥ ५० ॥**

इति । **कङ्कालमालिनीतन्त्रे**—

आकृष्य प्रणवेनैव जीवात्मानं नगेन्द्रजे ।
कुण्डलिन्या सह प्राणं गन्धमादाय साधकः ।
सोऽहन्तु मनुना देवीं स्वाधिष्ठाने प्रवेशयेत् ॥

इति । ततश्च हंसेन प्रणवेन वा हृदयाज्जीवं मूलाधारमानीय केवलकूर्च-बीजेन कुण्डलिनीमुत्थापयेदिति सुधीभिर्भाव्यम् ।

स जनः कीदृशः ? **यमनियमसमभ्यासशोलः ।** यम-नियम इति योग-प्रतिबन्धककामक्रोधादिनाशक - तदनुकूलशरीरान्तर्वायुरेचन - मनःस्थैर्यादि-साधकाङ्गयोगप्रदर्शकम् । तैरेव प्रकृतयोगनिष्पत्तेः, न तु केवल-यमनियम-मात्रेण । अत एव ग्रन्थकृता चतुःपञ्चाशच्छ्लोके 'योगि यमाद्यैर्युत' इत्यत्र 'यमाद्यै'रिति बहुवचनान्तत्वेन प्रयुक्तम् । अयन्तु यमाद्यभ्यासः कामाद्या-कुलितचित्तानामेव । यदि तु जन्मान्तरीयादृष्टवशात् स्वभावतो वा क्रोध-कामादिरहितस्तदा तद्योगाभ्यासं विनापि प्रकृतयोगे शक्तो भवतीति बोध्यम् ।

**सुशील** इति । यतो यमाद्यभ्यासशीलः, अत एव सुशील इति । **श्रीनाथवक्त्रादिति** । गुरूपदेशं विना क्रमज्ञानं न भवतीति भावः । अत एवोक्तम्—

गुरूपदेशतो ज्ञेयं न तु शास्त्रार्थकोटिभिः ॥ इति ॥

**यस्य स तथा । शुद्धबुद्धेर्हेतुः प्रभावो यस्य स तथा । नन्वत्र सुप्तां तां कीदृक्प्रकारेणा-क्रम्य नयति । इत्याह पवनदहन योरिति । तयोराक्रमणेन; अर्थात् पवनयोगेन दहनस्य उर्ध्वगतिस्ततः प्रबुद्धा सर्पाकृतिः सा ऊर्ध्वगतिर्भवत्येव । तथाच—**

जपः सन्तोष आस्तिक्यं दानं देवस्य पूजनम् ।
सिद्धान्तश्रवणञ्चैव ह्रीर्मतिश्च तपो हुतम् ।
दशैते नियमाः प्रोक्ता योगशास्त्रविशारदैः ॥ इति ॥

क्रमं विशेषयति—**महामोक्षवर्त्मप्रकाशमिति**। मोक्षवर्त्म चित्रिणीनाडीमध्यच्छिद्ररूपवर्त्म तस्य प्रकाशः प्रस्फोटनं येन क्रमेणेत्यर्थः। **शुद्धबुद्धिस्वभाव** इति। शुद्धबुद्धौ ब्रह्मणि स्वभावो यस्य अथवा शुद्धबुद्धया स्वस्मिन् आत्मनि भावो यस्येत्यर्थः। गुप्तं यथा स्यात् तथेति क्रियाविशेषणम्। अथवा तल्लिङ्गरूपं गुप्तं मुद्रितमुखत्वेनाऽव्यक्तम्, अप्रकाशितमुखमिति यावत्। अथात्र कुण्डलिन्युत्थापनप्रकारं विशेषेणाह **आगमकल्पद्रुम-पञ्चमशाखायाम्**—

पद्मासने निवेश्याऽङ्के ततः पाणिद्वयं न्यसेत्।
ततो हंसमुपस्मृत्य शनैः शङ्कोचयेद् गुरुम्॥
वायुमुत्तोलयेत् तेन वर्त्मना स पुनः पुनः।
उत्तोल्य भेदयेच्चक्रं तस्याऽनुष्ठानमुच्यते॥
मूलाधारसरोजे तु त्रिकोणमतिसुन्दरम्।
कामो भवति तन्मध्ये बालार्ककोटिसन्निभम्।
तदूर्ध्वे कुण्डलीशक्तिं स्वयम्भूलिङ्गवेष्टिनीम्।
तथा—कामाग्निना कूर्चयोगात् परंहंसाभिलाषिणीम्॥ इति॥

तथा भूतशुद्धौ—

हृदिस्थां कुञ्चिकां कृत्वा गत्वा तदुपरे शिवे।
कण्ठाद्यं समनुप्राप्य द्वारं कुञ्चिकया हठात्॥

**मूलाधारे स्मरेद्दिव्यं त्रिकोणं तेजसो निधिम्।**
**तस्याग्निरेखामानीय अध ऊर्ध्वंव्यवस्थिताम्॥**

**इत्यूर्ध्वाम्नायवचनात्।**

**प्रज्वलद्भुजगाकारा पद्मतन्तुनिभा शुभा।**
**सर्वेषां जननी प्रोक्ता सूर्यकोटिसमप्रभा॥**

तथाच एतद्द्वयाभ्यासशीलः श्रीनाथवक्त्राद् गुरुवक्त्राद् मोक्षवर्त्मप्रकाशं क्रमं ज्ञात्वा हुङ्कारेण मूलाधारस्थितवह्निपवनयोराक्रमेण तप्तां कुण्डलिनीं कृत्वा ब्रह्मद्वारस्य

उद्घाटच परमेशानि पवनेन प्रदीपयेत् ।
हुताशनप्रतप्तां तु तापेन भृशमूर्ध्वताम् ।।

प्रसुप्तां नागिनीं लिङ्गे योनिवक्त्रे प्रबोधयेत् ।
ततः प्रचालयेद् वायुं यावन्नाड्यन्तरेषु च ।।

गुरुदिष्टेन मार्गेण सकृद् वा कुम्भकेन वै ।
आक्रम्यैवं ततो जीवं सुगुप्तेन पथा भृशम् ।।

ऊर्ध्वोच्छ्वासैरूर्ध्वमुखान् कारयेत् पङ्कजान् शिवे ।
प्रोबोधयन् शनैर्भानुं मेरुश्रृङ्गं नयेत् सुधीः ।। इति ।।

तदयं सकलवचन-पर्यालोचनासिद्धः क्रमोऽवधीयताम् । योगी जनः विहितासने उपविश्य स्वाङ्के उत्तानौ करौ कृत्वा खेचरीमुद्रया स्थिरचित्तः सन् देहान्तर्वायुमापूर्य कुम्भकं कृत्वा हृदयमाकुञ्चयेत् । तेन ऊर्ध्वोच्छ्वासोत्सरणनिवृत्तिः । ततो देहान्तरस्थ-वायोरुदरकण्ठादिव्यापकतया नाडीच्छिद्रप्रस्फोटनेनाऽधोगमनमनुभूय गुदमाकुञ्चयाऽपानं संरुध्य वायुमुत्तोल्य मूलाधारकमलकर्णिकान्तस्त्रिकोणस्थकामं वाममावर्त्तयेत् । तेनोद्दीप्तेन तत्र स्थितेन कामाग्निनोत्तप्तां कुण्डलिनीं हूङ्कारेण चेतयित्वा परमशिवसामरस्याभिलाषिणीं तां स्वम्भूलिङ्गमुखं स्फोटयित्वा तच्छिद्रेण चित्रिणीनाडीमुखमध्यं प्रापयेदिति समुदितार्थः ।। ५० ।।

**प्रबुध्य वह्नियोगेन मनसामन्धता हता ।**
**सूचीव गुणमादाय व्रजत्यूर्ध्वं सुषुम्णया ।।**

**उद्घाटयेत् कवाटन्तु यथा कुञ्चिकया हठात् ।**
**कुण्डलिन्या तथा योगी मोक्षद्वारं प्रभेदयेत् ।।**

**इति गोरक्षसंहितोक्तत्वाच्च ।। ५० ।।**

**मध्ये तां रचयति । रुद्रयामले--**

हुङ्कारेण समुत्थाप्य शक्तिं स्वाधारसंस्थिताम् ।। इति ।। ५० ।।

कुण्डलिनीयोगप्रकारः

**भित्त्वा लिङ्गत्रयं तत् परमरसशिवे सूक्ष्मधाम्नि प्रदीपे**
**सा देवी शुद्धसत्त्वा तडिदिव विलसत्तन्तुरूपस्वरूपा ।**

इदानीं कुण्डलिनीयोगप्रकारमाह––**भित्त्वेति** । संरुद्धवर्त्मनि वर्त्मकरणं भेदः । अस्यार्थः––सा देवी कुण्डलिनी **तल्लिङ्गत्रयं** स्वयम्भू-वाणेतराख्य-लिङ्गत्रयं **भित्त्वा** तैर्लिङ्गैः संरुद्धवर्त्मनि वर्त्म कृत्वा ब्रह्माख्यायाः शिरायाः चित्रिणीनाडीसम्बन्धि तद्ग्रथितमिति यावत् । ग्रथितं **तत् सकलसरसिजं** प्राप्य तत्र **देदीप्यते**, ततः **सूक्ष्मतालक्षणेन** सूक्ष्मभावस्वरूपेण सूक्ष्मभावेनेति यावत् । तेन भावेन **विलसत्तन्तुरूपस्वरूपा** सती **परमरस-शिवे** परमरसः परमानन्दस्तन्मये शिवे सहस्रदलकर्णिकास्थ परंबिन्दुरूपशिव-समीपे अर्थाद् गत्वा**मोक्षाख्यानन्दरूपम्** अर्थात् साधकस्य नित्यानन्दरूप-मुक्तिं सहसा घटयतीत्यर्थः । लिङ्गत्रयमिति । तत् पूर्वोक्तं [लिङ्गत्रयं] षट्चक्रं पञ्चशिवञ्चेति चतुर्दशग्रन्थीन् भित्त्वेति बोध्यम् । तदुक्तं **शाक्तानन्दतरङ्गिण्याम्**––

गच्छन्तीं ब्रह्मरन्ध्रेण भित्त्वा ग्रन्थींश्चतुर्दश ॥

इति । तत्र लिङ्गशिवयोर्भेदप्रकारमाह **स्वतन्त्रतन्त्रे**––

षट्चक्रस्थान् शिवान् भित्त्वा देवी गच्छति निष्कलम् ।
चक्राधिष्ठानतो रूपं धृत्वा तत्तन्मनोहरम् ॥
मोहयित्वा महेशानमानन्दाप्लुतविग्रहम् ।
रमित्वा तत्र तत्रैव यावत् प्राप्नोति शाश्वतम् ।
मोहितः परया यस्मात् तस्माद् भिन्न उदाहृतः ॥

तथा **मायातन्त्रे**––

भित्त्वा लिङ्गत्रयं देवी शक्तिमार्गेण गच्छति ।
तत्तद्रूपेण चक्रेषु निष्कलं प्राप्य निर्वृता ॥

इति । 'तत्तद्रूपेणे'ति वैखरी-मध्यमा-पश्यन्ती-भावेन । तदुक्तम्––

प्रथमे वैखरीभावो मध्यमा हृदये स्थिता ।
भ्रूमध्ये पश्यन्तीभावः पराभावस्तु बिन्दुनि ॥

**भित्त्वेति । इदानीं तस्या गतिप्रकारमाह । सा देवी तल्लिङ्गत्रयं स्वयम्भू-बाणेत-राख्यलिङ्गान् भित्त्वा ब्रह्माख्यनाड्याः सकलसरसिजान् प्राप्य परमरसशिवे देदीप्यते**

**ततः सा प्रबोधिता तल्लिङ्गत्रयं स्वयम्भूबाणेतरलिङ्गत्रयं भित्त्वा भेदं**

**ब्रह्माख्यायाः शिरायाः सकलसरसिजं प्राप्य देदीप्यते तन्**
**मोक्षाख्यानन्दरूपं घटयति सहसा सूक्ष्मतालक्षणेन ॥५१॥**

अस्यार्थः---परा पश्यन्ती मध्यमा वैखरीति चतस्रः शब्दोत्पादिकाः शक्तयः कुण्डलिन्यभेदरूपाः । ततः सहस्रारे कुण्डलिनीगमनकाले प्रथमे स्वयम्भूलिङ्गसमीपे वैखरीभावेन तं मोहयित्वा एवं हृदये बाणलिङ्गं मध्यमाभावेन भ्रूमध्ये इतरलिङ्गं पश्यन्तीभावेन मोहयित्वा परंबिन्दुनिकटे पराभावमाप्नोतीत्यर्थः । **चक्रभेदप्रकारमाह**---

चित्रिणीविवरे रक्तमेदपङ्कसमुद्भवान् ।
सव्यदक्षपार्श्वयोश्च नालस्थान् वाहयेच्च तान् ॥

पद्मान् नाडीमध्यवर्त्मरोधितान् परमेश्वरि ।
नालं वामं विशेत् पद्मं तेन भेदः प्रजायते ॥

यथा शिल्पवतीं रश्मिवाहीं लालयति प्रभुः ।
भेदयित्वा तथा चक्रं षड् जीवेन नयेच्च ताम् ॥ इति ॥

तथा---षट्चक्रसन्धिमार्गेण सुषुम्णावर्त्मना तथा ।
हंसेन मनुना देवीं सहस्रारं समानयेत् ॥

इति । परमरस-शिवं विशेषयति---**सूक्ष्मधाम्नः प्रदीप इति** । सूक्ष्मधाम निर्वाणशक्त्यात्मक-परंबिन्दोस्तेजो हंसस्तन्मध्ये दीप्यमाने इत्यर्थः । देवीं विशेषयति---**शुद्धसत्त्वेति** । सत्त्वाऽतिसत्त्व-परमसत्त्व-शुद्धसत्त्व-विशुद्धसत्त्वेति पञ्चविधं शरीरावच्छिन्नचैतन्यमुत्तरोत्तरप्रकृष्टं तत्रेयं शुद्धसत्त्वा तुरीयेति यावत् । केन प्रकारेण मोक्षाख्यानन्दं घटयतीत्याकाङ्क्षायामुच्यते । तत्र परंबिन्दौ तां कुण्डलिनीं विलाप्य केषांचित् साधकानां शिवात्मनोरभेदेन तद्बिन्दुचिन्तनेन केषांचित् तथा शक्त्यात्मकचिन्तनेन केषांचित् परमपुरुषमयचिन्तनेन तथा केषांचित् केवलशिवशक्तिसामरस्यचिन्तनेन सा देवी मोक्षं घटयतीति । तदुक्तं **मायातन्त्रे** –

ऐक्यं जीवात्मनोराहुर्योगं योगविशारदाः ।
शिवात्मनोरभेदेन प्रतिपत्तिं परे विदुः ॥

**भृशं दीप्यं कुर्वती सहसा सूक्ष्मतालक्षणेन मोक्षानन्दरसं घटयति च अर्थात् शिव-**

**कृत्वा तच्छिद्रेण ब्रह्माख्याया इति ल्यब्लोपे पञ्चमी ब्रह्मनाडीमारुह्य सकलसदनं**

शक्त्यात्मकं तथा ज्ञानं जगुरागमवादिनः ।
पुराणपुरुषस्यान्ये ज्ञानमाहुर्विशारदाः ॥
शिवशक्त्योः सामरस्यात्मकं प्रकृतिनोऽपरे ॥ इति ॥

'ऐक्यं जीवात्मनो'रिति समाधिविषयम् । 'योग'मिति । युज्यते परमात्मना एकीभूयते अनेनाऽसौ योगः, तं योगमित्यर्थः । समाधिमुक्त्वा ध्याने योगभेदमाह—'शिवात्मनो'रित्यादि । **'सामरस्यात्मकमि'ति** ।

स्त्रीपुंयोगे तु यत् सौख्यं सामरस्यं प्रकीर्त्तितम् ।

इति । तच्चिन्तनप्रकारमाह **बृहच्छ्रीक्रमे**—

कलां कलङ्करहितां चिदानन्दमुपेयुषीम् ।
बिम्बरूपनिदानञ्च शुद्धस्फटिकसन्निभम् ॥
पराविराजिवामोरुमदालसवपुःस्त्रियम् ।
नादोपरि महादेवं पश्यन्ति ज्ञानचक्षुषा ॥ इति ॥

'कलां' कुण्डलिनीम् । 'चिदानन्दं बिन्दुरूपशिवम् । 'उपेयुषीं' प्राप्तवतीमित्यर्थः । 'बिम्बरूपनिदानं' परशिवम् । **तथान्यत्र**—

शून्यरूपं परशिवं प्रापयित्वा तु कुण्डलीम् ।
ततः सामरसीभूतां पाययित्वा परामृतम् ।
पुनस्तेन पथा देवीं प्रापयेत् कुलगह्वरम् ॥ इति ॥

यथा—साङ्गत्यं तु तयोः कृत्वा सामरस्यं विभाव्य च ।
तदुद्भूतरसेनैव तर्पयेद् देहदेवताम् ॥ इति ॥

प्रकारान्तरमाह **गन्धर्वमालिकायाम्**

सहस्रारं शिवपुरं रम्यं दुःखविवर्जितम् ।
सर्वतोऽलङ्कृतैर्दिव्यैर्नित्यपुष्पफलद्रुमैः ॥
सदाशिवपुरं रम्यं कल्पवृक्षसुशोभितम् ।
पञ्चभूतात्मकं ब्रह्म [वृक्षं] गुणत्रयसमन्वितम् ॥
चतुःशाखचतुर्वेदनित्यपुष्पफलान्वितम् ।
पीतं कृष्णं तथा श्वेतं रक्तपुष्पञ्च पार्वति ॥
हरितञ्च विचित्रञ्च नानापुष्पं मनोहरम् ।
एवं कल्पद्रुपं ध्यात्वा तदधो रत्नवेदिकाम् ॥

**लिङ्गस्य । सा कीदृशी ? शुद्धसत्ता चतुर्विंशतितत्त्वसम्बन्धा । पुनः कीदृशी ? विद्युदिव प्रकाशतन्तुरूपमिव स्वरूपं यस्याः सा तथा । शिवे किम्भूते ? सूक्ष्मधाम्नि सूक्ष्मं धाम**

प्राप्य परमरस-युक्तशिवे परमशिवे प्रदीपाभे देदीप्यते ॥ ५१ ॥

तत्रोपरि सुपर्यङ्कं नानारत्नोपशोभितम् ।
मन्दारपुष्परचितं नानागन्धानुमोदितम् ॥
तत्रोपरि महादेवः सदा तिष्ठति सुन्दरि ।
ध्यायेत् सदाशिवं देवं शुद्धस्फटिकसन्निभम् ॥
बहुरत्नसमाकीर्णं दीर्घबाहुं मनोहरम् ।
सुखप्रसन्ननयनं स्मेरास्यं सततं प्रिये ॥
श्रवणे कुण्डलोपेतं रत्नहारेण शोभितम् ।
शोण [गले] पद्मसहस्रेण मालया शोभितं वपुः ॥
अष्टबाहुं त्रिनयनं शिवं पद्मदलेक्षणम् ।
पादयोर्नूपुरं रम्यं शब्दब्रह्ममयं वपुः ॥
एवं स्थूलवपुस्तस्य भावयेत् कमलेक्षणे ।
पद्ममध्ये स्थितं देवं निरीहं शब्द[व]रूपवत् ।
शब्द[व]रूप-महादेव-कृत्यं नास्ति कदाचन ॥ इति ॥

तथा—ध्यायेत् कुण्डलिनीं देवीं स्वयम्भूलिङ्गवेष्टिनीम् ।
हंसेन मनुना देवीं सहस्रारं समानयेत् ॥
सदाशिवो महादेवो यत्रास्ते परमेश्वरि ।
देवीं रूपवतीं कामसमुल्लासविहारिणीम् ॥
मुखारबिन्दगन्धेन मोदितं परमं शिवम् ।
प्रबोध्य परमेशानि तत्रैवोपविशेत् प्रिये ॥
शिवस्य मुखपद्मं हि चुचुम्बे कुण्डली शिवे ।
सदाशिवेन देवेशि क्षणमात्रं रमेत् प्रिये ॥
अमृतं जायते देवि तत्क्षणात् परमेश्वरि ।
तदुद्भवामृतं देवि लाक्षारससमायुतम् ॥
तेनाऽमृतेन देवेशि तर्पयेत् परदेवताम् ।
षट्चक्रदेवतास्तत्र सन्तर्प्याऽमृतधारया ॥
आनयेत् तेन मार्गेण मूलाधारं पुनः सुधीः ।
यातायातक्रमेणैव तत्र कुर्यान्मनोलयम् ॥
एवमभ्यस्यमानस्तु अहन्यहनि पार्वति ।
जरामरणदुःखाद्यैर्मुच्यते भवबन्धनात् ॥

इति । एवं प्रकारान्तरस्तन्त्रान्तरे अनुसन्धेयः ॥ ५१ ॥

**यस्य । प्रदीप्ते प्रकृष्टदीप्तिं कुर्वति ॥ ५१ ॥**

**नीत्वा तां कुलकुण्डलीं लयवशाज् जीवेन सार्द्धं सुधी-**
**र्मोक्षे धामनि शुद्धपद्मसदने शैवे परे स्वामिनि ।**

कुण्डलिनी-ध्यानयोगमुक्त्वा समाधियोगमाह—**नीत्वेति** । अस्या-यमर्थः—**समाधौ यतः योगीन्द्रः सुधीस्तां** पूर्वोक्तोत्थापनक्रमेण ब्रह्मद्वारं प्राप्तवतीं भगवतीं कुण्डलिनीं **जीवेन सार्द्धं लयवशाद्** लयक्रमेण **शुद्ध-पद्मसदने** सहस्रारमध्ये **परे** परंबिन्दुरूपे **शैवे** शिवपदे **स्वामिनि** स्वामि-निकटे नीत्वा **इष्टफलप्रदामि**ष्टदेवतारूपां तां स्वामिरूप-परंबिन्दुना सहैकीभावं प्रापय्य परां परंबिन्दुस्वरूपां ध्यायेत् । **चैतन्यरूपामिति** । तदनन्तरं परंबिन्दुमपि तन्मध्यशून्यमध्ये चिदात्मनि विलाप्य शुद्धचैतन्य-रूपां ध्यायेदिति समुदायार्थः । ततः सोऽहम्भावेन जीवात्म[परमात्म]-नोरैक्यं ज्ञात्वा तत्र चित्तं विलाप्य सर्वव्यापकसम्पूर्ण-ज्ञानात्मना स्थिरचित्तः सन् तिष्ठेदिति शेषः । तदुक्तं श्रीमदा**चार्यस्वामिना**—

मकारं कारणं प्राज्ञश्चिदात्मनि विलापयेत् ।
चिदात्माऽहं नित्यशुद्धबुद्धमुक्तसदद्वयः ॥
परमानन्दसन्दोहो वासुदेवोऽहमोमिति ।
ज्ञात्वा विवेचकं चित्तं तत्साक्षिणि विलापयेत् ॥
चिदात्मनि विलीनं चेत् तच्चित्तं नैव चालयेत् ।
पूर्णबोधात्मना तिष्ठेत् पूर्णाचलसमुद्रवत् ॥ इति ॥

इति । 'मकारमि'ति प्रणवपक्षे । अत्र 'कारणं' परंबिन्दुः । 'वासुदेवोऽहमि'ति "वैष्णवं तल्लपन्ती"त्यनेनैकवाक्यतया वैष्णवपक्षे । तेन यो यद्देवतोपासकः, स सोऽहमिति ज्ञात्वा । ॐ इति प्रणवोपासनायाम् । अन्यत्र तत्तन्मन्त्रमय-कुण्डलिनीस्वरूपं ज्ञात्वेति बोध्यम् । **तन्त्रान्तरे** –

किरणस्थं तदग्निस्थं चन्द्रभास्करमध्यगम् ।
महाशून्य[मूल्य]मयं कृत्वा पूर्णस्तिष्ठति योगिराट् ॥

इति । **जीवेन सार्द्धं नीत्वेति** । पूर्वप्रदर्शितवचनाद् हंस इति जीवात्मानं हृदयस्थं दीपकलिकाकारं हंस इति मन्त्रेण मूलाधारमानीय तेन सार्द्धं कुण्डलिनीं नयेत् । **लयवशादिति** । लयक्रममाह—

**नीत्वेति । तस्यास्तु साधकाय ओमित्याह—नीत्वेति । सुधीः जनस्तां कुलकुण्ड-लिनीं जीवेन जीवात्मना सार्द्धं लयवशात् लीनां कृत्वा शैवे शिवसम्बन्धीयमोक्षे धामनि**

ततः सा शुद्धस्वभावा सूक्ष्मतालक्षणेन तडिदिव लसत्तन्तुरूपा तन्मोक्षानन्दं

**ध्यायेदिष्टफलप्रदां भगवतीं चैतन्यरूपां परां**
**योगीन्द्रो गुरुपादपद्म-युगलालम्बी समाधौ यतः ॥ ५२ ॥**

त्रिकोणाख्ये तु देवेशि लङ्कारं चिन्तयेत् ततः ।
ब्रह्माणं तत्र सञ्चिन्त्य कामदेवञ्च चिन्तयेत् ॥
जीवं तत्रैव निश्चिन्त्य प्रणवोच्चारणेन च ।
पदे च गमनं पत्यौ विसर्गनाशिकामिनि ॥
घ्राणं संचिन्त्य देवेशि महेशि प्राणवल्लभे ।
डाकिनीं परमाराध्यां शक्तिञ्च भावयेत् ततः ॥
एतानि गिरिजे मातः पृथ्वीं नीत्वा गणेश्वरि ॥

तथा—ततश्च पृथिवीं धन्यां गन्धे[न्धं] नीत्वा महेश्वरि ।
आकृष्य प्रणवेनैव जीवात्मानं नगेन्द्रजे ॥
कुण्डलिन्या सह प्राणं गन्धमादाय साधकः ।
सोऽहं तु मनुना देवि स्वाधिष्ठाने प्रवेशयेत् ॥

तथा—तत्कर्णिकायां वरुणं तत्रापि भावयेद् हरिम् ।
युवानं राकिणीं शक्ति चिन्तयित्वा वरानने ॥
रसनेन्द्रियकूपस्थं जलञ्च कामलालसे ।
एतानि गन्धञ्च शिवे रसं नीत्वा वरानने ।
जीवात्मानं कुण्डलिनीं रसञ्च मणिपूरके ॥

तथा—तत्कर्णिकायां सुश्रोणि वह्निं संचिन्त्य साधकः ।
तत्र रुद्रः स्वयं कर्त्ता संहारे सकलस्य च ॥
लाकिनीशक्तिसंयुक्तं भावयेत् तं मनोहरम् ।
तत्र चक्षुरिन्द्रियञ्च ध्यात्वा तेजोमयं शिवे ॥
एतद्रसानि सुभगे रूपे नीत्वा महाभगे ।
जीवात्मानं कुण्डलिनीं रूपञ्चाऽनाहते नयेत् ॥

तथा—तत्कर्णिकायां वायुञ्च जीवस्थाननिवासिनम् ।
तत्र योनिमण्डलञ्च बाणलिङ्गविराजितम् ॥

नीत्वा ध्यायेदिति । "अपानः कर्षति प्राणं प्रणोऽपानञ्च कर्षति" इत्येतत्क्रमेण यदा प्राणो जीवामाकर्षयति तदैव जीवात्मना सार्द्धं तस्या आनयनम् । कीदृशे ? शुक्लपद्मे

घटयति । नयवशात् नीतिवशात् । समाधौ यतो योगीशः तां कुलकुण्डलिनीं जीवात्मना सार्द्धं मोक्षधाम्नि परमशिवे सच्चिदानन्दरूपे भगवतीं चैतन्यरूपां ध्यायेत् ।

काकिनीशक्तिसंयुक्तं तत्र वायुं त्वगिन्द्रियम् ॥
एतानि रूपं संयुज्य स्पर्शे त्वमलकारिणि ।
जीवं कुण्डलिनीं स्पर्शं विशुद्धे स्थापयेत् ततः ॥

तथा—तत्कर्णिकायामाकाशं शिवञ्च शाकिनीयुतम् ।
वाचः श्रोत्रञ्च आकाशे संस्थाप्य नगनन्दिनि ॥

एतानि स्पर्शं शब्दे वै नीत्वा शङ्करि मत्प्रिये ।
जीवं कुण्डलिनीं शब्दञ्चाज्ञाचक्रे निधापयेत् ॥

इत्यन्तं कङ्कालमालिन्याम् । 'त्रिकोणाख्ये' प्रकान्तमूलाधारत्रिकोणे । तन्मध्ये लङ्कारचिन्तनमिति । एवं प्रणवोच्चारणेन जीवानयनमिति मतान्तरम् । विसर्गनाशिकामिनीति । विसर्ग उपसर्गः, कामोद्वेग इति यावत्, तं नाशयितुं शीलं यस्याः सा कुण्डलिनी । पत्यौ पदे सहस्रदल-कमलस्थ-बिन्दुमयशिवे गमनं साधकेन कार्यमिति शेषः । एतानि लङ्कार-ब्रह्म-कामदेव-डाकिनीशक्ति-घ्राणेन्द्रियाणि पृथ्वीं नीत्वा पृथिव्यां विलाप्य पृथिवीं गन्धतत्त्वे विलाप्य जीवात्मानं कुण्डलिनीं गन्धतत्त्वं प्रणवेनाकृष्य सोऽहंमन्त्रेण स्वाधिष्ठाने समानयेदिति शेषः । एवं सर्वत्र बोध्यम् । जीवं कुण्डलिनीं शब्दतत्त्वमाज्ञाचक्रे नीत्वा शब्दतत्त्वं तत्रस्थाहङ्कारे अहङ्कारं महत्तत्त्वे महत्तत्त्वं हिरण्यगर्भाख्यसूक्ष्मप्रकृतौ प्रकृतिं परबिन्दौ विलापयेत् । तदुक्तं **मन्त्रतन्त्रप्रकाशे**—

अहङ्कारे हरेद् व्योम सशब्दं तन्महत्यपि ।
महच्च सर्वशक्तीनामव्यक्ते कारणे परे ॥

सच्चिदानन्दरूपं यद् वैष्णवं कारणं परम् ।
पृथिव्यादिक्रमात् सर्वं तत्र लीनं विचिन्तयेत् ॥

इति । सर्वशक्तीनामव्यक्ते हिरण्यगर्भाख्य-सूक्ष्मप्रकृतौ महद्धरेत् । प्रकृतिञ्च परे परबिन्दुरूपकारणे हरेदित्यर्थः । अत्र—

**सहस्रारपद्मे सदनं स्थानं यस्य । परे उत्कृष्टे । अथवा परे स्थानस्वामिनि सर्वेषाम-धिकारिणी, संहारकारणत्वात् । तां कीदृशीम् ? इष्टफलं प्रददातीति इष्टफलप्रदाम् ।**

तन्त्रान्तरे—ध्यै चिन्तायां स्मृतो धातुश्चिन्तातत्त्वेन निश्चला ।
एतद्ध्यानमिह प्रोक्तं सगुणं निर्गुणं द्विधा ।
सगुणं वर्णभेदेन निर्गुणं केवलं तथा ॥

समाधिकालात् प्रागेवं विचिन्त्याऽतिप्रयत्नतः ।
स्थूलसूक्ष्मक्रमात् सर्वं चिदात्मनि विलापयेत् ॥

इत्याचार्यविधानात् स्थूलानां सूक्ष्मे लयः । पृथिव्यादिकमनाहतपर्यन्तं, तेषामुक्तक्रमेण लये पृथिव्याश्रितत्वेन पादघ्राणेन्द्रिययोः पृथिवीप्रपञ्च-समुदायस्य च पृथिवीस्थाने विलापनम् । एवं जलस्थाने पाणि-रसनेन्द्रिय-जलप्रपञ्चानाम् । वह्निस्थाने पायु-चक्षुरिन्द्रिय-वह्निप्रपञ्चानाम् । वायु-स्थाने उपस्थ-त्वगिन्द्रिय-वायु-प्रपञ्चानाम् । आकाशस्थाने वाक्श्रोत्रेन्द्रिया-काशप्रपञ्चानां लयः । आज्ञाचक्रे सूक्ष्ममहदहङ्कारादिकं तेषामुक्तक्रमेण कारणे लयः । ततः क्षकाराद्यकारान्तवर्णान् विलोमेन विलाप्य 'स्थूलसूक्ष्म-क्रमात् सर्वमि'त्यत्र सर्वमित्युपादानाद् ब्रह्ममात्रावस्थितये आज्ञाचक्रोर्ध्व-स्थित-पूर्वोपदर्शित-बिन्दुबोधिन्यादि-सकलकारणशरीरमपि विलोमेनाऽऽदि-कारणे परंबिन्दौ विलापयेदिति । तत्प्रकारमाह—

सङ्कल्प्यैवं ततो न्यासस्थानाद् वर्णांश्च संहरेत् ।
प्रतिलोमे ले क्ष-लयो लकारस्य हकारके ॥
ह-लयश्च सकारे च सलयश्च षकारके ।
क्रमेणैव-म-पर्यन्तं लयमुत्पाद्य यत्नतः ॥ इति ॥

तथा—तदर्णौ संहरेद बिन्दौ कलायां तं नियोजयेत् ।
तां नादेनान्तरं नादं नादान्ते संहरेत् पुनः ॥
तमुन्मन्यां समायोज्य विष्णुवक्त्रे नयेच्च ताम् ।
तं पुनर्गुरुवक्त्रे तु योजयेत् साधकोत्तमः ॥
ततश्च योजयेद् वर्णान्निलयेत् परमे शिवे ॥ इति ॥

'विष्णुवक्त्रे' पुंबिन्दौ ।

सूर्यबिन्दुर्मुखं प्रोक्तमधस्तादिन्दुपावकौ । इत्यादि—
बिन्दुः पुरुष इत्युक्तो विसर्गः प्रकृतिः स्मृता ।

इत्यादि-वचनयोरेकवाक्यतया तस्यैव वक्त्रत्वात् ।

नीत्वा तां पुंसि बिन्द्वात्मनि तमथ परात्मन्यथो कालतत्त्वे
तद्वै शक्तौ चिदात्मन्यपि च नयतु तां केवले धाम्नि शान्ते ।

**भगवतीं श्रीकाममाहात्म्यवतीम् । चैतन्यरूपां चेतनास्वरूपम् परां प्रकृष्टाम् । गुरो**

**अन्यत्रापि—मज्जीवब्रह्मणोरैक्यं सोऽहमस्मी[हं स्यादि]ति वेदनम् ।**

इति केशवाचार्यवचनैकवाक्यत्वाच्च। अत्र स्वस्वकारणे संहरणदर्शनात् नादान्तस्य व्यापकशक्तौ, तामुन्मन्यां, तां समन्यां, तां विष्णुवक्त्रे इति बोध्यम्। एवं प्रकारेण वर्णानां संहरणे षट्चक्राणां, संहारः, पद्मदलानां वर्णमयत्वात्। तदुक्तं **विश्वसारे**--

आदिवर्णात्मकं पत्रं पद्मानां परिकीर्त्तितम्॥

इति। अथ वर्णपद्मोभयसंहरणप्रकारमाह **सम्मोहनतन्त्रे**--

वादि-सान्तान् दलस्थार्णान् संहरेत् कमलासने।
तं षट्पत्रमये पद्मे बादिलान्ताक्षरान्विते॥
स्वाधिष्ठाने समायोज्य बोधयेदाज्ञया गुरोः॥ इत्यादि--

द्विपत्रे हक्षलसिते योजयित्वा ततः सुधीः।
तदर्णौ संहरेद् बिन्दौ तं कलायां नियोजयेत्॥

इत्यन्तवचनम्। ततश्च मूलकमले चतुर्वर्णं संहृत्य तत्पद्मं स्वाधिष्ठाने संहरेत्। एवंक्रमेणाऽऽज्ञाचक्रस्थ-हक्षपर्यन्तं संहृत्य तत्पद्मं बिन्दौ, बिन्दुं बोधिन्याम् एवं पूर्ववत् सर्वं परंबिन्दौ विलापयेदिति। एवञ्चाऽऽज्ञाचक्र-संहरणे तत्कर्णिकास्थ-हाकिनीतरलिङ्ग-प्रणवादीनां निराधारस्थित्य-सम्भवात् प्रकृतिपर्यन्त-संहरणानन्तरं तानपि परंबिन्दौ संहरेत्। शुद्धपद्म-सदने किम्भूते? **मोक्षे धामनि** मुक्तिसम्पादकस्थाने इत्यर्थः। योगीन्द्रं विशेषयति--**गुरुपादपद्मयुगलालम्बीति**। गुरूपदेशेनैव सर्वसिद्धिरित्य-तस्तत्पदाश्रितः सन्निति भावः। **समाधौ यत** इति। समाधिलक्षणमाह **कुलार्णवे**--

यदत्र नात्र निर्भासः स्तिमितोदधिवत् स्मृतम्।
स्वरूपशून्यं यद् ध्यानं तत् समाधिर्विधीयते॥

तथान्यत्र--समत्वभावना नित्यं जीवात्म-परमात्मनोः।
समाधिमाहुर्मुनयः प्रोक्तमष्टाङ्गलक्षणम्॥ इति॥

"योगश्चित्तवृत्तिनिरोधः" इति **पातञ्जलसूत्रम्**। तस्मिन् यतः तदभ्यास-युक्त इत्यर्थः॥ ५२॥

**पादपद्मयुगलालम्बी योगीशः एवंक्रमेण भावयेदिति सम्बन्धः। समाधौ ध्यानधारणादौ यतः॥ ५२॥**

तन्निर्गुणमिदम्। इत्यादि॥ ५२॥

कुण्डलिन्या मूलाधारे प्रत्यावर्त्तनप्रकारः

**लाक्षाभं परमामृतं परशिवात् पीत्वा पुनः कुण्डली**
**नित्यानन्दमहोदयात् कुलपथान्मूले विशेत् सुन्दरी ।**

उक्तप्रकार-सकलयोगचिन्तनान्तरं यत् कर्त्तव्यं तदाह—**लाक्षाभमिति** । अस्यार्थः—कुण्डलिनी सुन्दरी **परशिवात् परमामृतं पीत्वा** नित्यानन्दमहोदयान्निःसृत्य कुलपथात् चित्रिणीनाडीमध्यस्थ-ब्रह्मपथं प्राप्य मूले मूलाधारे पुनः प्रविशेदित्यन्वयः । **पीत्वेति** पूर्वोक्त-तत्तद्ध्यानानन्तरं शिवशक्तयोः सामरस्यं विभाव्य सामरस्यानन्देन परशिवादुत्पन्नपरमामृतेन कुण्डलिनीं तर्पयेत् । तत् तर्पणामृतं पीत्वेत्यर्थः ।

**लाक्षाभमिति । इदानीमस्या आगमनं स्वस्थाने इति तदाह । सा कुण्डलिनी पूर्णा-**

ततो लाक्षाभं रक्तवर्णं परमामृतं कुण्डलिनी पीत्वा पूर्णानन्दमहोदयात् परशिवात् शिवसकाशात् प्राक्प्रतिपादितोन्मयादिसृष्टिमार्गेण कुलपथात् कुलपथमारुह्य ब्रह्मारुह्य मूलाधारे स्वस्थाने प्रविशेत् । ततो योगी तद्दिव्यामृतधारया योगपरम्पराप्राप्तया ब्रह्माण्डस्थितं शरीरस्थं दवतं डाकिन्यादिकं प्रीणयेत् । श्रीनाथवक्त्रादिति यदुक्तं तत् **गोरक्षसंहितादौ** स्पष्टीकृतम् । यथा—

प्रबुद्धा वह्नियोगेन मनसा मरुता हुता ।
सूचीव गुणमादाय ब्रजत्यूर्ध्वं सुषुम्णया ॥
ज्वलन्ती भुजगाकारा पद्मतन्तुनिभा शुभा ।
उद्घाटयेत् कवाटञ्च यथा कुञ्चिकया दृढम् ॥
कुण्डलिन्या तथा योगी ब्रह्मद्वारं प्रभेदयेत् ॥

कृत्वा संपुटितौ करौ दृढतरं बद्ध्वा तु पद्मासनं
गाढं वक्षसि सन्निधाय चिबुकं ध्यानञ्च तच्चेतसि ।
वारं वारमपानमूर्ध्वमनिशं प्रोत्सारयन् पूरयन्
प्राणं मुञ्चति मोक्षमेति शनकैः शक्तिप्रभावाद् यतः ॥

कुञ्चिकया कुलुपकारीत्याख्यया । **निर्वाणपद्धत्यामपि**—

आदौ पूरकयोगेन स्वाधारे योजयेन् मनः ।
गुदमेढ्रान्तरे योनिस्तामाकुञ्च्य प्रबोधयेत् ॥
भ्रमद्योनिगतं ध्यायेत् कामं बन्धूकसन्निभम् ।
ज्वलत्कालानलप्रख्यं तडित्कोटिसमप्रभम् ॥
तदूर्ध्वे तु शिखा सूक्ष्मा चिद्रूपा परमा कला ।
तया सहितमात्मानमेकीभूतं विचिन्तयेत् ॥

**तद्दिव्यामृतधारया स्थिरमतिः सन्तर्पयेद् दैवतं**
**योगी योगपरम्पराविदितया ब्रह्माण्डभाण्डस्थितम् ॥ ५३ ॥**

साङ्गत्यं तु तयोः कृत्वा पाययित्वा परमामृतम् ।

इति पूर्वोक्तवचने 'पाययित्वे'त्यनेन पानकार्यप्रेरणबोधनात् ।

अमृतं विशेषयति-**लाक्षाभमिति** । अलक्तरसवद्रक्ताभमित्यर्थः । **नित्यानन्दमहोदयादिति** । नित्यानन्दस्य महोदये महाप्रकाशो यत्र तस्मादित्यर्थः । मूले--**विशेदिति** । येन प्रकारेणोत्तानन पुनस्तेन प्रकारेण मूलाधारे आनयनम् । तेन यदा लिङ्गादिभेदक्रमेणोर्ध्वं गच्छति तदा तद्रूपेणैव पुनराधारमायाति । यदुक्तं **श्रीमदाचार्यस्वामिना**—

**नन्दस्य महान् उदयो यस्मात् परमशिवात् सदाशिवात् परमामृतं पीत्वा तेनैव कुलपथेन**

गच्छन्ती ब्रह्ममार्गेण लिङ्गभेदक्रमेण तु ।
अमृतं यद्विसर्गस्थं परमानन्दलक्षणम् ॥
द्रुतरक्तं तेजसाढ्यं धारापातप्रवर्षणम् ।
पीत्वा कुलामृतरसं पुनरेव कुलं विशेत् ॥

सा च प्राणः समाख्यातस्तन्त्रेऽस्मिन् परमेश्वरि ।
एवमभ्यस्यमानस्य अहर्निशनिबन्धनात् ।
चतुर्विधा तु या सृष्टिरस्यां योनौ प्रजायते ॥

पुनः प्रलीयते तस्यां कालाग्न्यादिशिवान्तिकम् ।
योनिमुद्रा परा सा तु बन्धस्तस्याः प्रकीर्त्तितः ॥

चतुर्विधेति **नैयायिकमते** पुरुषात् **सांख्यमते** प्रकृतिपुरुषाभ्यां **पातञ्जलमते** प्रकृतितः **मीमांसामते** अदृष्टात् सृष्टिः । तत्र योगो द्विविधः । यथा **शारदायाम्**—

पिण्डं भवेत् कुण्डलिनी शिवात्मा पदञ्च हंसः सकलान्तरात्मा ।
रूपं भवेद् बिन्दुरमन्दकान्तिरतीतरूपं शिवसामरस्यम् ॥
पिण्डादियागं शिवसामरस्यात् सबीजयोगं प्रवदन्ति सन्तः ।
शिवे लयं नित्यगुणाभियुक्तं निर्बीजयोगं फलमव्यपेक्षम् ॥ इति ॥

**तथान्यत्र**--दिक्कालादिविवर्जिते परशिवे चैतन्यमात्रात्मके ।
इत्यादि । **स्वच्छन्दसंग्रहेऽपि**—

पिण्डं कुण्डलिनी शक्तिः पदं हंसः प्रकीर्त्तितः ।
रूपं बिन्दुरिति ख्यातं रूपातीतस्तु चिन्मयः ॥

**तन्त्रान्तरेऽपि**--पिण्डे युक्ताः पदे युक्ता रूपे युक्ता षडाननः ।
रूपातीते तु ये युक्तास्ते मुक्ता नात्र संशयः ॥

**मतभेदे अनेकानि पद्मान्याह स्वच्छन्दसंग्रहेऽपि**—

अधश्चोर्ध्वं सुषुम्णायाः सहस्रदलसंयुतम् ।
रक्तं श्वेतञ्च साहस्रदलस्थं शक्तिसंयुतम् ॥

सुधाधारासारैश्चरणयुगलान्तर्विगलितैः
प्रपञ्चं सिञ्चन्ती पुनरपि रसाम्नायमहसा ।
अवाप्य स्वां भूमिं भुजगनिभमध्युष्टवलयं ।
स्वमात्मानं कृत्वा स्वपिषि कुलकुण्डे कुहरिणी ।।

इति । अत्र श्लोके--रसाम्नायमहसे'ति । आम्नायते कथ्यते विधीयत इति यावत्, तेनाम्नायो विधानम् । महः प्रकाशः । पुन'रित्यनेन पूर्वरूपरस-विधानप्रकाशेन स्वां भूमिं मूलाधारमवाप्य इत्यर्थात् तथा प्रतीयते । लय-क्रमेण गमने तु पुनः सृष्टिक्रमेणाऽऽगमनम् ।

तदुक्तं यथा--ततः सा कुण्डली शक्तिर्मुद्राकारा सुरेश्वरी ।
पुनस्तेन प्रकारेण गच्छत्याधारपङ्कजे ।।

**मूले मूलाधारपद्मे । सा कीदृशी ? सुन्दरी । अमृतं कीदृशम् ? लाक्षाभं रजःसम्बन्धात्,**

ऊर्ध्वाधो मुखमूलन्तु कर्णिकाकेशरान्वितम् ।
शक्तिरूपं महादेवि कुलाकुलमयं शुभम् ।।
पङ्कजद्वयमीशानि स्थित शाश्वतमव्ययम् ।
तयोर्मध्ये सुषुम्णान्तस्त्रिशदाधारपङ्कजम् ।।
शक्तिरूपं शिवाकारं सर्वाध्यासं निजालयम् ।

नीत्वेति शेषः । तथा कियत् कियदूर्ध्वे पङ्कजानि । तदाह तत्रैव--

आधारपङ्कजस्योर्ध्वे सार्द्धद्वयङ्गुलकोपरि ।
तैजसं साष्टपत्रञ्च पीतकर्णिकया युतम् ।।
हृल्लेखा कर्णिकामध्ये स्थिता लिङ्गादिदेवता ।
एतस्माद् द्वयङ्गुलस्योर्ध्वे स्वाधिष्ठानं षडस्रकम् ।।
आप्यञ्च राकिणीशक्ति-पूर्वाभिः शक्तिभिर्युतम् ।
ततश्च भावयेद् देवि नाभिमष्टाङ्गुलोपरि ।।
तत् पद्मं मणिपूरञ्च दशपत्रं सुशोभितम् ।
लाकिनीपध्यगं तच्च तामर्थादाभिरावृतम् ।।
चतुर्दशाङ्गुलादूर्ध्वे मणिपूराख्यपङ्कज त् ।
पङ्कजं काकिनीमध्यं वायव्यं द्वादशारकम् ।।
तत्रस्थकालरात्र्यादिशक्तिभिश्च समावृतम् ।
तत्रस्थसूर्यबिम्बे च नादो यानादिपीठकम् ।।
एकादशाङ्गुलादूर्ध्वं विशुद्धं षोडशच्छदम् ।
मध्यगा शाकिनी बाह्यपत्रेषु परमेश्वरि ।।
अमृताद्यक्षरान्तास्था चन्द्रबिम्बं तदूर्ध्वगा ।
कण्ठोर्ध्वे परमेशानि लम्बिका चतुरङ्गुली ।।

इति । तथा **भूतशुद्धिप्रकरणे**—

परात्मनः पृथिव्यादि तद्वत् तत्त्वानि च क्रमात् ।
जीवं कुण्डलिनीं चापि स्वस्थानं प्रापयेत् क्रमात् ॥ इति ॥

विशेषस्तु—प्रकाशमाना प्रथम-प्रयाणे प्रतिप्रयाणेऽप्यमृतायमाना ॥इति॥ तदनन्तरं **तद्दिव्यामृतधारया** पूर्वदर्शित-शिवशक्तिसामरस्योत्पन्न-परमामृतस्य ब्रह्मरन्ध्राद् मूलाधारपर्यन्त-गलितधारया । अत एवोक्तं तृतीयश्लोके—"ब्रह्मद्वारं तदास्ये प्रविलसति सुधाधारगम्यप्रदेशम्" इति । **स्थिरमतिः** स योगी । दैवतमिष्टदैवतं षट्चक्रस्थडाकिन्यादिदैवतं च संतर्पयेदित्यर्थः ।

**ईदृशी भावनैव कर्त्तव्या, महाग्रन्थोक्तत्वात् । अतो योगी ध्यानपरम्पराक्रमेण ज्ञातया**

आज्ञाचक्रं द्विपत्राब्जं हक्षद्विदलसंयुतम् ।
हंसवती क्षमा पार्श्वद्वये मध्ये तु हाकिनी ॥

तन्त्रान्तरे ब्रह्मणः स्वाधिष्ठानमुक्तं यथा—

स्वाधिष्ठानं षड्दलोपेतमुद्यद्विद्युत्प्रेक्षं वादिलान्तैश्च वर्णैः ।
युक्तं सावित्रीसहितं विरिञ्चिं ध्यायेदस्मिन् राकिणीं देवताञ्च ॥

**योगिनीहृदये**—एताश्चतस्रः शक्तयस्तु का पू जा उ इति क्रमात् ।
पीठाः कन्दे पदे रूपे रूपातीते क्रमाद् विदुः ॥

एतास्तत्र पूर्वोक्ता अम्बिकादयश्चतस्रः कामरूपादिपीठत्वेन परिणताः तथा च मूलाधारे कामरूपं, हृदि पूर्णगिरिः भ्रूमध्ये जालन्धरः, सहस्रारे उड्डीयानः । न च 'एकमेवाद्वितीयं ब्रह्म" इत्यादि श्रुत्या ब्रह्मण एकत्वमभिहितम् । शक्तिस्तावत् केति चेत् ? तद्ब्रह्मशिवशक्तिसामरस्यपरत्वमेव । यथा **कुलार्णवे**—

अद्वैतं केचिदिच्छन्ति द्वैतमिच्छन्ति चापरे ।
मम तत्त्वं न जानन्ति द्वैताद्वैतविवर्जितम् ॥

**स्वच्छन्दसंग्रहेऽपि**—अनयोः सामरस्यं यत् परस्मिन् महसि ध्रुवम् ।

**कूर्मपुराणे** ईश्वरगीतायां शिववाक्यम्—

एकया मम सायुज्यमनादिनिधनं स्फुटम् ।
पुंसोऽभूदन्यया भूतिमन्यया तत्तिरोहितम् ॥

एकया मायात्मिकया शक्त्या विशिष्टस्य मम अनादिनिधनं सायुज्यं सहयोगं अर्द्धनारीश्वरात्मकमभूत् । अन्यया आद्यया ज्ञानात्मिकयेति यावद् विशिष्टपुंसो भूतिमुत्पत्तिं जानीहि । अन्यथा चिच्छक्त्या तत्तिरोहितं, तयैव क्षणे तिरोहितम्, ब्रह्माविनाभूतम् । अत एव **तैत्तिरीयवाक्यम्**—

यत् तु मे निष्कलं रूपं चिन्मात्रं केवलं शिवम् ।
सर्वोपाधिविनिर्मुक्तमनन्तममरं परम् ॥

**कलिकापुराणेऽपि**—चितिशक्तिं निराकारां परंब्रह्मस्वरूपिणीम् ॥

तेनाऽमृतेन देवेशि तर्पयेत् परदेवताम् ।
षट्चक्रदेवतास्तत्र संतर्प्याऽमृतधारया ॥

इति पूर्वोक्तवचनात् । अमृतधारायां विशेषयति—**योगपरम्पराविदितयेति** । योगस्य गुरूपदेशपरम्पराप्राप्तत्वाद् योगपरम्परेत्युक्तिरिति भावः । तेन गुरूपदेशपरम्पराविदितयेति फलितार्थः । अमृतं विशेषयति-**ब्रह्माण्डभाण्डस्थित**मिति । ब्रह्माण्डस्य भाण्डमाधारपात्रं कुण्डलिनी, तस्याः सर्वेषां योनिरूपत्वात् तत्र स्थितं कुण्डलिनीपात्रस्थितमित्यर्थः ॥ ५३ ॥

**तद्दिव्यामृतधारया स्थिरमतिः सन् ब्रह्माण्डभाण्डस्थितं सर्वदैवतं सन्तर्पयेत् ॥ ५३ ॥**

जन्मखण्डे राधिकां प्रति कृष्णवाक्यम्—

यदा तेजःस्वरूपोऽहं तेजोरूपाऽसि त्वं तदा ।
न शरीरी यदाहञ्च तदा त्वमशरीरिणी ॥

तन्त्रेऽपि—न शिवेन विना शक्तिः न शक्त्या रहितः शिवः ।
अतस्तयोरभेदश्च चन्द्रचन्द्रिकयोरिव ॥

वेदान्तेऽपि "चिच्छक्तिर्ब्रह्माश्रिता ।" तथा—

मायोपाधिविनिर्मुक्तं शुद्धमित्यभिधीयते ।
मायासम्बन्धतश्चेशो जीवोऽविद्यावशस्तथा ॥

इत्युक्तम् । तदेव सामरस्यं परंब्रह्म सगुणशिव-शक्त्यादिनानारूपेण परिणमते । यथा

**विश्वसारे**—कालेन प्रेरयेन् मायां सृष्टेरुत्पत्तिहेतवे ।
या मूलप्रकृतिः प्रोक्ता सा माया परिकीर्त्तिता ॥
योऽयं सदाशिवः प्रोक्तः स एव पुरुषः परः ।
एकं ब्रह्म द्विधा भूत्वा सृष्टिरेषा विधीयते ॥
अर्द्धेन वनिता भूत्वा अर्द्धेन पुरुषस्तथा ।
तावुभौ च समौ कृत्वा सृष्टिव्यक्तिं नयेत् सुधीः ॥

मायावच्छिन्नेश्वरस्य षडङ्गान्याह **कूर्मपुराणादौ**—

सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः ।
अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य ॥ ५३ ॥

नारायणो वैदिकश्च भट्टाचार्यः समीरितः ।
तस्यात्मजो वामदेवभट्टाचार्यस्तथैव च ।
तस्यात्मजो विश्वनाथस्तेनेयं रचिता मुदा ॥

षट्चक्रयोगक्रमज्ञानफलम्

**ज्ञात्वैतत् क्रममुत्तमं यतमना योगी यमाद्यैर्युतः**
**श्रीदीक्षागुरु - पादपद्म - युगलामोदप्रवाहोदयात् ।**
**संसारे न हि जन्यते न हि कदा संक्षीयते संक्षये**
**नित्यानन्दपरम्पराप्रमुदितः शान्तः सतामग्रणी ॥ ५४ ॥**

षट्चक्रश्लोकाध्ययनफलम्

**योऽधीते निशि सन्ध्ययोरथ दिवा योगी स्वभावे स्थितो**
**मोक्षज्ञाननिदानमेतदमलं शुद्धञ्च गुप्तं परम् ।**
**श्रीमत् श्रीगुरुपादपद्मयुगलालम्बी यतान्तर्मना-**
**स्तस्यावश्यमभीष्टदैवतपदे चेतो नरीनृत्यते ॥ ५५ ॥**

उक्तयोगक्रमज्ञानफलमाह—ज्ञात्वैदिति । **श्रीदीक्षागुरुपादपद्मयुगला-मोदप्रवाहोदयादिति** । आमोद आनन्दस्तस्य प्रवाहोऽविच्छिन्नोत्तरसम्बन्ध-स्तेन नित्यानन्द इति यावत्, तस्योदयो यस्मात् तादृशपादपद्मयुगलाज् ज्ञात्वेत्यर्थः । दीक्षागुरुरिति । प्रथमोपस्थितत्वेन गौरवातिशयेन च तद्ग्रहणम् । तदभावे अन्यगुरोरपि ज्ञातव्यम् ।

अत एवोक्तम्—मधुलुब्धो यथा भृङ्गः पुष्पात् पुष्पान्तरं व्रजेत् ।
ज्ञानलुब्धस्तथा शिष्यो गुरोर्गुर्वन्तरं व्रजेत् ।

इति **नित्यानन्दपरम्पराप्रमुदित** इति । नित्यानन्दधारारूप-हर्षयुक्त इत्यर्थः । सतां योगिरूपप्रशस्तजनानामग्रगण्य इत्यर्थः ॥ ५४ ॥

षट्चक्रश्लोकाध्ययनफलमाह—योऽधीत इति । **स्वभावे स्थित** आत्म-भावे नियुक्त इत्यर्थः । **यतान्तर्मना** इति । यतं योगाभ्यासेन स्थिरीकृत-मन्तरात्मनि मनो येन तादृश इत्यर्थः । स्पष्टमन्यत् ॥ ५५ ॥

इति श्रीपूर्णानन्दयतिविरचित श्रीतत्वचिन्तामण्यन्तर्गत-षट्चक्रविवरण-श्लोकार्थपरिष्कारिणी-व्याख्या समाप्ता ।

ज्ञात्वैतदिति । एतदुत्तमं क्रमं ज्ञात्वा संयतमनाः सन् योगी जनो यमाद्यभ्यासेषु श्रीदीक्षागुरुपादपद्मयुगलामोदप्रवाहोदयात् संसारे न हि जन्यते । न हि कदा संक्षये संक्षीयते । प्रलयेऽपि तस्य क्षयो नास्तीत्यर्थः । स कीदृशः ? पूर्णानन्दपरम्परया प्रमुदितं स्वान्तर्यस्य स तथा । सतामग्रणीरपि भवति ॥ ५४ ॥

योऽधीते इति । अथैतत् सुगुप्तक्रमं यः स्वीयभावस्थितः सन् निशि सन्ध्ययोर्दिवा अधीते तस्याऽवश्यमेव अभीष्टदैवतपदे चित्तं मुहुर्नृत्यति । यतं निश्चलम् अन्तर्मनो यस्य स तथेति ॥ ५५ ॥

इति श्रीमच्छङ्करकृतषट्चक्रभेदटिप्पणी समाप्ता ।

इति श्रीविश्वनाथकृतविवृताख्यटीका समाप्ता ।

●

॥ श्रीः ॥

श्रीपूर्णानन्दयतिविरचितम्

# षट्चक्रनिरूपणम्

सविमर्श'प्रह्लाद'हिन्दीव्याख्यासहितम्

आत्मा त्वभिज्ञातनिजस्वभावः
पूर्णत्वमाप्तो गतमोहशोकः ।
देहस्थितत्वं गगनाद्यशेषं
स्वव्यापकैकत्वमुपेत्य चास्ते ।।

योऽयं शिवोऽस्ति सर्वात्मा सर्वाकृतिस्वभावकः ।
तस्मिन् मयि कुतो भेदः कथं कस्माद्भवेदपि ।।

॥ श्रीः ॥

# षट्चक्रनिरूपणम्

## सविमर्श'प्रह्लाद'हिन्दीव्याख्यासहितम्

### योगनिरूपण करनेकी प्रतिज्ञा

**अथ तन्त्रानुसारेण षट्चक्रादिक्रमोद्गतः ।**
**उच्यते परमानन्द-निर्वाह-प्रथमाङ्कुरः ॥ * ॥**

---

इसके अनन्तर मैं ( पूर्णानन्द यति ) तन्त्रके अनुसार षट्चक्रादिक्रमघटित परमानन्द ब्रह्मकी ज्ञानप्राप्तिके लिए प्रथमकारणीभूत कर्मके स्वरूपको कहता हूँ ।

**विमर्श**—ग्रन्थकार श्री पूर्णानन्द यतिने प्रथम श्लोकमें ही योगनिरूपणकी प्रतिज्ञा करते हुए सर्वप्रथम मङ्गलस्वरूप आनन्तर्यार्थक **'अथ'** शब्दका प्रयोग किया है । यदि अथ शब्द आनन्तर्यार्थक है तो प्रश्न उठता है कि किसके अनन्तर ? कहते हैं—**'षट्चक्रनिरूपणम्'** श्री पूर्णानन्द यति विरचित 'तत्त्वचिन्तामणि' नामक ग्रन्थका षष्ठ अध्याय है । इससे पूर्ववर्ती पाँच अध्यायोंमें जैसे—( १ ) प्रथम अध्यायमें तत्त्वबोध, ( २ ) द्वितीय अध्यायमें दीक्षाकी विधियाँ, ( ३ ) तृतीय अध्यायमें दीक्षाके लिए स्थानका निर्णय, कूर्मचक्र, वास्तुयाग, विघ्ननाशक मण्डल तथा मण्डलमें पूजे जानेवाले देवताओंके मन्त्र, ( ४ ) चतुर्थ अध्यायमें सम्बन्धित मण्डपोंके निर्माणका विधान तथा ( ५ ) पञ्चम अध्यायमें दीक्षासे सम्बन्धित देवताओंके स्थान एवं पूजाविधिसे सम्बन्धित कुम्भोंके आकार तथा धातुका निर्णय है । इन पाँचों अध्यायोंसे यह विदित होता है कि विधिपूर्वक गुरुसे दीक्षा ग्रहणके अनन्तर ही उनके निर्देशानुसार कुण्डलिनी ज्ञान प्राप्त करे, अतः ग्रन्थकारने आनन्तर्यार्थक अथ शब्दका प्रयोग किया है । **षट्चक्रादिक्रमोद्गतः**—शरीरके अन्दर छः चक्र हैं; जैसे—( १ ) मूलाधार, ( २ ) स्वाधिष्ठान, ( ३ ) मणिपूर, ( ४ ) अनाहत, ( ५ ) विशुद्ध तथा ( ६ ) आज्ञा चक्र । **'आदि'** पदसे सहस्रदल-कमल अर्थात् सहस्रारका ग्रहण होता है । **'क्रम'** शब्दसे यहाँपर क्रमशः चक्रादिके भेदन करनेका निर्देशन है । **परमानन्दनिर्वाहप्रथमाङ्कुरः**—परमानन्द ब्रह्म है । **'निर्वाह'** शब्दका अर्थ है—ज्ञानप्राप्ति होना अर्थात् उसका साक्षात्कार होना । उस

